श्रीमद्भगवत्पतञ्जलिमुनिविरचितं

# व्याकरणमहाभाष्यम्

महामहोपाध्याय श्रीनागोजिभट्टविरचितमहा-
भाष्यप्रदीपोद्द्योतोद्भासितेन महामहो-
पाध्यायश्रीकैयटोपाध्याय-
विरचितेन प्रदीपेन
विराजितम्

सम्पादकः
श्रीगुरुप्रसादशास्त्री




प्रतिभा प्रकाशन, दिल्ली

a reproduction of earlier edition of Vyākaraṇa Mahābhāṣya first
published in 1938 edited by Pt. Nand Kishore Shastri, Varanasi

श्रीमद्भगवत्पतञ्जलिमुनिविरचितं

# व्याकरणमहाभाष्यम्

महामहोपाध्याय श्रीनागोजिभट्टविरचितमहा-
भाष्यप्रदीपोद्द्योतोद्भासितेन महामहो-
पाध्यायश्रीकैयटोपाध्याय-
विरचितेन प्रदीपेन
विराजितम्

तस्यायं-

## सप्तमोऽध्यायः

पण्डितराजश्रीस्नेहिरामशास्त्रिणां पौत्रेण, न्यायाचार्य पण्डित
श्री शिवनारायणशास्त्रिणां पुत्रेण, श्रीगुरुप्रसादशास्त्रिणा
व्याकरणाद्याचार्येण महता परिश्रमेण संशोधितं,
टिप्पण्या संयोजितञ्च




प्रतिभा प्रकाशन, दिल्ली

If any defect is found in this book please return the copy by V.P.P.
to the publisher for exchange free of cost and / or postage

...e publication has been brought out with financial asistance from Rashtriya Sanskrit Sansthan New Delhi

प्रथम संस्करण - 1938

पुनर्मुद्रण - 1999

ISBN : 81-85268-91-6 (सैट)

मूल्य : रू. 375/- (9 भाग)
(रुपये तीन सौ पचहत्तर प्रति सैट (नौ भाग)

प्रकाशक
प्रतिभा प्रकाशन
(प्राच्य-विद्या-प्रकाशक एवं पुस्तक विक्रेता)
29/5, शक्ति नगर, दिल्ली - 110007
दूरभाष : 7451485

मुद्रक :
तरुण आफसैट प्रैस, दिल्ली

by V.P.P.
stage

*stance*

reproduction of earlier edition of Vyākaraṇa Mahābhāṣya first published in 1938 edited by Pt. Nand Kishore Shastri, Varanasi

PATAÑJALI'S

# VYĀKARAṆA MAHĀBHĀṢYA

WITH

KAIYAṬA'S *PRADĪPA*

AND

NĀGOJIBHAṬṬA'S *UDDYOTA*

With the Notes

By

Pt. Guruprasad Shastri

## (VIIth Adhyāya)




Pratibha Prakashan
Delhi

If any defect is found in this book please return the copy by V.P.P. to the publisher for exchange free of cost and / or postage.

*The publication has been brought out with the financial asistance from Rashtriya Sanskrit Sansthan New Delhi*

Ist Edition in 1938

Reprinted in 1999

ISBN : 81-85268-91-6 (for set)

Rs. 375/- Set For 9 vols.

(Rs. Three hundred seventy five only for nine vols.)

*Published by :*

**Pratibha Prakashan**

(Oriental Publishers & Booksellers)

29/5, Shakti Nagar

Delhi-110007

Phone : 7451485

*Printed at :*

Tarun Offset Printers, Delhi

॥ श्रीः ॥

श्रीमद्भगवत्पतञ्जलिमुनिविरचितं–

# व्याकरण-महाभाष्यम्

उद्द्योतोद्भासितप्रदीपविराजितम् ।

## सप्तमाध्यायस्य प्रथमः पादः ।

### तस्यैव प्रथममाह्निकम्

### युवोरनाकौ ॥ ७।१।१ ॥

**युवोरनाकावित्युच्यते कयोर्युवोरनाकौ भवतः ? ॥ प्रत्यययोः ॥ कथं**

---

**प्रदीपः]** **युवोरनाकौ** । इह 'युवो'रिति समाहारद्वन्द्वे 'युवुन' इति प्राप्नोति, इतरेतरयोगे तु 'युव्वो'रिति । तत्र सौत्रत्वान्निर्देशस्य नुममकृत्वोकारलोपं वा कृत्वा निर्देश इत्यदोषः । के चित्तु कर्मधारयं व्याचक्षते, अवयवधर्मेण समुदायस्य व्यपदेशात् । यथा 'समं चूर्णं' 'कृष्णैत' इति । एवं युश्चासौ समुदायो युवुलक्षणो वुश्चासाविति । तत्र समुदायस्याऽङ्गनिमित्तत्वाऽसंभवादवयवयोर्यथासङ्ख्यं कार्यविज्ञानम् । यथा च भाष्यं 'कयोर्युवो'रिति तथेतरेतरयोगे द्वन्द्व इति निर्णयः ॥ अतिप्रसङ्गं मत्वा पृच्छति–**कयोरिति** । **प्रत्यययोरिति** । अङ्गाधिकारादङ्गस्य निमित्ते यौ युवू तयोरनाकाविति सूत्रार्थाश्रयणात् ॥ कथं

---

**उद्द्योतः ]** **युवोरनाकौ** । 'युवो'रिति निर्देशानुपपत्तिमुद्भाव्य परिहरति— **इहेति** । नपुंसकत्वान्नुमः प्राप्तेरिति भावः । **युवोरिति** । ओसि यणादेशप्रसङ्गादिति भावः । आद्ये समाधत्ते—**नुममकृत्वेति** । सौत्रत्वादिति भावः । द्वितीये आह—**उकारलोपं वेति** । छान्दसो वर्णलोप इति भावः । **समं चूर्णमिति** । **चूर्ण**-कणस्य समुदायः । तत्राऽवयवसाम्यात्समुदायस्य तथा व्यपदेशः । 'कृष्णैत' इत्यत्रावयवयोः कृष्णैतत्वात्समुदायस्य तथा व्यपदेशः । वर्णो वर्णेने'ति समानाधिकरणसमासः । नन्वेवं समुदायस्याऽनाऽकौ स्यातामत आह—**तत्रेति** । **यथा चेति** । छान्दसश्च वर्णलोप इति तद्भावः । **अतिप्रसङ्गमिति** । 'युत्वा'

पुनरङ्गस्येत्यनुवर्त्तमाने प्रत्यययोः स्याताम् ? ॥ युशब्दवुशब्दान्तमेतद्विभक्तावङ्गं भवति ॥ यदि युशब्दवुशब्दान्तस्याऽङ्गस्यानाकौ भवतः, सर्वादेशौ प्राप्नुतः ॥ 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यतः ॥ यत्र तर्हि विभक्तिर्नास्ति-नन्दना[1] कारिकेति ? ॥ अत्रापि प्रत्ययलक्षणेन विभक्तिः ॥ यत्र तर्हि प्रत्ययलक्षणं नास्ति-नन्दनप्रियः कारकप्रिय इति ॥

मा भूतां यासौ सामासिकी विभक्तिस्तस्याम्[2], यासौ समासाद्विभक्तिस्तस्यां भविष्यतः ॥ [3]न[4] वैतस्यां युशब्दवुशब्दान्तमङ्गं भवति ॥ भवेद्यो[5] युशब्दवुशब्दाभ्यामङ्गं विशेषयेत्तस्यानन्त्ययोर्न स्यातां, वयं खल्वङ्गेन युशब्दवुशब्दौ विशेषयिष्यामः,-'अङ्गस्य युवोरनाकौ भवतो यत्र तत्रस्थयो'रिति ॥

यत्र तर्हि समासाद्विभक्तिर्नास्ति-नन्दनदधि कारकदधि ? ॥ एवं तर्हि-

प्र.] **पुनरिति** । अङ्गस्येत्यधिकारादङ्गस्यैव कार्यित्वं युक्तमिति भावः । सिद्धान्तवादिना तु वैयधिकरण्येन संबन्धो दर्शयितव्यः । संप्रति तु सामानाधिकरण्येन संबन्धमाश्रित्य समाधीयते-**युशब्दवुशब्दान्तमिति** । कृत्तद्धितान्तत्वाद्युवुशब्दान्तस्य प्रातिपदिकत्वाद्विभक्तावुत्पन्नायां सत्यङ्गत्वेऽनाकौ क्रियेते इत्यर्थः । **यत्र तर्हि विभक्तिर्नास्ति नन्दना कारिकेति** । लौकिके प्रयोगेऽत्यन्तमत्र विभक्तेरभावः । अत्राहुः-विभक्तावुत्पन्नायामनाऽकयोः कृतयोरकारान्तलक्षणेन टापा भाव्यं, ततो हल्ङ्यादिलोपेनेत्यानुपूर्व्या सिद्धमेतत्, यथा-'या' 'से'ति, ततश्चाऽग्रन्थोऽयमिति । 'नन्दनकारके'ति पाठो युक्तः । 'नन्द् यु स्' इति स्थिते संबुद्धिगुणे कृतेऽकृते वा नित्यत्वादेङ्ह्रस्वात्संबुद्धेरिति लोपे कृतेऽङ्गत्वाऽभावादनाऽकाऽप्रसङ्गः । **नन्दनप्रिय इति** । 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति लुकि कृते 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधादनाऽकयोरप्रसङ्गः । **भवेदिति** । विशेषणविशेष्यभावे कामचारादङ्गेन युवू विशेष्येते । न च तावङ्गान्तौ संभवतः । न च विशेष्येण तदन्तविधिर्भवतीति युवुभ्यां तदन्तविध्यभावाद्यत्र तत्र स्थितयोरङ्गावयवोर्युवोरनाऽकौ भवतः [ इति ] । **नन्दनदधीति** । 'स्वमोर्नपुंसका'दिति लुकि नित्यत्वात्कृते

उ.] 'भुज्यु'रित्यादौ । **अङ्गस्यैवेति** । युवुशब्दान्तस्याङ्गस्येत्यर्थ इति भावः । यद्यपि सिद्धान्तिनो वैयधिकरण्यसम्बन्धोऽभिमतस्तथापि शिष्यबुद्धिपरीक्षार्थं तदनाश्रयणेन परिहरतीत्याह—**सिद्धान्तवादिना त्विति** । ननु शास्त्रतोऽत्र विभक्तिरस्त्येवेत्यत आह—**लौकिके इति** । **नित्यत्वादिति** । अकृते गुणे ह्रस्वान्तत्वात्कृते एङन्तत्वाल्लोपप्राप्तेरिति भावः । **अन्तरङ्गानपीति** । एतेनाऽन्तरङ्गत्वात्पूर्वमनाऽकाभ्यां भाव्यमित्यपास्तम् । नन्वङ्गस्य विशेषणत्वात्तदन्तविधिः स्यादत आह—**न च ताविति** । नापि युवुभ्यामित्याह—**न च विशेष्येणेति** । **नित्यत्वादिति** ।

१ 'हे नन्दन हे कारके'ति पाठान्तरम् । २ 'तस्याः' पा० । ३ अयं पाठः क्वाचित्कः । ४ 'नचैतस्यां' पा० । ५ 'भवेद्युशब्द' पा० ।

॥ * ॥ नवा परं निमित्तं संज्ञा च प्रत्ययलक्षणेन[2] ॥ * ॥ **न चेह[3] परं निमित्तमाश्रीयते-'अस्मिन्परतो युवोरनाकौ भवत' इति ॥ किं तर्हि ? ॥ 'अङ्गस्य युवोरनाकौ भवत' इति । अङ्गसंज्ञा च[4] भवति प्रत्ययलक्षणेन ॥**

**अथवा तयोरेव यदङ्गं तन्निमित्तत्वेनाश्रयिष्यामः ॥ कथम् ? ॥ अङ्गस्येति**

प्र.]'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधादादेशाऽप्राप्तिः । **न वा परमिति** । न हीह विभक्तिः, प्रत्ययान्तरं वा–परं निमित्तत्वेनोपात्तमिति प्रत्ययलक्षणत्वमनाऽकयोर्नास्तीति 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधस्याऽयमविषयः । केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते । अस्ति हि प्रत्ययलक्षणेनाऽङ्गसंज्ञा । नहि तस्यां विधीयमानायां 'न लुमताऽङ्गस्ये'ति प्रतिषेधः प्रवर्तते, लब्धाऽङ्गसंज्ञस्य कार्यान्तरे विधातव्ये स प्रतिषेधः प्रवर्त्तते । न चाऽङ्गसंज्ञाऽङ्गस्य कार्यमिति प्रतिषेधाऽभावः । ननु चाऽङ्गस्येत्यत्राऽऽसप्तमाध्यायपरिसमाप्तेरङ्गाधिकारे 'वव्रश्चे'त्यत्रोरदत्वस्य परनिमित्तकत्वात्स्थानिवद्भावे सति 'न संप्रसारणे संप्रसारण'मिति वकारस्य संप्रसारणप्रतिषेध उक्तः स इहत्येन 'न वा परं निमित्त'मित्यनेन ग्रन्थेन विरुध्यते; नास्ति विरोधो दर्शनभेदात्[6] । 'यथोद्देशं संज्ञापरिभाष'मिति पक्षमाश्रित्य 'न वा परं निमित्त'मित्याद्युक्तम् । 'कार्यकालं संज्ञापरिभाष'माश्रित्य 'वव्रश्चे'त्युक्तम् । तत्र हि पक्षे उरदित्यत्राऽङ्गसंज्ञासूत्रोपस्थानात्संनिहितः प्रत्ययो निमित्तत्वेनाऽऽश्रीयत इति परनिमित्तत्वं भवति ।

**अथ वेति** । भवतु कार्यकालपक्षस्तत्रापि न दोष इति भावः । **निमित्तत्वे-**

उ.] 'अन्तरङ्गानपीति न्यायाच्चे'त्यपि बोध्यम् । **प्रत्ययलक्षणत्वं**–प्रत्ययनिमित्तकत्वम् । **न चाङ्गसंज्ञेति** । 'न लुमता तस्मि'न्निति वार्तिकरीत्या प्राप्तेः । सूत्रेऽप्यङ्गपदं पूर्वोपलक्षणमेवेति चिन्त्यमेतत् । तस्मान्निषेधाऽनित्यत्वादङ्गसंज्ञा भवतीत्येव भाष्याशयः । **विरुध्यत इति** । उरदत्त्ववदस्यापि परनिभित्तत्वादिति भावः । **सन्निहित इति** । स च लक्ष्यानुरोधादावृत्त्याऽत्वस्या[7]ऽपि विशेषणमिति भावः । प्रकृते त्वावृत्त्या निमित्तत्वे न मानभित्येव भाष्याशयो युक्तः । यथोद्देशपक्षे तु सर्वथाऽसन्निधानमेवेति तत्पक्षेणैव भाष्यं योजितमुपाध्यायैः । **कार्यकालपक्ष इति** । आवृत्तेरप्युपलक्षणमिदम् । **अन्ये तु** यथोद्देशेऽपि संज्ञापरिभाषादेशे कार्याणां गमनमिति 'क्ङिति चे'ति सूत्रकैयटोक्तरीत्या सन्निधानं दुर्वारमिति भाष्याऽसङ्गतिरेव कैयटोक्तव्याख्याने इत्याहुः । **परे** त्वङ्गसंज्ञायाः परनिमित्तत्वेन तद्वाराऽत्वस्याऽपि परनिमित्तत्वमिति स्थानिवद्भावप्रवृत्तिरत्वस्य साक्षात्परनिमिकत्वाभावेऽपि । अत एवाऽजर्घा इत्यादावत्वसिद्धिरितीदं तच्च सममिति न कश्चिद्भाष्ययोर्विरोध-

१ 'नचाऽपरं' 'न वाऽपरं' पा० । २ नेदं वार्त्तिकं', भाष्यमेवेदमित्यन्ये । ३ 'न वेहाऽपरं' 'नवेह परं' पा० । ४ चकारः क्वाचित्कः । ५ 'निषेधः' पा० । ६ 'लक्षणभेदात्' पा० । ७ 'अत्वविशेषणं' पा० ।

संबन्धसामान्ये षष्ठी विज्ञास्यते,-अङ्गस्य यौ युवू ॥ किं चाङ्गस्य युवू ? ॥ निमित्तम् । ययोर्युवोरङ्गमित्येतद्भवति ॥ कयोश्चैतद्भवति ? ॥ प्रत्यययोः ।

॥ * ॥ युवोरनाकाविति चेद्धातुप्रतिषेधः ॥ * ॥ युवोरनाकाविति चेद्धातुप्रतिषेधो वक्तव्यः । युत्वा । युतः । युतवान्[1] । ॥ * ॥ भुज्य्वादीनां[2] च ॥ * ॥ भुज्य्वादीनाञ्च प्रतिषेधो वक्तव्यः । भुज्युः । कंयुः । शंयुः । ॥ * ॥ अनुनासिकपरत्वात्सिद्धम् । ॥ * ॥ [ अनु[3]नासिकपरत्वात्सिद्धमेतत् ॥

प्र.] नेति । अनाऽकादेशविधाने । संबन्धसामान्ये षष्ठीति । निमित्तनिमित्तिभावलक्षणश्च संबन्धोऽन्तरङ्गत्वादाश्रीयते । प्रत्ययनिमित्तत्वाच्चाऽङ्गव्यपदेशस्य प्रत्यययोरेव ग्रहणं विज्ञायते । धातुप्रतिषेध इति । नन्वधुनैवोक्तं प्रत्यययोर्ग्रहणमिति ?, सत्यमुक्तं, न तु लभ्यते । सामानाधिकरण्येन संबन्धसंभवे वैयधिकरण्यपक्षाश्रयणस्याऽयुक्तत्वात् । भेदे हि निमित्तनिमित्ति[4]भावो भवति । अभेदे च संभवति कथं भेद आश्रीयते । अथ वा भाष्यकारेण पूर्वं स्वातन्त्र्येणोक्तमिदानीं वार्त्तिकमवतारितमित्यदोषः ॥

भुज्य्वादीनाञ्चेति । भुज्य्वादीनां संबन्धिनः प्रत्ययस्येत्यर्थः । सत्यपि वैयधिकरण्येन संबन्धेऽतिप्रसङ्गः । भुज्युरिति । 'भुजिमृङ्भ्यां युक्त्युकौ चे'ति युक् प्रत्ययः । 'मृत्यु'रित्यत्र त्युः प्रत्ययो न युरिति मत्वा भाष्यकारेण 'मृत्यु'रिति नोदाहृतम् । कंयुरिति । 'कंशंभ्यां बभयुस्तितुतयस' इति युस् प्रत्ययः । ननु

उ.] प्रसङ्ग इत्याहुः । ननु 'युवोरङ्गनिमित्तत्व'मित्यङ्गस्य निमित्तत्वोक्तिरयुक्तेत्यत आह-अनाकेति । तयोरेव यद्रूपं 'यु'-'वु' इति, तदङ्गं प्रति निमित्तत्वेनाश्रयिष्याम इति भाष्यार्थ इति भावः । संबन्धान्तरस्याऽपि संभवादाह—अन्तरङ्गत्वादिति । शब्दयोश्च निमित्तनिमित्तिभावो वा, स्थान्यादेशभावो वा । तत्रान्त्यस्याऽसंभवादाद्यस्यैव ग्रहणमिति भावः । युक्त्यन्तरमाह—प्रत्ययनिमित्तत्वाच्चेति ।

वैयधिकरण्याश्रयणस्याऽयुक्तत्वमुपपादयति-भेदे हीति । भेदस्य हि संबन्धितावच्छेदकयोर्यो विरोधस्तज्ज्ञानसापेक्षज्ञानकत्वात् । अविरोधे संभवति विरोधस्याऽन्याय्यत्वात्स न न्याय्यः । अत एव निषादस्थपतौ कर्मधारय एवाश्रीयते । न च कर्मधारये स्वामिवाचकस्थपतिशब्दस्य पूर्वनिपातापत्तिः, राजदन्तादिषु पाठादित्याहुः । वार्त्तिकमिति । तदर्थप्रतिपादकमित्यर्थः । भुज्य्वादीनां प्राप्त्यभावादनर्थकः प्रतिषेधोऽत आह—सम्बन्धिन इति । सत्यपीति । यदि अङ्गनिमित्तयुव्वोरित्यर्थेन युत्वादावदोष इत्युच्यते तथाप्ययं दोष इत्यर्थः । न युरितीति । एवञ्च तत्र योरङ्गनिमित्तत्वाऽभावादप्राप्तेस्तन्नोदाहृतमित्याशयः । अवग्रहे अवान्तर-

१ अत्र 'युतिः' इत्यधिकः पाठः 'क' पुस्तके । २ अयं पाठः क्वाचित्कः ।
३ इदं शैलीसिद्धं व्याख्याभाष्यं बहोः कालाल्लुप्तं भवेल्लेखकप्रमादादिति गौडाः ।
४ 'भेदे हि निमित्तिभावो' पा० ।

कथम् ? ॥ ] अनुनासिकपरयोर्युवोर्ग्रहणं, न चैतावनुनासिकपरौ ॥ यद्यनुनासिकपरयोर्ग्रहणं–नन्दनः कारकः, अत्र न प्राप्नुतः, नह्येताभ्यां युशब्दवुशब्दाभ्यामनुनासिकं परं पश्यामः ॥ 'अनुनासिकपरत्वा'दिति नैवं विज्ञायतेऽनुनासिकः पर आभ्यां ताविमावनुनासिकपरौ, अनुनासिकपरत्वादिति ॥ कथं तर्हि ? ॥ अनुनासिकः परोऽनयोस्ताविमावनुनासिकपरौ, अनुनासिकपरत्वादिति ॥ यद्यनुनासिकपरयोर्ग्रहणमित्संज्ञा प्राप्नोति ॥ तत्र को दोषः ? ॥ ॥[1] * ॥ तत्र ङीम्नुमोः प्रतिषेधः । ॥ * ॥ [ तत्र[2] ] ङीम्नुमोः प्रतिषेधो वक्तव्यः । नन्दनः कारकः । नन्दना कारिका । उगिल्लक्षणौ ङीम्नुमौ प्राप्नुतः ॥ * ॥ धात्वन्तस्य च [ प्रतिषेधः[2] ] ॥ * ॥ धात्वन्तस्यच प्रतिषेधो वक्तव्यः । दिवु सिवु ॥ * ॥ षिट्टित्करणं तु ज्ञापकमुगित्कार्याऽभावस्य ॥ * ॥ यदयं युशब्दवुशब्दौ षिट्टितौ करोति 'शिल्पिनि ष्वुन्' 'ट्युट्युलौ तुट्चे'ति, तज्ज्ञापयत्याचार्यो न युवोरुगित्कार्यं भवतीति ॥ कथं कृत्वा ज्ञापकम् ? ॥ षिट्टित्करणे एतत्प्रयोजनं षिट्टित इतीकारो यथा स्यात् । यदि चात्रोगित्कार्यं स्यात् षिट्टित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो,–'न युवोरुगित्कार्यं भवती'ति, ततो युशब्दवुशब्दौ षिट्टितौ करोति ॥*॥ न वा–षित्करणं ङीष्विधानार्थम् ॥ * ॥ नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? ॥ [ 'षित्करणं ङीष्विधानार्थम्' ] । षित्करणं क्रियते ङीष्विधानार्थम् । 'षित' इति ङीष्यथा स्यात् ॥ * ॥ टित्करणमनुपसर्जनार्थम् ॥ * ॥

---

प्र.] सित्करणं पदत्वे सति हल्यनुस्वारार्थमिति तत एवादेशो न भविष्यति । नैतदस्ति । अवग्रहाय सित्त्वं स्यात्, अहलादावप्यनुस्वारार्थं वा । न ह्येताभ्यामिति । रञ्जेः कुन्वुन्वुञ्वुंन्नित्यादीनामेव प्रसङ्गः । अनुनासिकः परोऽनयोरिति । अवयवान्तरापेक्षया लब्धपरव्यपदेशोऽवयव एवाऽनुनासिक आश्रीयते नाऽन्यः । न च 'भुज्यु'रित्यादावुकारस्य साऽनुनासिकत्वं प्रतिज्ञातमिति दोषाऽभावः । इत्संज्ञा प्राप्नोतीति । लोपस्तु भवतु मा वा भूदिति न विचार्यते, कृतेऽपि उकारलोपेऽवशिष्टस्यादेशविधानेन रूपनिष्पादनात् । धात्वन्तस्येति । 'दिवु' इत्ययमपि अनुनासिकपर इत्यादेशप्रसङ्गः । न वा षित्करणमिति । ङीपि सतीकारोऽनुदात्तो भवति, ङीषि तूदात्त इति सति प्रयोजने न ज्ञापकं षित्करणम् । टित्करणमिति ।

---

उ.] पदस्य नियामकतायाः प्रायेणाऽदर्शनादाह—अहलादावपीति । नन्दनादावप्रवृत्तावप्यनाकयोरवकाशं दर्शयति—कुन्वुंनिति । अवयवान्तरेति । एवश्चोकार एवानुनासिक इत्याश्रितमित्यर्थः । दिवु इतीति । 'उदितो वे'तीड्विकल्पार्थं हि तत्रोकारोऽनुनासिकः । ङीम्ङीषोर्विशेषं दर्शयति—ङीपीति ।

---

१ अयं पाठो लुप्तः । २ अयंपाठः क्वाचित्कः । ३ 'वुन्वुन्' पा० । ४ 'कुन्वुन्निति' पा० ।

टित्करणेऽप्यन्यत्प्रयोजनमस्ति ॥ किम् ? ॥ अनुपसर्जनाट्टित इतीकारो यथा स्यात् ॥ टितोऽनुपसर्जनाद्भवति, उगित उपसर्जनाच्चानुपसर्जनाच्च ॥ एवं तर्हि, ॥ * ॥ विप्रतिषेधाट्टापो[1] बलीयस्त्वम् ॥ * ॥ विप्रतिषेधाट्टापो बलीयस्त्वं भविष्यति । टापोऽवकाशः–खट्वा माला । ङीपोऽवकाशः–गोमती यवमती । इहोभयं प्राप्नोति नन्दना कारिका । टाब्भवति विप्रतिषेधेन ॥ नैष युक्तो विप्रतिषेधः, 'विप्रतिषेधे पर'मित्युच्यते पूर्वश्च टाप् परो ङीप् ॥ ङीपः परष्टाप् करिष्यते ॥ सूत्रविपर्यासः कृतो भवति ॥ एवं तर्हि उगितो ङीब्भवतीत्यत्राप्यतष्टाबित्यनुवर्तिष्यते ॥ एवमप्यकारान्तादुगित इहैव स्यात् नन्दना कारिका । गोमती यवमतीत्यत्र न स्यात् ॥ एवं तर्हि संबन्धाऽनुवृत्तिः करिष्यते—'अजाद्यतष्टाप्' । 'ऋन्नेभ्यो ङीप्' । अतष्टाप् ॥ 'उगितश्च'[2]। ङीब्भवति । अतष्टाप् । 'वनो र च' । [ वनो ङीब्भवति । 'उगितोऽतष्टाप्' । ]

प्र. ] 'टिड्ढे'त्यत्रानुपसर्जनादिति वर्तते । अत्रोगिल्लक्षणे ङीप्यविशेषेण प्राप्तेऽनुपसर्जनादेव यथा स्यादिति नियमार्थं टित्करणं स्यादित्यज्ञापकमुगित्कार्याऽभावस्य । **विप्रतिषेधादिति** । पूर्वविप्रतिषेधोऽत्र विवक्षितः । **एवं तर्हीति** । यदीष्टवाची परशब्दो न गृह्यते तदाऽनुवृत्तिर्वाक्यभेदश्चाश्रीयत इत्यर्थः । **एवमपीति** । एकवाक्यताश्रयणेन पर्यनुयुङ्क्ते । तत्राऽदन्तादुगितः पर्यायेण टाम्ङीपोः प्रसङ्गः । **एवं तर्हि संबन्धानुवृत्तिरिति** । यद्यपि वाक्यभेदेन संबन्धे दोषाऽभावः, 'उगितो ङीब्भवति, अदन्तादुगितष्टाब्भवती'ति, तथापि परिहाराऽन्तरसद्भावप्रतिपादनायेदमुक्तम् । **उगितश्च ङीब्भवतीति** । 'अतष्टा' बित्युत्तरार्थमत्राऽनुवर्तते । 'वनो रचे'-त्यत्रा 'ऽत उगितष्टा' बिति वर्तते, तत्र वन्नन्तस्याऽनुगित्त्वाददन्तत्वाऽसंभवाच्च वाक्यभेद आश्रीयते–'वन्नन्तस्य ङीब्रौ भवतः', 'उगितोऽदन्तान्ङीबपवादष्टा'बिति । अतः 'टा' बित्यस्योत्तरत्रोपस्थानाय प्रतिसूत्रमनुवृत्तिं दर्शयति । 'टाबृची'त्यत्र टाब्ग्रहणं

उ. ] । **वाक्यभेद इति** । उगितो ङीप्, अदन्तादुगितष्टाबित्यर्थ इति भावः । वाक्यभेदे प्रमाणन्तु उगितश्चेति सूत्रमेवेति बोध्यम् । **उत्तरार्थमत्रानुवर्तते इति** । इह तु न फलं । न चोगितोऽदन्ताट्टाब्विधानं फलम्, 'उगित' इत्यस्य ङीपा सहसंबद्धतया पूर्वक्लृप्तप्रकृतेरत इत्यस्य[3] तद्वाक्येऽसंबन्धेन तस्य फलस्य वक्तुमशक्यत्वमिति भावः । नन्वेवं 'वनो रचे'त्यनेनैकवाक्यतयैव संबन्धः स्यादत आह—**तत्रेति** । **अदन्तत्वासंभवाच्चेति** । 'यज्वभ्या'मित्यादावपि बहिरङ्गविभक्तिनिमित्तनलोपस्याऽसिद्धत्वादिति भावः । नन्वेवमपि 'पादोऽन्यतरस्या'-मित्यादावनुवृत्तिप्रदर्शनं व्यर्थमत आह—**अतष्टाबिति** । अतोऽनन्तरमित्यर्थः । उत्तरत्रोपस्थितेः फलन्दर्शयति—**टाबृचीति** ; नन्वेवमपि टाप एव सा दर्श्यतामत-

१ 'षेधात्तु टापो' पा० । २ 'उगितश्च ङीप्' । पा० । ३ 'इत्यस्य सत्त्वेन चोगित इत्यस्य' पा० ।

'पादोन्यतरस्यां' । ङीब्भवति । उगितः, अतष्टाप् । ततः 'ऋचि' । ऋचि [च] टाब्भवति । उगितोऽत इति निवृत्तम् । तत्रायमप्यर्थो द्विष्टाब्ग्रहणं न कर्तव्यं भवति प्रकृतमनुवर्तते ॥ सिध्यत्येवं यत्त्विदं वार्तिककारः पठति— 'विप्रतिषेधाट्टापो बलीयस्त्व'मिति, एतदसङ्गृहीतं भवति ॥ एतच्च सङ्गृहीतं भवति ॥ कथम् ? ॥ इष्टवाची परशब्दो 'विप्रतिषेधे परं यदिष्टं तद्भवती'ति ॥ * ॥ धात्वन्तस्य चार्थवद्ग्रहणात् ॥ * ॥ अर्थवतोर्युवोर्ग्रहणं । न च धात्वन्तोऽर्थवान् ॥

॥ * ॥ नुम्विधौ झल्ग्रहणम् ॥ * ॥ नुम्विधौ झल्ग्रहणं कर्तव्यं । झलन्तस्य उगित इष्यते । 'उगिदचां सर्वनामस्थानेऽधातोर्झल' इति । तच्चावश्यं कर्तव्यम् ॥ * ॥ लिङ्गविशिष्टप्रतिषेधार्थम् ॥ * ॥ प्रातिपदिकग्रहणे-लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति गोमान् यवमान् एवं गोमती यवमतीत्यत्रापि स्यात् ॥ * ॥ न वा विभक्तौ लिङ्गविशिष्टाग्रहणात् ॥ * ॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ [ 'विभक्तौ लिङ्गविशिष्टाऽग्रहणात्' ] 'विभक्तौ लिङ्गविशिष्टग्रहणं ने'त्येषा परिभाषा कर्तव्या ॥ कः पुनरत्र विशेषः—एषा वा परिभाषा क्रियेत, झल्ग्रहणं वेति ? ॥ अवश्यमेषा परिभाषा कर्तव्या, बह्न्येतस्याः परिभाषायाः प्रयोजनानि ॥ कानि ? ॥

प्र.]न कर्तव्यं भवतीति टाप उत्तरत्रानुवृत्तिरुपयुज्यते । टापः स्वातन्त्र्यनिराकरणाय 'अत' 'उगित' इत्येताभ्यां संबन्धः । उगितोऽत इति निवृत्तमिति । उगित इत्यस्य निवृत्तिराख्यायते । 'अत' इत्येतत्सर्वत्र प्रकरणेऽनुवर्तते—'शितिब्राह्मणी'ति ङीब्नकारौ मा भूतामिति, 'कृकवाकु'रित्यत्र जातिलक्षणो ङीष् मा भूदित्येवमर्थम् । धात्वन्तस्य चार्थवद्ग्रहणादिति । वर्णसमुदायग्रहणमिह न वर्णग्रहणमित्यर्थवद्ग्रहणपरिभाषोपतिष्ठते । 'प्रत्ययाऽप्रत्यययोः प्रत्यये संप्रत्यय' इत्ययमप्यत्र परिहारः संभवति । एवं गोमतीति । ईकारात्परो नुम्प्राप्तोऽझलन्तत्वान्न भवति । एवं 'नन्दनः' 'कारक' इत्यत्राऽझलन्तत्वान्नुमभावः । न वा विभक्ताविति । विभक्तौ यत्कार्यं विधीयते लिङ्गविशिष्टस्य तन्न भवतीत्यर्थः । शुनेति । 'सावेकाच' इति प्राप्तं विभक्तेरुदात्तत्वं 'न गोश्व'न्निति प्रतिषिध्यते । शुन्येति । गौरादित्वान्ङीषि कृते 'उदात्तयणो हल्पूर्वा'दित्यस्य विभक्तिस्वरस्य प्रतिषेधप्रसङ्गः ।

ननु विभक्तेरेतत्कार्यं न तु विभक्तौ परतः पूर्वस्येति कथं लिङ्गविशिष्टपरि-

उ.]उगित इत्यनयोस्तत्प्रदर्शनं व्यर्थमत आह—टापः स्वातन्त्र्येति । 'पादोऽन्यतरस्यामित्यत्रे'ति शेषः । अत इत्येतदिति । समुदायस्यैव निवृत्तिः कथ्यते । एकदेशस्त्वनुवर्तत एवेति भावः । वर्णसमुदायेति । उकारविशिष्टयोर्ग्रहणादिति भावः । इत्ययमपीति । अस्याः परिभाषाया असाधारणप्रयोजनस्य भाष्येऽदर्शना-

१ 'पादोऽन्यतरस्यां ङीब्भवति' इति गौडाः । २ 'धात्तु टापो' पा० । ३ 'ग्रहणम्' पा० ।

॥ * ॥ प्रयोजनं शुनः स्वरे ॥ * ॥ [ शुनः स्वरे प्रयोजनं ]। यथेह भवति शुना शुने एवं शुन्या शुन्या इत्यत्रापि स्यात् ॥ * ॥ यूनः संप्रसारणे ॥ * ॥ यूनः सम्प्रसारणे प्रयोजनम् । यथेह भवति 'यूनः पश्ये'ति, एवं 'युवतीः पश्ये'त्यत्रापि स्यात् ॥ * ॥ उगिदचां नुम्विधौ ॥ * ॥ उगिदचां नुम्विधौ प्रयोजनम् । यथेह भवति–गोमान् यवमान्, एवं गोमती यवमतीत्यत्रापि स्यात् ॥ * ॥ अनडुहश्चाम्विधौ ॥ * ॥ अनडुहश्चाम्विधौ प्रयोजनम् । यथेह भवति–अनड्वानित्येवमनडुहीत्यत्रापि स्यात् ॥ न वा भवत्यनड्वाहीति ? ॥ भवत्यन्येन यत्नेन 'आमनडुहः स्त्रियां वे'ति । लिङ्गविशिष्टग्रहणादीकारान्तस्य प्राप्नोति ॥ * ॥ पथिमथोरात्त्वे ॥ * ॥ पथिमथोरात्त्वे प्रयोजनम् । यथेह भवति पन्थाः मन्थाः–एवं पथी मथीत्यत्रापि प्राप्नोति ॥ न केवलः पथिशब्दः स्त्रियां वर्तते ? ॥ उपसमस्तस्तर्हि वर्तते सुपथीति ॥ * ॥ पुंसोऽसुङ्विधौ ॥ * ॥ पुंसोऽसुङ्विधौ प्रयोजनम् । यथेह भवति पुमान्, एवं पुंसीत्यत्रापि स्यात् ॥ न केवलः पुंशब्दः स्त्रियां वर्तते ॥ उपसमस्तस्तर्हि वर्तते–सुपुंसीति ॥ * ॥ सख्युर्णित्त्वानङौ ॥ * ॥ सख्युर्णित्त्वानङौ प्रयोजनम् । यथेह भवति

---

प्र.] भाषायाः प्रतिषेधः ?, नैष दोषः । विभक्तेर्यत्कार्यं, यच्च विभक्तौ परतः पूर्वकार्यं तत्सर्वं विभक्तौ कार्यमिति सर्वत्र प्रतिषेधप्रवृत्तिः । एवं युवतीरिति । एवमर्थमन इत्युभयोः शेष इति नाश्रयितव्यं भवति । पथीति,–समासैकदेश उदाहृतः ।

इतर एतावदेवोदाहृतमिति मत्वाह–न केवल इति । सुपथीति । शोभनः पन्था अस्यामिति बहुव्रीहिः । 'न पूजना'दिति समासान्तप्रतिषेधः । 'ऋन्नेभ्यो ङी'बिति ङीप् । 'भस्य टेर्लोप' इति टिलोपः । सुपुंसीति । शोभनाः पुमांसोऽस्यामिति बहुव्रीहिः । उरःप्रभृतिषु 'पुमा'निति विभक्त्यन्तपाठस्य प्रयोजनमुक्तम्–'एकवचनान्तस्यैव नित्यः कब्यथा स्या'दिति, तेनात्र 'शेषाद्विभाषे'ति विकल्पो भवति ।

---

उ.] दियं निष्फलेति केचित् । भाष्ये—नुमापत्तिदोषं परिहरति—नुम्विधाविति ।

नैष दोष इति । 'विभक्ता'विति विषयसप्तमीति भावः । नन्वस्य दोषस्याऽन इत्यपकर्षेण परिहृतत्वात्कथमेतत्प्रयोजनमत आह—एवमर्थमिति । साधुत्वान्वाख्यानप्रवृत्तस्य भगवतोऽसाधुशब्दोच्चारणमनुचितमत आह—समासैकदेश इति । भाष्ये–उपसमस्त इति । समस्तपर्यायोऽयम् । आचारक्विबन्तात्कर्तृस्त्रियां क्विबनभिधानान्नेति भावः । आचारक्विबेव नेत्यन्ये । ननु 'ऋक्पू'रिति समासान्ते सति टापि सुपथेति भाव्यमत आह—न पूजनादिति । वस्तुतः षचः प्राचीनेष्वेव स इति सिद्धान्तादिनः स्त्रियामिति कपो दुर्वारत्वादिदं चिन्त्यम् ।

---

१ इदं व्याख्याभाष्यं लेखकप्रमादाल्लुप्तमिति गौडाः । २ अत्र सर्वेषां वार्त्तिकानां तत्सदृशं व्याख्याभाष्यं लुप्तं गौडैरुद्धृतम् । ३ चकारः क्वाचित्कः ।

सखा सखायौ सखायः। एवं सखी सख्यौ सख्य इत्यत्रापि प्राप्नोति ॥

॥*॥ भवद्भगवदघवतामोच्चावं ॥*॥ भवद्भगवदघवतामोच्चावे प्रयोजनम्। यथेह भवति भोः भगोः अघोरिति; एवं भवति भगवत्यघवतीत्यत्रापि स्यात् ॥ एतान्यस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या, एतस्यां [ च सत्यां ] नार्थो झल्ग्रहणेन ॥

तदेतदनन्यार्थं झल्ग्रहणं कर्तव्यं नुम्प्रतिषेधो वा वक्तव्यः ? ॥ उभयं न वक्तव्यम्। उपरिष्टाज्झल्ग्रहणं क्रियते तत्पुरस्तादपकक्ष्यते ॥ एवमपि सूत्रविपर्यासः कृतो भवति ॥ एवं तर्हि योगविभागः करिष्यते 'उगिदचां सर्वनामस्थानेऽधातोः'। 'युजेरसमासे'। ततो-'नपुंसकस्य'। नपुंसकस्य [च] नुम् भवति। 'झल' इत्युभयोः शेषः। ततो'ऽचः'। अजन्तस्य च नपुंसक[लिङ्ग]स्य नुम्भवति ॥

यद्यपि तावदेतदुगित्कार्यं परिहृतमिदमपरं प्राप्नोति–शातनितरा पातनितरा। 'उगितो नद्या घादिषु ह्रस्वो भवती'त्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत, नित्यं चेष्यते ॥ 'उगितो या नदी'–एवमेतद्विज्ञायते ॥ उगित एषा नदी ॥

प्र.] 'पातेर्डुम्सु'न्निति प्रत्ययस्योगित्त्वादुगितश्चेति ङीप्। सखी सख्याविति। 'सख्यशिश्वीति भाषाया'मिति ङीष्। अनङ्णित्वे अत्र प्राप्नुतः। ङीष्विधानं तु सखीभ्यामित्याद्यर्थं स्यात्। भवद्भगवदिति। यदा संबुद्ध्या भवदादयो विशेष्यन्ते तदा भवत्यादीनामपि प्रसङ्गः। यदा त्वशब्दो विशेष्यते तदा येन नाव्यवधानमित्येकवर्णव्यवधाने ओत्वं प्रवर्तते। भवत्यादौ तु वर्णद्वयव्यवधानादोत्वाऽभावः। तदभावात्तत्संनियोगविहितस्य रुत्वस्याऽप्यभाव इति केचिदाहुः। नार्थो झल्ग्रहणेनेति। गोमत्याद्यर्थेनेत्यर्थः। पुरस्तादिति। 'उगिदचां सर्वनामस्थानेऽधातोर्झल' इति। ततो 'युजेरसमासे' 'नपुंसकस्याच' इति। अत्र 'झल' इति वर्तते।

उभयोः शेष इति। युजेर्झलन्तत्वाऽव्यभिचारादाद्यन्तावेव योगावपेक्ष्येते। 'झ'लिति लुप्तषष्ठीकं पदमाश्रीयते। शातनितरेति। शातिपातिभ्यां करणे ल्युटि कृते गौरादिषु शातन-पातनेति पाठान्ङीष्। उगितो या नदीति। उगिच्छब्दोच्चारणेनेति

उ.] 'समासान्तविधेरनित्यत्वात्तदभाव' इत्युचितम्। पातेर्डुमिति। 'सूतेः सप् प्रसवे पुमा'निति 'स्त्रिया'मिति सूत्रस्थभाष्यात् सूतेम्र्सुन्प्रत्ययो ह्रस्वश्चेति वक्तुमुचितम्। केचिदाहुरिति। प्रत्ययस्य प्रकृत्यंशे उत्थिताकाङ्क्षतया भवदादिविशेषणत्वमेव युक्तमिति अत्रारुचिः। भाष्ये—एवं भवति भगोति पाठः। भाष्ये—योगविभाग इति। योगविभागे क्रमभङ्गाऽभावान्न विपर्यास इति भावः। ननु 'झल' इत्यस्य सूत्रत्रयेऽपि संबन्धा'दुभयोः शेष' इत्ययुक्तमत आह—युजेरिति।

ननु 'झल' इति करणे सूत्रभेदः स्यादत आह—झलितीति। करण इति।

१ 'भवती' पा०। २ अयं पाठः क्वचिन्न। ३ 'कृष्यते' पा०।

'उगितो या परा ॥ अत्र चैव दोषो भवति, उगितो ह्येषा परा नदी, ऐषुमतितरायां च प्राप्नोति ॥ उगितो या परा विहिता ॥ उगित एषा विहिता ॥ 'उगित' इत्येवं या विहिता ॥ एवमपि भोगवतितरायां दोषो भवति–भोगवतितरा । भोगवतीतरा ॥ तस्मादुगितो या नद्युगितो या विहितेत्येवमेतद्विज्ञास्यते ॥ एवं विज्ञायमाने शातनितरायां दोष एव ॥*॥ सिद्धं तु युवोरनुनासिकत्वात् ॥*॥ सिद्धमेतत् ॥ कथम्? ॥ यकारवकारयोरेवेदमनुनासिकयोरिह ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ॥ [ युवोरनाकौ ] ॥

प्र.] भावः । इतरोऽगृहीताभिप्राय आह–**उगित एषेति** । पूर्वेणैवाऽभिप्रायेणाह–**उगितो या परेति** । उगिच्छब्दव्यापारेण विहितोगितः परेत्यर्थः । इतर आह–**अत्र चैवेति** । इषवोऽस्य सन्तीतीषुमान् । 'तस्येद'मित्यण् । ङीप् । 'यस्ये'ति लोपे कृते 'उगितः परा नदी'ति विकल्पेन ह्रस्वत्वं प्राप्नोति, नित्यं चेष्यते । पूर्वोक्तेनाऽभिप्रायेणाह–**उगितो या परा विहितेति** । ऐषुमतितरायां चाऽणन्तान्नदी विहिता न तूगितः । इतरस्तु शातनितरामाश्रित्याह–**उगित एषेति । भोगवतितरेति** । शार्ङ्गरवादिषु 'भोगवद्गौरिमतोः संज्ञाया'मिति पाठान्ङीन् प्रत्यय 'उगित' इत्येवं न विहित इति विकल्पेन ह्रस्वत्वं न प्राप्नोति । 'उगितस्तु विहित' इति विधानाश्रयणाद्विकल्पः सिध्यति, शातनितरायां तु विकल्पः प्राप्नोति ।

**सिद्धं त्विति** । भाष्यकारीयमिदं वाक्यमित्याहुः । अन्ये त्वनुनासिकपरत्वादिति वाक्यमेवाऽनेन व्याख्यातमित्याहुः । अनुनासिकप्रधानत्वादिति हि तस्यार्थः । अनुनासिकयणौ 'युवू' इहानुकृतावित्यतिप्रसङ्गाऽभावः । उकारस्तु निरनुनासिक एवेत्युगित्कार्याऽभावः । **[ युवोरनाकौ ]** ॥

उ.] भावे स्त्रीत्वाऽनुपपत्तिरित्यर्थः । **गौरादिष्विति** । टित्त्वान्ङीपि सिद्धे गौरादिपाठकल्पने मानश्चिन्त्यम् । वस्तुतो 'ण्यासश्रन्थे'ति युजर्थः स पाठ आवश्यक इति तत्त्वम् । **इतर आहेति** । 'अगृहीताभिप्राय' इति शेषः । भाष्ये–**अत्र चैव दोष इति** । अत्र दोषः, चादैषुमतितरायामपि दोष इति भाष्यार्थः । न चोगितः परेत्यर्थेऽपि पूर्वस्मात्परस्य ह्रस्वे कर्तव्येऽणो लोपस्य स्थानिवत्त्वादैषुमतितरेत्यत्र न दोष इति वाच्यम्, बहिर्भूत'तर'निमित्तकत्वेन बहिरङ्गह्रस्वस्य स्थानिवत्सूत्रदृष्ट्या असिद्धत्वेन पूर्वत्रासिद्धीय इव तत्र स्थानिवत्त्वाऽप्रवृत्तेः । पञ्चमीसमासस्याऽनित्यत्वाच्च । **विधानाश्रयणे त्विति** । विधानमेवाश्रीयते न तु स्वरूपपरत्वमिति भावः । भाष्ये–**सिद्धन्तु युवोरिति । केचित्तु**–युशब्द उकार उच्चारणार्थः । वस्तु केवल एव, विभक्त्यचैवोच्चारणे सहायसंपादनात् । प्रत्ययेष्वप्युकार उच्चारणार्थ एव । एवं चाऽङ्गाधिकारादङ्गसंज्ञानिमित्तय्वोरादेशविधानादतिप्रसङ्गाऽभावेन य्वोरनुनासिकत्वप्रतिज्ञाफलं चिन्त्यमिति वदन्ति । तन्न । विधेय-

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥७।१।२॥**

॥*॥ आयनादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ॥*॥ **आयन्नादिषूपदेशिवद्भावो वक्तव्यः। उपदेशावस्थायामायन्नादयो भवन्तीति वक्तव्यम्॥ किं प्रयोजनम् ? ॥ 'स्वरसिद्ध्यर्थम्' । उपदेशावस्थायामायन्नादिषु इष्टः स्वरो यथा स्यादिति । शिलेयम् । तैत्तिरीयः । अक्रियमाणे ह्युपदेशिवद्भावे प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे कृते आन्तर्यत आदेशा अस्वरकाणामस्वरकाः स्युः** ॥*॥ न वा क्व चिच्चित्करणात् [उपदेशिवद्वचनानर्थक्यम्] ॥*॥ **न वा वक्तव्यम्॥ किं कारणम्?॥ 'क्व चिच्चित्करणात्' । यदयं क्व चिद्धादींश्चितः करोति,**

**प्र.] आयनेयीनी ॥ आयन्नादिष्विति ।** अङ्गाधिकारे विधानात्प्रकृतिप्रत्ययापेक्षा बहिरङ्गा आयन्नादयः । प्रत्ययाद्युदात्तत्वं तु प्रकृतिनिरपेक्षत्वादन्तरङ्गमिति तदेव पूर्वं प्राप्नोतीत्युपदेशिवद्वचनं कर्तव्यम् । **शिलेयमिति** । शिलेव शिलेयम् । 'शिलाया ढः' । तित्तिरिणा प्रोक्तमधीते । 'तित्तिरिवरतन्तुखण्डिके'ति छण् ।

**अस्वरकाः स्युरिति** । प्रवृत्तिकालपेक्षयेदमुच्यते । प्रयोगे तु स्वररहितस्याऽच उच्चारणाऽभावादनुदात्तं पदमेकवर्जमिति वचनाच्चाऽनिष्टस्वराः प्राप्नुवन्ति ।

केचित्त्वान्तर्यत इत्यन्यथा व्याचक्षते, यथानुदात्तोच्चारणे गात्राणां स्रंसनं, स्वरस्य स्निग्धता, कण्ठविवरस्य महत्त्वं च भवति एवं व्यञ्जनोच्चारणेऽप्ययोग्यत्वादनुदात्तधर्मोपजनो व्यञ्जनेषु नास्ति,–तदेव**मस्वरकाणा**मुदात्तत्वरहिताना**मस्वरका** इष्टोदात्तत्वरहितत्वादनुदात्ता एव स्युरित्यर्थः ।

**नवेति** । सत्यप्यङ्गाधिकारेऽङ्गत्वमनपेक्ष्य प्रत्ययोत्पत्तिकाल एवायन्नादयो भवन्तीति चित्करणेन ज्ञाप्यते । तत्राऽङ्गानपेक्षत्वादसति बहिरङ्गत्वे परत्वान्नित्यत्वाच्च

**उ.]** विषये उच्चारणार्थानामपीत्संज्ञायास्तस्य लोप इति सूत्रे उक्तत्वात् । तस्मादनुनासिकयण्विशिष्टयोर्युवोरिमावादेशाविति भाष्यतात्पर्यम् । **उकारस्त्विति** । 'ल्युडादि'ष्विति शेषः । यत्र ल्युडादावनाकाविष्येते ते अनुनासिकयणः पठनीयाः । 'भुज्यु'रित्यादयश्च निरनुनासिका इति दोषाऽभावः । [ **युवोरनाकौ** ] ॥

**आयनेयी** । आयनादिषु 'झोऽन्त' इत्यन्तादेशोऽपि गृह्यत इति 'धातो'रिति सूत्रस्थभाष्यस्वरसः । 'ठस्येक' इत्ययमपि गृह्यत इति **कश्चित्** । ननु परत्वादाद्युदात्तात्पूर्वमायनादयो भविष्यन्तीत्यत आह—**अङ्गाधिकारे इति । प्रकृतिनिरपेक्षत्वादिति** । 'प्रत्ययसन्नियोगशिष्टत्वा'दित्यपि बोध्यम् । उपदेशिवद्वचने तु कृताऽऽयनादीनामेव फत्रादीनामाद्युदात्तत्वविशिष्टानां विधानान्न दोषः । अन्यथा 'शिलेय'मित्यादौ व्यञ्जनस्यैवादेशादन्तोदात्तत्वं प्राप्नोति, मध्योदात्तत्वं चेष्यत इति भावः । ननु स्वररहितस्याऽच उच्चारणाऽयोगात्कथमस्वरकाः स्युरत आह—**प्रवृत्तिकालेति । अनुदात्तधर्मेति** । अनुदात्तत्वरूपधर्मेत्यर्थः । **परत्वान्नित्यत्वा-**

१ 'आयन्नादिषु' पा० । २ अयमंशः क्वचिन्नास्ति । ३ 'तित्तिरिवरतन्त्विति छण्' पा० ।

'अग्राघद्धच्छौ च' तज्ज्ञापयत्याचार्यः,–'उपदेशावस्थायामायन्नादयो भवन्ती'ति[1] ॥ कथं कृत्वा ज्ञापकम् ? ॥ चित्करणे एतत्प्रयोजनं 'चित' इत्यन्तोदात्तत्वं यथा स्यादिति । यदि चोपदेशावस्थायामायन्नादयो भवन्ति ततश्चित्करणमर्थवद्भवति ॥

॥ * ॥ तत्रोणादिप्रतिषेधः ॥ * ॥ तत्रोणादीनां प्रतिषेधो वक्तव्यः । शङ्कः षण्ढ इति ॥*॥ धातोर्वैयङ्वचनात् ॥*॥ अथ वा यदयमृतेरीयङिति धातोरीयङं शास्ति तज्ज्ञापयत्याचार्यो 'न धातुप्रत्ययानामायन्नादयो भवन्ती'ति । यदि हि स्युः 'ऋतेश्छ'ङित्येव ब्रूयात् । सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति न च ऋतेश्छङा सिध्यति । छङि सति वलादिलक्षण इट् प्रसज्येत, इटि कृतेऽनादित्वादादेशो न स्यात् । इदमिह संप्रधार्यम् । इट क्रियतामादेश इति; किमत्र कर्तव्यम् ? । परत्वादिडागमः ॥ नित्य आदेशः । कृतेऽपीटि प्राप्नोत्यकृतेऽपि ॥ अनित्य आदेशो नहि कृत इटि प्राप्नोति ॥ किं कारणम् ? ॥ अनादित्वात् ॥ अन्तरङ्गस्तर्ह्यादेशः ॥ काऽन्तरङ्गता ?" इदानीमेवह्युक्तमायन्नादिष्रूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति । तदेतदृतेरीयङ्वचनं ज्ञापकमेव 'न धातुप्रत्ययानामायन्नादयो भवन्ती'ति ॥

॥ * ॥ प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् ॥ * ॥ प्रातिपदिक-

प्र.]कृतेष्वायन्नादिषु[2] प्रत्ययस्याद्युदात्तत्वं भवतीतीष्टस्वरसिद्धिः । तत्रोणादिप्रतिषेध इति । ये त्वनुणादयः खल्घञादयस्तेषु खघयोरित्संज्ञया भाव्यम् । 'खित्यनव्ययस्य' 'चजोः कुघिण्ण्यतो'रिति लिङ्गात् । तद्धितेषु सावकाशेनादेशविधानेनेत्संज्ञा न बाध्यते । नित्य आदेश इति । उपदेशे यः प्रत्ययादिस्तस्याऽऽदेश इति कृतेऽपीटि प्राप्नोति । अनादित्वादिति । सांप्रतिकं प्रत्ययादित्वमाश्रित्यादेशो विधीयते ।

उ.] चेति । इदं चिन्त्यम्, आद्युदात्तत्वविशिष्टानामेव प्रत्ययानां विधानात् । तस्माच्चित्करणेन प्रत्ययसंबन्ध्यादेशानामुत्पत्तिसन्नियोगशिष्टकार्यादपि पूर्वं प्रवृत्तिर्ज्ञाप्यत इति भाष्यार्थः । प्रत्ययविध्येकवाक्यतया कृतायनादेशानामेवाऽऽद्युदात्तत्वविशिष्टानां तत्तच्छास्त्रैर्विधानमिति तात्पर्यम् । न बाध्यत इति । ततश्चोपदेशे एवेत्त्वे लोपे चाऽऽदेशाऽप्राप्तिरिति 'उणादीना'मित्येवोक्तमिति भावः । इटि कृते प्राप्त्यभावात्कथमादेशानां नित्यत्वमत आह—उपदेशे इति । 'इति मन्यत' इति शेषः ।

सांप्रतिकमिति । 'उपदेश' इति पदाऽभावादित्यर्थः । सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्याऽयुक्तत्वादिति भावः । भाष्ये–ज्ञापकमेवेति । न च 'छसुना' विति वाच्ये 'तरबीयसुना'वित्युक्तिः प्रातिपदिकप्रत्ययानामप्यादेशाऽभावं ज्ञापयेत्; आयनादीनां निर्विषयत्वापत्तेः । फघछानां धातुप्रत्ययेष्वभावात् । च्फञादीनां चित्त्वस्य ण्यक्षत्रियेत्यादिनिर्देशानां चाऽसङ्गत्यापत्तेश्चेत्याहुः । भाष्ये–प्रातिपदिक-

१ इतिः क्वाचित्कः । २ 'आयनादिषु' पा० ।

विज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम् ॥ * ॥ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ * ॥ [ आयनेयीनीयियः ] ॥

झोऽन्तः ॥ ७।१।३ ॥

॥ * ॥ झादेशे धात्वन्तप्रतिषेधः ॥ * ॥ झादेशे धात्वन्तस्य प्रतिषेधो वक्तव्यः । उज्झिता । उज्झितुमिति ॥ * ॥ प्रत्ययाधिकारात्सिद्धम् ॥ * ॥ [प्रत्ययाधिकारात्सिद्ध[1]मेतत् ॥कथं ?॥] प्रत्ययग्रहणं प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'आयनेयीनीयियः फढखछघां प्रत्ययादीना'मिति ॥ * ॥ प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशवचनम् ॥ * ॥ प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशो वक्तव्यः । अपि नः श्वो [वा[2]] विजनिष्यमाणाः पतिभिः सह शयान्तै ॥ एवं तर्हि प्रत्ययग्रहणमनुवर्तते आदिग्रहणं निवृत्तम् ॥ कथं पुनः समासनिर्दिष्टानामेकदेशोऽनुवर्तते एकदेशो वा निवर्तते ॥ * ॥ असमासनिर्देशात्सिद्धम् ॥ * ॥ [असमासनिर्देशात्सिद्धमेतत् ।] असमासनिर्देशः करिष्यते–'प्रत्ययस्यादीना'मिति ॥ स तर्ह्यसमासनिर्देशः कर्तव्यः ? ॥

प्र.]प्रातिपदिकविज्ञानादिति ।' पक्षान्तरैरपि परिहाराः संभवन्ती'त्यव्युत्पत्तिपक्षाश्रयः । [ आयनेयी ] ॥

झोऽन्तः । इह प्रत्ययग्रहणेऽनुवर्त्तमाने एकसमासनिर्दिष्टमादिग्रहणमप्यनुवर्तते । तथा च 'शयान्तै' इत्यत्राऽनादि[3]त्वाज्झस्यान्तादेशो न स्यादिति प्रत्ययग्रहणं नानुवर्त्यमिति मत्वाह–झादेश इति । झकारोपदेशस्तु प्रत्यय इव लाघवार्थः स्यात् । शयान्ता इति । शीङ 'उपसंवादाशङ्कयोश्चे'ति लेट् । तस्य झः । 'लेटोऽडाटा'वित्याडागमे टेरेत्वं । 'वैतोन्यत्रे'त्यैत्वं । झोऽन्तादेशः । शब्लुक् । 'शीङः सार्वधातुके गुण' इति गुणः ।

कथं पुनरिति । यदाऽर्थोऽधिकारपक्षः, उपात्तार्थशब्दाधिकारपक्षो वा तदाऽयं पर्यनुयोगः । वर्तिपदार्थस्य समुदायेऽर्थेऽन्तर्भावात्पृथगनुवृत्त्यसंभवात् । यदा त्वनाश्रितार्थं शब्दमात्रं प्रतिज्ञातस्वरितत्वमनुवर्तत इति पक्षस्तदा नास्ति चोद्या-

उ.]विज्ञानाच्च पाणिनेरिति । अत्र 'पाणिने'रित्युक्त्या 'सर्पिषा' 'यजुषे'त्यादि कतिपयातिरिक्तोणादिषु पाणिनेरव्युत्पत्तिपक्ष एवाऽभिप्रेत इति दर्शयति । वस्तुतः 'सर्पिषे'त्यादौ षत्वमपि बहुलग्रहणादिति सर्वथाऽव्युत्पत्तिरेवैतेष्विति बोध्यम् । [आयने]॥

झोऽन्तः । अनादित्वादिति । अन्तरङ्गत्वादन्तादेशात्पूर्वमेवाऽडागम इति भावः । नन्वेवं धातुषु झकारोपदेशो व्यर्थोऽत आह–झकारोपदेशस्त्विति । प्रत्यये 'जुस्' 'अत्' 'अन्ते'ति त्रिरुच्चारणाऽभावाल्लाघवम्, अत्र तु बहुवर्णोच्चारणाऽभावो लाघवमिति बोध्यम् । यदार्थोऽधिकारेति । अर्थाध्याहारपक्षवत्तदा बोधनिर्वाहः । पदजन्योपस्थितेः शाब्दबोधाङ्गत्वेऽप्याह–उपात्तार्थेति । अन्तर्भावात्–

१ अयं पाठो लुप्तः सम्प्रति । २ अयं क्वाचित्कः । ३ 'इत्यनादित्वात्' पा० ।

न कर्तव्यः । क्रियते न्यास एव ॥ कथम् ? ॥ अविभक्तिको निर्देशः, प्रत्यय आदीनामिति ॥*॥ तत्र शयान्ता इत्यनकारान्तत्वादङ्गस्याद्भावप्रतिषेधः ॥*॥ तत्रैतस्मिन्प्रत्ययग्रहणेऽनुवर्तमाने आदिग्रहणे निवृत्ते 'शयान्तै' इत्यनकारान्तत्वादङ्गस्याऽद्भावः प्राप्नोति तस्य प्रतिषेधो वक्तव्यः ॥*॥ सिद्धमनानन्तर्यादनकारान्तेनाऽद्भावनिवृत्तिः ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ ['अनानन्तर्यात्'] । अनानन्तर्यादनकारान्तेनाद्भावो न भविष्यति । कथं कृत्वा चोदितं कथंकृत्वा परिहारः॥ अनकारान्तग्रहणं प्रत्ययविशेषणमिति कृत्वा चोदितम्, झकारविशेषणमिति कृत्वा परिहारः ॥ यद्यनकारान्तग्रहणं झकारविशेषणं, 'शेरते' अत्र न प्राप्नोति॥*॥ तत्र रुटि सन्नियोगवचनात्सिद्धम् ॥*॥ तत्र रुटि सन्नियोगः करिष्यते ॥ क एष यत्नश्चोद्यते सन्नियोगो नाम ? ॥ चकारः कर्तव्यः, 'रुट् च' ॥ किं 'च' ? ॥ यच्चान्यत्प्राप्नोति ॥ किं चान्यत्प्राप्नोति ? ॥ अद्भावः ॥ स तर्हि चकारः कर्तव्यः ? ॥ न कर्तव्यः । योगविभागः करिष्यते—'शीङः' । शीङ उत्तरस्य झस्याद्भावो भवति । ततो-रुट् । रुट् च भवति शीङ इति ॥

प्र.]ऽवकाशः। 'सङ्ख्याव्ययादेर्ङी' बित्यतो 'दामहायनान्ताच्चे' त्यत्राऽव्ययग्रहणाननुवृत्तावपि सङ्ख्याग्रहणानुवृत्तिदर्शनात् । तत्रेति । अन्तरङ्गत्वादाटि कृतेऽन्तादेशापवादोऽदादेशः प्राप्नोति । अनकारान्तादङ्गात्प्रत्ययस्य परत्वात् । सिद्धमिति । अनकारान्तेनाऽङ्गेन प्राधान्याच्च झकार एव विशेष्यते । तत्र व्यवधानाददादेशाऽभावः । अन्तादेशस्त्ववधिमनुपादाय विधीयमानो व्यवधानेपि भवति । शेरत इति । प्रतिपदविधेर्बलवत्वाद्रुटि कृते व्यवधानाददादेशो न प्राप्नोति । 'निर्दिश्यमानस्यादेशा भवन्ती'ति वचनाज्झकारमात्रस्यादेशो विधीयते । तच्च रुटा व्यवधीयते । रुटि संनियोगवचनादिति । आगमादेशयोः सहविधानादागमेन स्थानिनो व्यवधानाऽ-

उ.] पृथगुपस्थित्यभावादिति भावः । यदा त्विति—पक्षाङ्गीकार फलमाह—सङ्ख्याव्ययादेरिति । सङ्ख्याग्रहणेति । सङ्ख्यादिग्रहणेत्यर्थः । अन्तरङ्गत्वादाटि कृते इति । इदं वस्तुस्थितिकथनम् । अन्तरङ्गत्वञ्चाऽङ्गसंज्ञानपेक्षणात्, लावस्थायामेव अट्प्रवृत्तेर्वा । 'अनकारान्तादङ्गात्परप्रत्ययावयवझस्याऽ'दित्यर्थादाटः प्रत्ययभक्तत्वेन व्यवधायकत्वाऽभावादिति भावः । प्राधान्यादिति । तस्य स्थानित्वेन प्राधान्यम् । प्रत्ययस्त्ववयवित्वेन तद्विशेषणम् । अत्राऽङ्गस्येत्यत इत्यनुरोधात्पञ्चम्या विपरिणम्यते । 'झोऽन्त' इत्यत्र त्वङ्गनिमित्तप्रत्ययावयवझस्येत्यर्थान्नाऽवध्युपादानमिति भावः । प्रतिपदविधेरिति । शीङो हि झस्य रुट् क्रियते, स चाऽनवकाशः । तत्राऽवश्यं प्राप्ते आरम्भादिति भावः । एतेन परत्वान्नित्यत्वाद्रुडित्यपास्तम् ।

ननु रुडपि 'झोन्त' इत्यतोऽनुवृत्तवर्णस्यैवेति रुटि सति तत्सहितस्यादेशेन भाव्यमिति कथं तस्य व्यवधायकत्वमत आह—निर्दिश्यमानस्येति । तादृशं झकाररूपं च व्यवहितमेवेति भावः । भाष्ये—एवमपि पर्याय इति । योगविभागपक्षेऽयं दोषः ।

**एवमपि पर्यायः प्रसज्येत ॥ एवं तर्हि अच्शब्दस्य रुटं वक्ष्यामि ॥ तदच्छब्दग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् । प्रकृतमनुवर्तते ? ॥ क्व प्रकृतम् ? ॥ 'अदभ्यस्ता'दिति ॥ तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ! ॥ शीङ इत्येषा पञ्चमी अदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति, तस्मादित्युत्तरस्येति॥**

## शीङो रुट् ॥७।१।६॥

॥ * ॥ रुटि दृशिगुणप्रतिषेधः ॥ * ॥ **रुटि दृशिगुणः प्राप्नोति । अदृश्रन्नस्य केतव इति,-तस्य प्रतिषेधो वक्तव्यः ॥ न वक्तव्यः, परस्मिन्निति क्ङितिचेति प्रतिषेधो भविष्यति ॥ एवमदृश्रमस्य केतव इत्यत्रापि प्राप्नोति ॥ एवं तर्हि पूर्वान्तः करिष्यते** ॥ * ॥ पूर्वान्ते शीङो

प्र.] भावः । **एवमपि पर्याय इति** । अद्भावे कृते रुट् न प्राप्नोति, झस्य रुड्विधानादल्विधित्वात्स्थानिवत्त्वाभावाद्रुटि कृतेऽद्भावो न प्राप्नोति व्यवधानात्ततो विरोधात्तुल्यबलवत्त्वाच्च पर्यायप्रसङ्गः । **एवं तर्हीति** । अच्छब्दस्य रुटि सत्यवयवावयवोपि समुदायाऽवयवो भवतीति रुटा व्यवधानाऽभावाद्गुणः शीङः प्रवर्तते ॥

**शीङो रुट् । अदृश्रन्निति** । दृशेर्लुङि झेरन्तादेशे इरितो वेत्यङि तस्य चाऽन्तरङ्गत्वाद्गुणात्पूर्वं रुटि कृते 'ऋदृशोऽङि गुण' इति गुणप्रसङ्गः । **परस्मिन्निति** । यदा'क्ङिति चे'त्यत्र निमित्तसप्तमीपक्षस्त्यक्तः परसप्तमीपक्ष आश्रितस्तदैतदुच्यते । 'वार्णादाङ्गं बलव'दित्यनपेक्षिते वर्णाश्रयत्वादन्तरङ्गे एकादेशे कृते तस्य परं प्रत्यादिवद्भावान्ङिच्चसार्वधातुकं परमाश्रित्य 'क्ङिति चे'ति गुणप्रतिषेधः प्रवर्तते । येन नाप्राप्तिन्यायेन तन्निमित्त एव प्रतिषेधो गुणेन बाध्यते न तु ङित्सार्वधातुकनिमित्तः । 'प्रतिषेधाश्च बलीयांसो भवन्ती'त्युभयप्रसङ्गे प्रतिषेधः प्रवर्तते ।

**अदृश्रमिति** । मिबादेशस्याऽमः पित्त्वान्ङित्त्वाऽभावान्नास्ति गुणप्रतिषेधः । **एवं तर्हीति** । पूर्वान्ते रुटि अलघूपधत्वाद्गुणाऽभावः । लघूपधगुणस्यैव हि 'ऋदृशोङि गुण' इति गुणप्रत्यापत्तिः क्रियते । अथ वा गुणश्रुत्येक इत्युपस्थानात्तस्यैवाऽङो-

उ.] सहविधानबोधकचशब्दाऽभावात् । तदाह-**अद्भावे कृते इत्यादि** । चकारकरणे तु तत्करणप्रयुक्तं गौरवमेव दोष इति भावः । नन्वच्छब्दस्य रुटि तेन समुदायस्य व्यवधानाच्छीङः सार्वधातुके इति गुणो न स्यादत आह-**अच्छब्दस्येति** । रुड्विशिष्टस्यैव सार्वधातुकत्वादिति भावः ॥ [ झोऽन्तः ] ॥

**शीङो रुट् । गुणात्पूर्वं रुटीति** । बहुलं छन्दसीति अङ्गसंज्ञानिमित्तप्रत्ययमात्राश्रयो रुडन्तरङ्गः । गुणस्तु प्रकृतिप्रत्ययोभयाश्रयत्वाद्बहिरङ्ग इति भावः ।

**कृते इति** । तत्र कृतेऽपीत्यर्थः । ननु प्रतिषेधविषयोऽयं गुणः प्रतिषेधं बाधेतेत्यत आह-**येन नेति । तन्निमित्त एवेति** । अङ्निमित्त एवेत्यर्थः । नन्वेवमपि परत्वाद्गुणः प्रतिषेधं बाधेतेत्यत आह- **प्रतिषेधाश्चेति** । विध्युन्मूलकत्वादिति भावः । **प्रत्यापत्तिः**-प्रतिप्रसवः । यदि दृशोऽपूर्वो गुणो विधीयत इत्याश्रीयते

गुणविधिः ॥*॥ पूर्वान्ते शीङो गुणो विधेयः । शेरते ॥ [सिद्ध्यत्येवं[1]] सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं 'रुटि दृशिगुणप्रतिषेध' इति ॥ पूर्वान्तेप्येष दोषः ॥ कथम् ? ॥ अयं दृशिगुणः प्रतिषेधविषय आरभ्यते स यथा 'क्ङिति चे'त्येतं प्रतिषेधं बाधते एवमनुपधाया अपि प्रसज्येत । तस्मादुभाभ्यामेव दृशेरक्प्रत्ययान्तरं वक्तव्यं, पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम् ॥*॥ झादेशादाड्लेटि ॥*॥ झादेशादाड् लेटि भवति विप्रतिषेधेन। झादेशस्यावकाशः—लुनते। लुनताम्। अलुनत। आटोऽवकाशः—पताति दिद्युत्। उदधिं च्यावयाति। इहोभयं प्राप्नोति-'अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै'। आड् लेटि भवति विप्रतिषेधेन ॥ स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? ॥*॥ न वा नित्यत्वादाटः ॥*॥ नवा वक्तव्यः ॥ किं कारणम् ? ॥ 'नित्यत्वादाटः'। नित्यआडागमः ॥ स कथं नित्यः ? ॥ यद्यनकारान्तग्रहणं झकारविशेषणम् ॥ अथ हि प्रत्ययविशेषणम्? ॥ झादेशोपि

प्र.] विशेषणाद्येननाव्यवधानमित्येकवर्णव्यवहितस्य गुणो भवति । रुटि कृते न भवति। शेरत इति। रुकि सत्यनिगन्तत्वाद्गुणप्रसङ्गः। पूर्वान्तेपीति। 'क्ङितिचे'ति गुणे प्रतिषिद्धे अपूर्वः 'ऋदृशोऽङि गुण' इति गुणो विधीयते। स यथैव प्रतिषेधविषये प्रवर्तते तथैवाऽनुपधाया अपि इकः प्रवर्तेत । अङ्ग्रहणं च श्रुतत्वात् दृशेरेव विशेषणं नेकः । दृशेरक्प्रत्ययान्तरमिति । यश्च लिङ्याशिष्यङ्यश्चेरितोवेत्यङ् तत्प्रसङ्गे छन्दसि दृशेरग्वक्तव्यः । अथ भाषायामदर्शन्नित्यत्र ङित्सार्वधातुकनिमित्तः प्रतिषेधः कस्मान्न भवति ?; क्ङितीतिनिमित्तसप्तमीविज्ञानाद्वार्णादाङ्गं बलीय इत्येकादेशात्पूर्वमेव गुणविधानाद्वा, स्थानिवद्भावाद्वा, एकादेशस्य व्यवधानात्कृतार्थस्य वा प्रतिषेधस्य परत्वाद्गुणेन बाधनात्। झादेशोपि नित्य इति। द्वयोश्च नित्यत्वे 'न वा नित्यत्वादाट' इति न शक्यते वक्तुम्। झविशेषणपक्षेऽप्यभेदाश्रयेणाऽऽटो नित्यत्वम्। भेददर्शने तु शब्दान्तरप्राप्त्याऽऽडप्यनित्यः। यदि

उ.] तदाऽपि न दोष इत्याह—अथवेति। अनुपधाया अपीति । निषेधसूत्राणां परिभाषावद्विध्येकवाक्यतया क्ङितीत्यस्य उपधाया इत्यस्य च बाधे विनिगमकाऽभावादिति भावः । नन्विकोऽङा विशेषणान्न दोष इत्युक्तन्तत्राह—अङ्ग्रहणञ्चेति । लिङ्गाच्छ्रुतेर्बलवत्त्वादिति भावः । लिङ्याशिष्यङिति । 'दृशेय'मित्यत्राऽस्याऽप्राप्तिः। स्थानिवद्भावाद्वेति। 'अचः परस्मि'न्नित्यनेन। कृतार्थस्य वेति । 'भिन्न' इत्यादौ। अत्र विधेरेव निषेधापवादकत्वेन 'निषेधाश्च बलीयांस' इत्यस्याऽविषय इति भावः। झादेशादिति। पूर्वप्रतिषेधवार्तिकमाटोऽन्तरङ्गत्वं लावस्थायामाटः प्रवृत्तिं चानभ्युपगम्येति बोध्यम्। अत्रत्यसिद्धान्तोऽप्येवमेव, 'शयान्तै' इत्यत्र पूर्वमाटोऽप्रवृत्तौ अदादेशः[3] स्यात्पूर्वमाटि तु तेन व्यवधानान्नाऽदादेश इति भावः।

१ अयं पाठो लुप्तः सम्प्रति । २ 'प्रवर्त्तते' पा० । ३ 'आदेशः' पा० ।

नित्यः । * अन्तरङ्गलक्षणत्वाच्च * । अन्तरङ्गः खल्वपि आडागमः ॥ कथमन्तरङ्गः ?॥ यदि प्राग्लादेशाद्धात्वधिकारः ॥ अथ हि लादेशे धात्वधिकारोऽनुवर्तते उभयं समानाश्रयम् ॥ यद्येव अनकारान्तग्रहणं प्रत्ययविशेषणम्, अथापि लादेशे धात्वधिकारोऽनुवर्तते उभयथापि पूर्वविप्रतिषेधेन नार्थः ॥ कथम् ? ॥ 'बहुलं छन्दसी'त्येवमत्र शपो लुङ् भविष्यति । तत्राऽनत इति प्रतिषेधो भविष्यति ॥ [ शीङो रुट् ] ।

वेत्तेर्विभाषा ॥७।१।७॥ बहुलं छन्दसि ॥७।१।८॥
अतो भिस ऐस् ॥७।१।९॥ बहुलं छन्दसि ॥७।१।१०॥

[ ॥ * ॥ इदं[1] द्विःक्रियते एकं शक्यमकर्तुम् ॥ * ॥ ] इदं 'बहुलं छन्दसी'ति द्विःक्रियते एकं शक्यमकर्तुम् ॥ कथम् ? ॥ यदि तावत्पूर्वं क्रियते परं न करिष्यते, 'अतो भिस ऐ'सित्यत्र 'बहुलं छन्दसी'त्येतदनुवर्तिष्यते । अथ परं क्रियते पूर्वं न[2] करिष्यते, 'बहुलं छन्दसी'त्यत्र रुडप्यनुवर्त्तिष्यते ॥ अपर आह—[ ॥ * ॥ उभे[1] बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्त्तुम् ॥ * ॥ ] उभे बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् ॥ कथम् ? ॥ इदमस्ति 'वेत्तेर्विभाषा' । ततः 'छन्दसि' । छन्दसि च विभाषा । ततः [ 'अतो भिस[3] ऐस् ।' ] अतो भिस ऐस् भवति । छन्दसि विभाषेति ॥

अतो भिस ऐस् ॥७।१।९॥

इह वृक्षैः प्लक्षैरिति परत्वादेत्वं प्राप्नोति । [एत्वे कृते[3] विहतनिमित्तत्वा-

---

प्र.] प्राग्लादेशादिति । तदा प्रत्ययमात्रापेक्षत्वादाडन्तरङ्गः ॥ [ शीङो रुट् ] ॥

वेत्तेर्विभाषा । बहु[लं छन्दसि] । अतो भिस ऐसित्यत्रेति । वाक्यभेदेन संबन्धाद्भाषायामपि ऐस् भवति । छन्दसि च विभाषेति । प्रत्ययमात्रस्य छन्दसि रुड्विधीयते विभाषा । व्यवस्थितविभाषाविज्ञानाच्च यथाप्रयोगं रुड्विधिः । [वेत्ते] ।

अतो भिस ऐस । परत्वादिति । एत्वस्याऽवकाशो—वृक्षेष्विति । ऐसोऽवकाशः कृत एत्वे । प्रागेत्वादुभयप्रसङ्गे परत्वादेत्वप्रसङ्गः । मुख्यशब्दार्थाश्रयणेनाऽनवकाशं

---

उ.]शब्दान्तरप्राप्त्या आटोऽनित्यत्वं स्यादित्याशङ्क्याह–अभेदाश्रयेणेति । स्थानिविशेषमनादृत्य कार्यमात्रस्याऽभेदाश्रयेणेत्यर्थः । भेदेति ! कार्यिभेदात्कार्यभेदाश्रयण इत्यर्थः । [ शीङो रुट् ] ॥

वेत्तेर्विभाषा । ननु बहुलग्रहणाऽभावे 'शीङो रु'डिति सूत्रभाष्योक्ते'ऽदृश्र'-मित्यादौ रुड् स्यादत आह–प्रत्ययमात्रस्येति । नन्वेवमपि सर्वस्य प्रत्ययमात्रस्य विभाषा रुट् स्यादत आह–व्यवस्थितेति । [ वेत्तर्विभाषा ] ।

अतो भिसः । मुख्यशब्दार्थेति । साम्प्रतिकेत्यर्थः । एवञ्चैत्वमपवादत्वा-

---

१ इदं वार्तिकं सम्प्रति लुप्तम् । २ 'न पूर्वं' पा० । ३ अयं पाठः क्वाचित्कः ।

दैस्त्वं न भविष्यति । ॥*॥ एत्वं भिसि परत्वाच्चेदतऐस् क भविष्यति ? ॥*॥ ]

ऐस्भाव इदानीं क भविष्यति ? ॥ * ॥ कृते एत्वे भौतपूर्व्यात् ॥ * ॥ कृते एत्वे भूतपूर्वमकारान्तमिति ऐस् भविष्यति ॥ * ॥ ऐस्तु नित्यस्तथा सति ॥ * ॥ एवं सति नित्य ऐस्भावः, कृतेऽप्येत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वादैस्त्वे कृते विहतनिमित्तत्वादेत्वं न भविष्यति ॥

॥ * ॥ एत्वं भिसि परत्वाच्चेदत ऐस् क भविष्यति ?
कृते एत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥ * ॥

## नेदमदसोरकोः ॥७।१।११॥

इमौ द्वौ प्रतिषेधावुच्येते उभौ शक्याववक्तुम् ॥ कथम् ? ॥ एवं वक्ष्यामि–'इदमदसोः का'दिति; तन्नियमार्थं भविष्यति-'इदमदसोः कादेव नान्यत' इति ॥[ नेदमदसोरकोः ] ॥

## टाङसिङसामिनात्स्याः ॥७।१।१२॥

किमर्थमिनादेश उच्यते न नादेश एवोच्येत ? ॥ का रूपसिद्धिः–वृक्षेण प्लक्षेण ? ॥ एत्वे योगविभागः करिष्यते ॥ कथम् ? ॥ इदमस्ति 'बहुवचने झल्येत्' । 'ओसि च' । ततः–'आङि च' । आङि च परतोऽत एत्वं भवति—वृक्षेण प्लक्षेण । तत्र 'आपः संबुद्धौ च' । आपः [ संम्बुद्धौ च—] आङि च ओसि चेति ॥ नैवं शक्यम्—इह हि 'अनेने'ति इद्रूपलोपः प्रसज्येत ॥ झलि लोपः करिष्यते ॥ न शक्यो झलि लोपः कर्तुम्—इह हि

प्र.] मत्वा पृच्छति—ऐस्भाव इदानीमिति । कृत एत्वे इति । साम्प्रतिकाऽभावे भूतपूर्वगतिराश्रीयते । ननु नाऽप्राप्त एत्वे ऐसारभ्यमाणस्तस्याऽपवादो युक्तः, उत्सर्गापवादयोश्चाऽयुक्तो विप्रतिषेधः । एवं तर्हि पूर्वपक्षवादिनोत्सर्गापवादमनाश्रित्य चोदितमिति तदनुसारेणैव सिद्धान्तवादी परिहरति—ऐस्तु नित्य इति ॥

टाङसिङसाम् । आङि चेति । स्थानिवद्भावान्नादेशे एत्वं विज्ञायते । अनेनेति । नस्य हलादित्वाल्लोपे सति एनेति प्राप्नोति । झलि लोप इति । 'हलिलोप' इत्यपनीय 'झलि लोप' इति सूत्रं कर्तव्यम् । नकारस्तु झल्न भवतीति

उ.] द्वाधित्वा ऐसिति भावः। अनाश्रित्येति । सर्वथाऽसंभवे एव बाधकत्वमिति वार्तिकरीत्येत्यर्थः । 'तथा सती'त्यनेनाऽनवकाशत्वमेव दृढं कृतं । कृते चारितार्थ्यमङ्गीकृत्य परत्वादेत्वमित्यङ्गीकारे इति हि तदर्थः । अङ्गीकार इत्यनेनाऽनवकाशत्वं सूचितम् । [ अतो भिस ऐस् ] ॥

टाङसि । नादेशे आङोऽभावादाह-स्थानिवद्भावादिति । नच परत्वादेत्वे नादेशविधायकवैयर्थ्यापत्तिः । तत्सामर्थ्यादेव पूर्वं नादेशे एत्वमिति क्रमाश्रयणा-

१ श्लोकवार्त्तिकमेतत् । २ वार्त्तिककृतो न्यासोऽयमिति गौडाः । ३ अयं पाठः क्वचिदपि न ।

दोषः स्यात्–अया विष्ठेति ॥ एवं तर्हि अन् लोपापवादो विज्ञास्यते ॥ कथम्?॥ एवं वक्ष्यामि-'अन् ने च आपि चे'ति। तन्नकारग्रहणं कर्तव्यम्?॥ न कर्तव्यम्। क्रियते न्यास एव-लुप्तनिर्दिष्टो नकारः ॥ यद्येवं 'नोपधायाः' इति दीर्घत्वं प्राप्नोति॥ सौत्रो निर्देशः ॥ अथ वा नपुंसकनिर्देशः करिष्यते ॥

अथ किमर्थमाादत्युच्यते, न अदेवोच्येत॥ का रूपसिद्धिः-वृक्षात्प्लक्षात्?॥ सवर्णदीर्घत्वेन सिद्धम् ॥ न सिध्यति। 'अतो गुणे पररूप'मिति पररूपत्वं प्राप्नोति ॥ अकारोच्चारणसामर्थ्यान्न भविष्यति ॥ यदि प्राप्नुवन्विधिरुच्चारण-सामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति॥ नैष दोषः। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। पररूपं प्रत्यकारोच्चारणमनर्थकं, सवर्णदीर्घस्य पुनर्निमित्तमेव॥

प्र.] लोपाऽभावः। अयेति। इदमश्चतुर्थ्येकवचनस्य 'सुपां सुलु'गिति यादेशः। तस्या झलादित्वादिद्रूपलोपाऽप्रसङ्गाद्धलि लोप इति वक्तव्यं, तथा चानेनेति न सिध्यति। एवं तर्हीति। नश्च आप् च नाप्, तस्मिन्परत इदमोऽनादेश इति सूत्रार्थ आश्रीयते। लुप्तनिर्दिष्ट इति। निर्दिश्य लुप्त इत्यर्थः। यद्येवं नलोपस्या-ऽसिद्धत्वादीर्घत्वं प्राप्नोति—यथा राजेति। नैष दोषः। 'छन्दोवत्सूत्राणि भवन्ति' 'सुपां सुलु' गिति लुकि कृते 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधादीर्घत्वाऽभावः। सौत्र इति। सूत्रे कृतः सौत्रः। 'कृतलब्धे'त्यण्। अकारोच्चारणसामर्थ्यादिति। अन्यथा तकार एव विधीयेत। 'आदेः परस्ये'त्यादेस्तकारे विहिते संयोगान्तलोपे च 'वृक्ष'दिति सिध्यति। तदेवं भाष्यकारेण नादेशोऽदादेशश्च व्यवस्थापितः। अन्ये त्वतिजरसिनाऽतिजरसादिति सिद्धये इन आच्च विहिताविल्याहुः सन्निपात-परिभाषाया अनित्यत्वाज्जरसादेशं वदन्तः। भाष्यकारस्तु–सन्निपातपरिभाषा-माश्रित्य जरसादेशमनभ्युपयन्नतिजरेणाऽतिजरादिति भाव्यमिति मत्वा गौरवमुद्भा-वितवान्। [ टाङसिङसामिनात्स्याः ] ॥

उ.] ददोषः। लोपे-इदो लोपे। नश्चाप्चेति। 'अन् नापी'ति छेद इत्यर्थः। 'लुप्तनिर्दिष्ट' इत्यत्र 'पूर्वकालैके'ति समासे पूर्वं लुप्तः पश्चान्निर्दिष्ट इत्यर्थः प्रतीयते सोऽयुक्त इत्यत आह-निर्दिश्येति। भाष्यकारवचनात्परकालस्याऽपि पूर्वनिपात इति भावः। द्वितीयो नकारः पदान्तत्वाल्लुप्त इति तात्पर्यम्।

ननु सूत्रेऽपि लक्षणानुसारेणैव निर्देशो युक्त इत्ययं परिहारोऽयुक्त इत्यत आह-छन्दोवदिति। छान्दसत्वानाश्रणेऽपि परिहारमाह-भाष्ये—अथवेति। शब्दस्वरूपं विशेष्यमित्याशयः। प्रत्याख्यानेनेदं ध्वन्यते—'एतत्क्लेशपरिहार्थ एवे-कारो न त्वस्य फलान्तरकल्पनेऽभिनिवेष्टव्य'मितिदिक्। अनभ्युपयन्निति। इणः शतरि रूपम्। इदं 'जराया' इति सूत्रे स्फुटीभविष्यति। इति भाव्यमिति।

१ अयं पाठः क्वाचित्कः।

## ङेर्यः ॥७।१।१३॥

किमिदं चतुर्थ्येकवचनस्य ग्रहणमाहोस्वित्सप्तम्येकवचनस्य ग्रहणं? ॥ कुतः सन्देहः? ॥ समानो निर्देशः ॥ चतुर्थ्येकवचनस्य ग्रहणम् ॥ कथं ज्ञायते? ॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ इहापि तर्हि चतुर्थ्येकवचनस्य ग्रहणं स्यात्,—'ङेराम्नद्याम्नीभ्यः'॥ एवं तर्हि 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मितीह चतुर्थ्येकवचनस्य ग्रहणं व्याख्यास्यामस्तत्र सप्तम्येकवचनस्येति ॥ [ ङेर्यः ] ॥

## सर्वनाम्नः स्मै ॥७।१।१४॥

॥ * ॥ अश एकादिष्टत्वात्स्मायादीनामुपसङ्ख्यानम् ॥ * ॥ अश एकादिष्टत्वा[1]त्स्मायादीनामुपसङ्ख्यानं कर्तव्यम्—अथो अत्रास्मै, अथो अत्रास्मात्, अथो अत्रास्मिन्निति; एकादेशे कृते 'अत' इति स्मायादयो न

प्र.] ङेर्यः । कुतः सन्देह इति । प्रयोगे 'वृक्षाये'त्यादौ चतुर्थ्यर्थावगमादयुक्तः सन्देह इति भावः । इतरो लक्षणमात्रशरणो भूत्वाऽऽह—**समानो निर्देश इति । लक्षणप्रतिपदोक्तयोरिति** । चतुर्थ्येकवचनस्य 'ङेः' इति रूपं प्रतिपदोक्तम्। सप्तम्येकवचनस्यतु 'घेर्ङिती'तिगुणे कृते 'ङे'रिति लाक्षणिकं रूपम् । **इहापि तर्हीति** । 'ङे'रितिषष्ठ्यन्तं रूपमुपात्तं, तच्चोभयोरपि लाक्षणिकमितिपरिभाषाया अयमविषयः । अथ प्रत्ययात्पूर्वस्य भागस्य लाक्षणिकत्वप्रतिपदोक्तत्वसंभवापेक्षा परिभाषाप्रवृत्तिस्तदाऽन्यत्रापि प्रवर्तेत । **एवं तर्हीति**। लिङ्गदर्शनं चास्य—'तस्मै प्रभवति सन्तापादिभ्यः' । 'तदस्यां प्रहरणमिति क्रीडायां ण'इति ।। [ 'ङेर्यः' ] ॥

**सर्वनाम्नः स्मै । अश एकादिष्टत्वादिति** । लोकेऽर्थप्रतिपादनाय वाक्यमु-

उ.] इत्येव भाव्यमित्यर्थः । नच विभक्त्यादेशेभ्यः परत्वाज्जरसादेशेऽतिजरसेत्याद्यपीति—'इत्येवे'त्यसङ्गतम् । 'अतिजरांसी'त्यत्र जसः शिभावे कृते नुम्जरसोः प्राप्तौ नुम् विप्रतिषेधेनेति 'जराया' इति सूत्रस्थभाष्येण विभक्तित्वज्ञानप्रकृतिप्रत्ययोभयापेक्षजरसादेशापेक्षया विभक्तिकार्याणामन्तरङ्गत्वात्पूर्वं प्रवृत्तिस्वीकारेणाऽदोषात् । 'टाङसी'त्यादीनामङ्गनिमित्तटादीनामित्यर्थ इति नोभयापेक्षत्वम् । एतेन प्रत्ययविशेषापेक्षत्वेनादेशा बहिरङ्गा इत्यपास्तम् । तादृशबहिरङ्गत्वस्य भाष्ये क्वाप्याश्रयणाऽभावात् । किञ्च परत्वाज्जरसादेशे एतत्कैयटग्रन्थस्याऽसंभवदुक्तिकतैव, पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे च तस्याऽप्राप्त्या 'सन्निपातपरिभाषयाऽनभ्युपय'न्नित्यस्याऽसङ्गतत्वादिति दिक् ॥ [ टाङसिङसामिनात्स्याः । ]

**ङेर्यः** । 'ङे'रित्यत्र प्रकृतिरूपस्य लाक्षणिकत्वादि कथ्यत इत्याह-**चतुर्थ्येकवचनस्येति** । [ ङेर्यः ] ।

**सर्वनाम्नः** । पदसंस्कारपक्षे, स्वार्थद्रव्यलिङ्गादिक्रमेणाऽन्वाख्यानपक्षे च

१ इदं वार्त्तिकमिति **गौडाः** । २ 'दिष्टात्' पा० ।

प्राप्नुवन्ति ॥ किं पुनः कारणमेकादेशस्तावद्भवति न पुनः स्मायादयो, न परत्वात्स्मायादिभिर्भवितव्यम् ? ॥ न भवितव्यम् ॥ किं कारणम् ? ॥ ॥ * ॥ नित्यत्वादेकादेशः ॥ * ॥ नित्य एकादेशः कृतेष्वपि स्मायादिषु प्राप्नोत्यकृतेष्वपि । नित्यत्वादेकादेशे कृते'ऽत' इति स्मायादयो न प्राप्नुवन्ति ॥

किमुच्यते अश इति, नेहापि कर्तव्यम्—अत्रास्मै अत्रास्मात् अत्रास्मिन्निति; एकादेशे कृते अत इति स्मायादयो न प्राप्नुवन्ति ॥ * ॥ आनुपूर्व्या सिद्धमेतत्[1] ॥ * ॥ नात्राऽकृतेषु स्मायादिषु हलादिर्विभक्तिरस्ति, हलादौ च इद्रूपलोपो न चाऽकृते इद्रूपलोपे एकादेशः प्राप्नोतितदानुपूर्व्या सिद्धम् ॥ तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ? ॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥ न वा कर्तव्यम् ॥ किं कारणम् ? ॥ 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गलक्षण एकादेशोऽन्तरङ्गाः स्मायादयः ॥ * ॥ 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥ * ॥

## जसः शी ॥७।१।१७॥ जश्शसोः शिः ॥७।१।२०॥

किमर्थं शीभावः शिभावश्चोच्यते, न शिभाव एवोच्येत ? ॥ का रूपसिद्धिः—ते ये के ॥ आद्गुणेन सिद्धम् ॥ नैवं शक्यम्—इह हि त्रपुणी जतुनी, दीर्घश्रवणं न स्यात् ॥ एवं तर्हि शीभाव एवोच्येत[2] ॥ नैवं शक्यम् । इह हि कुण्डानि वनानीति ह्रस्वस्य श्रवणं[3] न प्रसज्येत । तस्माच्छीभावः शिभावश्च ॥ [ जसः शी ] ॥

## औङ आपः ॥७।१।१८॥

किमर्थो ङकारः ? ॥ सामान्यग्रहणार्थः[5] । 'औ' इत्युच्यमाने प्रथमा-

---

प्र.] च्चार्यते, तदेव व्याकरणेऽपि विभज्याऽन्वाख्यायते। ततश्च अत्र 'अ–ए' इति स्थिते नित्यत्वादेकादेशः प्राप्नोति, तस्मिन् कृतेऽदन्तत्वाभावाद्वर्णविधावन्तादिवद्भावाऽभावात्ताद्रूप्यानतिदेशात्स्मायाद्यसिद्धिरिति भावः। आनुपूर्व्येति । अत्र 'इदम्–ए' इति स्थिते त्यदाद्यत्वे कृते स्मायादयः । ततो नित्यत्वादाद्गुणं बाधित्वा इद्रूपलोपे कृते सवर्णदीर्घत्वेन रूपं सिद्धमित्यर्थः[4] । नवेति । पदद्वयाश्रयत्वादेकादेशो बहिरङ्गः । एकपदाश्रयत्वात्स्मायाद्योऽन्तरङ्गाः । [ सर्वनाम्नः स्मै ] ॥

जसःशी । शीभावशिभावयोः क्वचिद्रूपाऽभेदं दृष्ट्वा प्रश्नः—किमर्थमिति ।

---

उ.] दोषाऽभावादाह-लोके इति। 'वर्णविधा'वित्यस्य-प्रत्याख्यानेऽप्याह—ताद्रूप्येति॥

औङ आपः । ननूभयसङ्ग्रहार्थं ङकारोच्चारणस्य सत्त्वात् 'किमर्थं' इति प्रश्नानुपपत्तिरत आह—औङितीति । असिद्धस्याऽनुवादे न प्रयोजनमित्यर्थः ।

---

१ 'आनुपूर्व्यात्' पा० । २ 'उच्यतां' पा० ।
३ 'श्रवणं न स्यात्' पा० । ४ 'सिद्ध्यती'ति मुद्रितः पाठः ।
५ ॥*॥ "ङकारः सामान्यग्रहणार्थः" ॥*॥ इति वार्तिकमिति तु गौडाः ।

**द्विवचनस्यैव स्यात् ॥ अथापि 'औ'ङित्युच्यते एवमपि द्वितीयाद्विर्वचनस्यैव स्यात् ॥ अस्ति प्रयोजनमेतत् ? ॥ किं तर्हीति ॥ ङित्कार्यं तु प्राप्नोति—खट्वे । माले । याडाप इति याट् प्राप्नोति ॥ नैष दोषः । नैवं विज्ञायते ङकार इदस्य सोऽयं ङित्, ङितीति ॥ कथं तर्हि ? ॥ ङ एव इत् ङित्, ङितीति ॥ एवं सति वर्णग्रहणमिदं भवति, वर्णग्रहणेषु चैतद्भवति—'यस्मिन्विधिस्तदादावल्ग्रहण' इति,–न दोषो भवति ॥**

**अथ वा वर्णग्रहणमिदं भवति न चैतद्वर्णग्रहणेषु भवति 'अननुबन्धक-**

---

प्र.] **औङ आपः** । 'औ'ङिति भूतानुवादः । न क्वचिदौङिति रूपं विज्ञातमभूत्तस्य च भूतवदुपादाने किं प्रयोजनमिति प्रश्नः । **किमर्थं इति** । **औ इत्युच्यमान इति** । निरनुबन्धकपरिभाषयेति भावः । यद्यपि टकारः प्रत्याहारार्थत्वात्समुदायानुबन्धस्तथाप्यनेकान्ता **अनुबन्धा** इति दर्शने, 'एकान्ता' इति दर्शने वा अवयवावयवस्याऽपि समुदायावयवत्वदर्शनात् प्रत्ययस्या(ऽप्य)नुबन्धः स्यात् । 'प्रयोजनाभावात्प्रत्ययानुबन्धो न भविष्यती'ति चेदिह तस्य ग्रहणं मा भूदिति प्रयोजनं स्यात् । यद्येवमौङ इत्युच्यमाने 'तदनुबन्धकग्रहणेनाऽतदनुबन्धकस्ये'ति द्वितीयाद्विर्वचनग्रहणं न प्राप्नोति । ङकारोच्चारणसामर्थ्याद्भविष्यतीत्यदोषः ।

**ङित्कार्यं त्विति** । 'औङ' इति वचनात्प्रथमाद्वितीयाद्विवचनयोरौङो विधायकं वाक्यमनुमीयत इत्युपदेशोऽन्त्यत्वान्ङकारस्येत्संज्ञायां सत्यां ङित्कार्यप्रसङ्गः ।

**अथ वेति** । 'औङ' इति वर्णमात्रं निर्दिश्यते, ङकारस्त्वसन्देहार्थो नाऽनुब-

---

उ.] **अनेकान्ता इति** । अत्र पक्षे आनन्तर्यमेव संबन्धो नत्ववयवावयविभावः । तच्चसमुदायस्येव प्रत्ययस्याऽप्यस्तीत्यर्थः । **अवयवावयवस्यापीति** । 'द्विगता अपि हेतवो भवन्ति आम्राश्च सिक्ताः पितरश्च तृप्ता' इतिन्यायादवयवस्य समुदायस्य चाऽवयवत्वं न विरुध्यत इति भावः । **इह**—शीविधौ । **तस्य**-द्वितीयाद्विवचनस्य । **न प्राप्नोतीति** । अत्र टकारस्याप्यनुबन्धस्य भावादिति भावः ।

नन्वौङो विधानाऽभावेनोपदेशाऽभावात्प्रत्ययाद्यन्तत्वाभावाच्चेत्संज्ञाऽभावेन कथमित्कार्यापादनमत आह—**औङ इतीति** । चित्रङ इवेति भावः ।असिद्धानुवादाभावात्तदनुपत्त्या औऔटोरौङ् भवतीति वाक्यमनुमीयत इति तात्पर्यम् । नच याटि अवश्यं प्राप्ते शीभावारम्भादयमपवाद इति न दोषः । कृते चारितार्थ्येनाऽसंभव एव बाधकत्वमिति वार्तिकरीत्या शङ्कासत्त्वात् । इत्संज्ञकङकारादाविति व्याख्याने 'आङ्याजयारामुपसङ्ख्यान'मिति 'सुपां सुलुक्'सूत्रस्थवार्तिकविहिताऽऽङः 'प्रवाहवे'त्युदाहरणमसङ्गतं स्यादित्यरुचेराह—**भाष्ये—अथवा वर्णेति** ।

**असन्देहार्थ इति** । 'आव' इत्युच्यमाने किमयमाव् उत 'औ' इति सन्देहः स्यादितिभावः । ननु निरनुबन्धकत्वे औटः सानुबन्धकत्वाद्ग्रहणं न स्यादत आह—

---

१ ङकार पा० । २ क्वचित्तु 'औङिती'त्यस्यादावेव 'किमर्थं' इतिप्रतीकं धृतमस्ति ।

**ग्रहणे न सानुबन्धकस्ये'ति ॥ अथ वा पूर्वसूत्रनिर्देशोऽयं, पूर्वसूत्रेषु च येऽनुबन्धा न तैरिहेत्कार्याणि क्रियन्ते ॥**

॥ * ॥ औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ? ।
सामान्यार्थस्तस्य चासञ्जने स्मिन्ङित्कार्यं ते श्यां प्रसक्तं स दोषः ॥ १ ॥
ङित्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ ।
वर्णश्चायं तेन ङित्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ॥ २ ॥ * ॥

## अष्टाभ्य औश् ॥७।१।२१॥

॥ * ॥ औशघौ ॥ * ॥ **औशघाविति वक्तव्यम् ॥ किमिदमघाविति ? ॥ अनुत्तरपद इति॥ किं प्रयोजनम् ?॥ इह मा भूत्—अष्टपुत्रः अष्टभार्य इति ।** ॥ * ॥ अस्तु लुक्त्र ॥ * ॥ **अस्त्वत्रौश्त्वं, लुग्भविष्यति** ॥ * ॥ षड्भ्यो-

**प्र.]** न्धार्थः। 'ऋदोर'बिति यथा दकारः। अङ्गाक्षिप्तश्च प्रत्यय औकारेण विशेष्यत-इति औकारान्तस्य शीभावो विधीयमानोऽन्तवद्भावात्केवलस्याप्यौकारस्य प्रवर्तते । प्रत्ययस्य चानुबन्धभावाऽभावाभ्यां निरनुबन्धकपरिभाषा व्यवस्थां करोति न वर्णस्य । **अथ वेति ।** पूर्वाचार्यैर्द्वे अपि द्विवचने ङितौ पठिते। न चेह क्वचिदप्यौङ्-प्रत्ययोऽस्ति, सामान्यग्रहणार्थं च पूर्वसूत्रनिर्देशः, तेन यः पूर्वसूत्रे औङ् तस्य ग्रहणं भवतीति प्रथमाद्वितीयाद्विवचनयोर्ग्रहणसिद्धिः । **वर्णश्चायमिति ।** औकारो वर्ण एव निर्दिष्टो न प्रत्यय इत्यर्थः । **तेन ङित्वे न दोष इति ।** ङित्वे सति यो दोषः स नास्ति, ङित्वस्यैवाऽभावादित्यर्थः । **[ औङ आपः ] ॥**

**अष्टाभ्य औश् । औशघाविति ।** औशादेशो नाप्राप्ते लुक्यारभ्यमाणो विशेषाऽभावात्सर्वस्य लुको बाधकः प्राप्नोतीति भावः । इतरो येन नाप्राप्तिन्यायेन 'षड्भ्यो लु'गित्यस्यैवायमपवादो 'न सुपो धातुप्रातिपदिकयो' रित्यस्यापीति मत्वा-ऽऽह—**अस्त्विति ।** भवत्वौशादेशस्तस्य लुग्भविष्यतीत्यर्थः । एतच्चौशादेशप्रवृत्ति-

**उ.]** प्रत्ययस्य चेति। तदेतद्भाष्ये उक्तं—**नचैतद्वर्णग्रहणेष्वित्यादिना।** अनेन 'औ' इत्युच्यमाने प्रथमाद्विवचनस्यैव स्यादिति दोष उद्धृतः । ङित्वाऽभावाच्च याट्प्राप्ति-रेव नेति बोध्यम् । ननु संभवति प्रत्ययग्रहणे कुतो वर्णग्रहणं स्यादित्यरुचे-राह—**भाष्ये—अथवेति । नचेहेति ।** एवञ्च सामर्थ्यात्पूर्वसूत्रनिर्देशः, तत्फलं च सामान्यग्रहणमिति भावः । **भाष्ये—कोऽयं प्रकार इति ।** अयुक्तोऽयं निर्देश-प्रकार इत्यर्थः । **ङित्वे विद्याद्वर्णेति ।** 'याडाप' इत्यत्रानुवृत्तं 'ङिती'ति कर्मधार-येण वर्णनिर्देश इत्यर्थः । तदादिविधौ च स्वरूपसत्सप्तम्येव निमित्तं नत्वर्थ-निर्देश इत्युक्तम् । **वर्णश्चायमिति ।** चशब्दो वार्थे । ननु ङित्वस्यैवाऽभावे 'ङित्वे न दोष' इत्ययुक्तमत आह—**ङित्वे सतीति ॥** [ सर्वनाम्नः स्मै ] ॥

**अष्टाभ्य औश् । सर्वस्य-'षड्भ्य'** इत्यस्य, 'सुपो धा'त्वित्यस्य च । **प्रवृत्ति-**

१ श्लोकवार्त्तिकमेतत् । २ इतिः क्वाचित्कः । ३ 'औशघा'विति पा० ।

ऽप्येवं प्रसज्यते ॥ * ॥ [ **षड्भ्योऽप्येवं प्रसज्यते ।** ] **इहापि तर्हि प्राप्नोति— अष्टौ तिष्ठन्ति अष्टौ पश्येति** ॥ * ॥ अपवादः ॥ * ॥ **अपवादत्वादत्रौश्त्वं लुकं बाधिष्यते ॥ इहापि तर्हि बाधेत—अष्टपुत्रः अष्टभार्यः** ॥ * ॥ यस्य विषये ॥ * ॥ **यस्य लुको विषये औश्त्वं तस्यापवादः** ॥ * ॥ यो वा तस्मादनन्तरः ॥ * ॥ **अथ वाऽनन्तरस्य लुको बाधकं भविष्यति ॥ कुत एतत् ?** ॥ * ॥ **'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति** ॥ * ॥ **अथेह कस्मान्न**

---

**प्र.]** मभ्युपगम्योच्यते । नित्यत्वात्पूर्वमेव लुका भाव्यम् । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति वा । इतरो लुको विशेषमपश्यन्यद्यपवादे प्रवृत्ते उत्सर्गः प्रवर्तते तदाऽतिप्रसङ्ग इत्याह—**षड्भ्य इति** । सूत्रैकदेशानुकरणमेतत् । 'षड्भ्यो लु'गित्ययमप्यौशो लुक् प्राप्नोति । अथ विधानसामर्थ्यान्न भवति तदाऽष्टपुत्र इत्यत्रापि न प्राप्नोतीत्यर्थः । इतरो येन नाप्राप्ते तस्य बाधनमित्याश्रित्याह—**अपवाद इति** । 'षड्भ्यो लु'गिति सर्वत्र प्राप्नोतीति स एवौशा बाध्यते, 'सुपो धातुप्रातिपदिकयो'रित्ययं तु क्वचित्प्राप्नोतीति तं प्रत्यस्य बाधकत्वाऽयोगादन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति पूर्वमेव लुक् प्रवर्तते । **यो वा तस्मादिति** । औशः 'षड्भ्यो लु'गित्ययमनन्तरः । द्वितीयाध्यायविहितस्तु व्यवहितः । ननु 'मध्येऽपवादा' इति द्वितीयाध्यायविहितस्यैव लुको बाधः प्राप्नोति । नैष दोषः । यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य युक्तो बाधः । इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुग्व्यवहिता यत्नेन स्मरणीयोऽनन्तरस्त्वनुभवनीय इति स एव बाध्यते । अथ वा सत्यामसत्यां चोपलब्धौ प्रत्यासत्त्याऽनन्तरस्यैव बाधेन भाव्यम् । एतच्च लुकः समकक्षत्वमभ्युपगम्योक्तम् । भिन्नकक्षौ त्वेतौ लुकौ, एकस्य सर्वत्र प्राप्त्याऽपरस्य क्वचित्प्राप्त्या । **अथेहेति** । 'अष्टाभ्य' इति विभक्तौ लक्षणवशादाकारो निर्दिष्टो-

---

**उ.]** **मभ्युपगम्येति** । वस्तुतोऽस्त्वत्रौश्त्वमित्यस्य—प्राप्नोत्वत्रौश्त्वमित्यर्थः । **लुग्भविष्यतीत्यस्य** लुग्बाधको भविष्यतीत्यर्थ इति न दोषः । गौणेऽप्यस्य प्रवृत्तिर्भवतीत्याशयेन—'औशधा'विति वार्तिकं प्रवृत्तमिति बोध्यम् । प्रियाष्टादीनां त्वनभिधानमेवेति तदाशयः । **क्वचिदिति** । समासादावित्यर्थः । ननु समासेऽप्यन्तरङ्गत्वादौश् प्राप्नोतीत्यत आह—**अन्तरङ्गानपीति** । **व्यवहिताविति** । कालतस्तुल्यावित्यर्थः । **तत्र पूर्वेति** । तत्र 'को बाध्यता'मिति विशेषचिन्तायां पूर्वस्यैव बाधो न्याय्य इति भावः । पूर्वानुभवसंस्कारजन्यस्मृतिविषयस्येत्यक्षरार्थः । उत्तरस्य तु —अननुभवात्स्मृत्ययोगः, न्यायान्तरसत्त्वेऽपि प्रत्यासत्तिन्याय एवाऽत्राश्रीयत इत्यर्थो 'यो वा तस्मादनन्तर' इति भाष्यस्येत्याह—**अथवेति** । येन नाप्राप्त्या यत्रोभयबाधकत्वं प्राप्तं तत्रैव एते न्याया व्यवस्थापका इत्याशयेनाह—**एतच्चेति** । एवञ्च 'यस्य विषये' इत्येष एव समाधिर्मुख्य इति भावः । ननु कृतालनिर्देशा-

**भवत्यौश्त्वम्—अष्ट तिष्ठन्ति अष्ट पश्येति ?** ॥ * ॥ आत्वं[1] यत्र[2] तु तत्रौश्त्वम् ॥ * ॥ **यत्रैवात्त्वं तत्रैवौश्त्वेन भवितव्यम्** ॥ **कुत एतत् ?** ॥ ॥ * ॥ तथा ह्यस्य ग्रहः कृतः ॥ * ॥ **तथा ह्यस्यात्वभूतस्य ग्रहणं क्रियते—'अष्टाभ्य' इति ॥ ननु च नित्यमात्वम् ॥ एतदेव ज्ञापयत्याचार्यो 'विभाषा आत्व'मिति यदयमात्वभूतस्य ग्रहणं करोति—'अष्टाभ्य' इति । इतरथा हि 'अष्टन' इत्येव ब्रूयात् ॥**

॥ * ॥ औशघावस्तु लुक्तत्र षड्भ्योऽप्येवं प्रसज्यते ।
अपवादो यस्य विषये यो वा तस्मादनन्तरः ॥ १ ॥ * ॥
॥ * ॥ आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ।
स्वमोर्लुक्[3] च त्यदादीनां कृते ह्यत्वे न लुग्भवेत् ॥ २ ॥ * ॥

## स्वमोर्नपुंसकात् ॥७।१।२३॥

॥ * ॥ स्वमोर्लुक्त्यदादिभ्यश्च ॥ * ॥ **स्वमोर्लुक्त्यदादिभ्यश्चेति वक्तव्यम् । इहापि यथा स्यात्—तद्ब्राह्मणकुलमिति ॥ किं पुनः कारणं न सिध्यति ?** ॥

---

**प्र.**] ऽशक्त औशं विषयविशेषे व्यवस्थापयितुम् । **आत्वं तु यत्रेति** । कृताकारस्यानुकरणमष्टाशब्दः । **ननु चेति** । लक्षणवशाद्विभक्तावाकारं[4] विधाय निर्देशः कृत इति चोदकाशयः । **एतदेवेति** । लाघवार्थमष्टन इति वक्तव्ये कृतात्वस्येदमनुकरणम्, तस्य चैतत्प्रयोजनं—'कृतात्वाद्यथा स्यादकृतात्वान्मा भू'दिति । यदि च नित्यमात्वं स्यात्ततो[5] व्यवच्छेद्याऽभावात्कृतात्वानुकरणमनर्थकं स्यात्तस्मात्कृतात्वानुकरणनिर्देश आत्वविकल्पस्य ज्ञापकः ।

**स्वमोरिति**—उत्तरसूत्रोपस्थाप्यमानार्थसङ्ग्रहः । [ **अष्टाभ्य औश्** ] ॥

---

**उ.**] दात्त्वाऽभावे कथमतिव्याप्तिरत आह—**अष्टाभ्य इति** । **अष्टन इतीति** । न च यथान्यासे बहुवचनेन गौणेऽस्याऽप्रवृत्तिः । तव तु तदभावे[6] गौणेऽपि स्यादिति दोष इति वाच्यम्; आत्वपक्ष एव प्रवृत्तिरित्यर्थबोधनार्थं बहुवचनस्य चारितार्थ्येनेतरार्थकल्पने मानाऽभावात् । न च कृतात्वानुकरणादेकवचनेनैव सिद्धौ बहुवचनं गौणेऽप्रवृत्त्यर्थमिति वाच्यम्; 'अष्टन इत्येव ब्रूया'दिति भाष्यविरुद्धसूत्राशयकल्पनाया अनुचितत्वात् । शब्दबाहुल्येन बहुवचनस्य न्यायप्राप्तत्वाच्च । 'तिसृभ्यो जस' इतिवद्गौणानां प्रियाष्टादीनामनभिधानस्य 'ष्णान्ता षट्'सूत्रे भाष्ये उक्तत्वाच्च ।

**ज्ञापक इति** । इदञ्च 'हली'त्यननुवृत्तिपक्षे । तदनुवृत्तिपक्षे तु जश्शसोर्विषये आत्वस्याऽपीदमेव ज्ञापकमिति बोध्यम् । **उत्तरसूत्रोपस्थाप्यमानेति** । उत्तरसूत्रे उपसङ्ख्यायमानेत्यर्थः । [ **अष्टाभ्य औश्** ] ॥

---

१ श्लोकवार्तिके इमे । २ 'आत्वं तु यत्र' पा० । ३ स्वमोर्नपुंसकादित्यस्य वार्त्तिकमेतत् । ४ वात्वं विधाय' पा० । ५ 'तदा' पा० । ६ 'तदभावेन' पा० ।

॥ * ॥ कृते ह्यत्वे न लुग्भवेत् ॥ * ॥ अत्वे कृते लुङ् प्राप्नोति । इदमिह संप्रधार्यमत्वं क्रियतां लुगिति, किमत्र कर्तव्यम् ? ॥ परत्वादत्वम् ॥ नित्यो लुक् , कृतेऽप्यत्वे प्राप्नोत्यकृतेऽपि ॥ अनित्यो लुक्, नहि कृतेऽत्वे प्राप्नोति । 'अतोऽ'मित्यम्भावेन भवितव्यम् । तस्मात्त्यदादिभ्यश्चेति वक्तव्यम्॥

इदं विचार्यते—शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं वा स्यादर्थग्रहणं वेति ? ॥

---

प्र.] **स्वमोर्नपुंसकात्** । **तदिति** । 'तदोः सः सा'विति सत्वमप्यत्र प्राप्नोति । **नित्यो लुगिति** । अत्वं तु लुकि कृते 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधाद्विभक्त्यभावान्न प्राप्नोतीत्यनित्यम् । **अनित्यो लुगिति** । 'यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्य'मित्येतत्तु पाक्षिकम् । यदा द्वयोर्लक्षणयोः संप्रधारणं क्रियते तदा यल्लक्षणप्रवृत्तावपि यस्य द्वितीयस्य लक्षणस्य प्रवृत्तिव्याघातो नास्ति तत्प्रति न तस्य दौर्बल्यं, लक्षणान्तरेण चैतत्प्रवृत्तिनिवारणात् । यथा वालिसुग्रीवयोर्युद्धे भगवता रामेण वालिनो वधेऽपि न सुग्रीवापेक्षं दौर्बल्यमभिदधति शूरमानिनः । एतद्दर्शनसंश्रयेणोच्यते–'**यस्य च लक्षणान्तरेणे**'ति । यदा त्वेष न्याय आश्रीयते लक्षणान्तरप्रवृत्तिनिमित्तमुपसंहरल्लक्षणं बलवद्भवति, इतरत्तु तदुपसंहृतनिमित्तलक्षणान्तरोपपादितप्रवृत्तिविघातं दुर्बलमेव । तथा च भगवद्वासुदेवसहायत्वात्पाण्डवा बलिनो दुर्बलान्धार्तराष्ट्रान् विजिग्यिरे तदा नास्त्येव–'यस्य च लक्षणान्तरेणे'ति । **केचित्तु**–'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते'इत्यत्रापिग्रहणान्नित्यानां चपरेषां च लुका बाधनमिच्छन्तस्त्यदाद्यत्वं लुका बाध्यतइत्याहुः । तथा चोच्यते–'सर्वविधिभ्यो लुग्विधिर्बलवा'निति । **शिशीति** । अङ्गस्येत्यनुवर्तनादङ्गस्य य औङ्-

---

उ.] **स्वमोर्नपुंसकात्** । **सत्वमपीति** । सावत्वे कृते लुगप्राप्ताविति भावः । **पाक्षिकमिति** । कृताऽकृतप्रसङ्गित्वमात्रेणाऽपि क्वचिन्नित्यताभ्युपगमादिति भावः । तदेवोपपादयति—**यदा द्वयोरिति** । **उपसंहरदिति** । सम्पादयदित्यर्थः । यथाऽत्वशास्त्रम् । **इतरत्त्विति** । यथा–लुक्शास्त्रं । **तदुपसंहृतेति** । तच्छब्देन प्रकृतेऽत्वविधायकं परामृश्यते । तत्संपादितनिमित्तकेनाऽतोमिति लक्षणान्तरेणोपपादितः संपादितः प्रवृत्तिविघातो यस्य तल्लुक्शास्त्रं दुर्बलमित्यर्थः । यथा वासुदेवसहायत्वेऽपि पाण्डवानां बलवत्त्वमेव व्यवहरन्ति तद्वदित्यर्थः । **वासुदेवसहायत्वादिति,**–ल्यब्लोपे पञ्चमी । तत्सहायत्वं प्राप्येत्यर्थः । **विजिग्यिर इति** । 'इत्यभिदधती'त्यनुषज्यते । वचनं विनाऽपीष्टसिद्धिन्दर्शयति-**केचित्त्विति** । 'त्यदादिभ्यश्चेति वक्तव्य'मिति भाष्ये काकुः । **न वक्तव्यमित्यर्थः** । हेतुस्तु प्रसिद्ध एव—'अन्तरङ्गानपी'ति न्यायरूप इति तदाशयः । एतेनैतद्भाष्यबलादन्तरङ्गानपीति न्यायः सामासिकलुग्विषय एवेति भ्राम्यन्तः परास्ताः, एङ्ह्रस्वादिति सूत्रस्थभाष्यविरोधात् । **अङ्गस्य य औङिति** । अङ्गस्य निमित्तमित्यर्थः । **नपुंसकाद्यो विहत**

**कश्चात्र विशेषः ?**॥*॥ शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः ॥ * ॥ **शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधो वक्तव्यः। बहुत्रपुः बहुत्रपू बहुत्रपव इति ॥**

**अस्तु तर्ह्यर्थग्रहणम् ॥ यद्यर्थग्रहणं-प्रियसक्थ्ना ब्राह्मणेनेत्यत्रानङ् प्राप्नोति ॥ अस्तु तर्हि शब्दग्रहणमेव ॥ ननु चोक्तं—"शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः ॥" इति ॥**

॥ * ॥ सिद्धं तु प्रकृतार्थविशेषणत्वात् ॥ * ॥ **सिद्धमेतत् ॥ कथम् ? ॥ [ 'प्रकृतार्थविशेषणत्वात्' ] । प्रकृतस्यार्थो विशेष्यते ॥ किं च प्रकृतम् ? ॥ अङ्गम् । अङ्गस्य शिशीलुङ्नुमो भवन्ति नपुंसके वर्तमानस्य ॥ कथं–प्रियसक्थ्ना ब्राह्मणेन ? । ॥ * ॥ अस्थ्यादिषु शब्दग्रहणम् ॥ * ॥**

---

प्र.]नपुंसकात्परस्तस्य शीतिविज्ञायमाने शब्दग्रहणंभवति। यदाप्यङ्गादितिविभक्तिविपरिणाम आश्रीयते नपुंसकेन चाङ्गं विशेष्यते 'नपुंसकान्तादङ्गात्परस्ये'ति तदापि शब्दग्रहणम् ।यदा तु 'नपुंसकाद्यो विहित' इत्याश्रीयते,प्रधानं वा नपुंसकमङ्गेन विशेष्यते 'नपुंसकादङ्गात्परस्ये'ति,–तदाऽर्थग्रहणं। शब्दद्वारकं चार्थेन पौर्वापर्यादिकमाश्रीयते।

**प्रियसक्थ्नेति**। 'नपुंसकस्य झलच' इत्यतो नपुंसकग्रहणमस्थ्यादिसूत्रेऽनपुंसकसंज्ञाशब्दनिवृत्त्यर्थमनुवर्तते । यद्यपि–'**अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिष्वि**'तिसंज्ञाशब्दानामप्रसङ्गः, तथापि न्यायानुसरणे गौरवप्रसङ्गान्नपुंसकानुवृत्तिराश्रीयते । उत्तरार्थं च । 'ई च द्विवचने' इत्यत्र 'नपुंसकस्ये'ति 'पुंव'दिति चानुवर्तते, तेन छन्दसि नपुंसकस्य पुंवद्भावान्मधोर्गृह्णातीत्यादौ नुमभावसिद्धिः ।

**सिद्धं त्विति** । विषयविभागाश्रयेणाभिमतार्थसिद्धिः । शिशीलुङ्नुम्विधिष्वर्थग्रहणमस्थ्यादिषु शब्दग्रहणमित्यर्थः । **अस्थ्यादिष्विति** । विशेषणविशेष्यभावे कामचारान्नपुंसकार्थविशिष्टैरस्थ्यादिभिरङ्गं[2] विशेष्यत इति नपुंसकाऽस्थ्याद्यन्तस्याऽङ्गस्याऽनपुंसकस्याप्यनङ् भवति । 'पदाङ्गाधिकारे तस्य च ग्रहणं तदुत्तरपदस्य चे'ति

---

उ.]**इति** । नपुंसकादर्थादित्यर्थः । **नपुंसकादङ्गादिति** । नपुंसकत्वविशिष्टाऽङ्गार्थादित्यर्थः । कथं पुनरर्थेन पौर्वापर्यमत आह—**शब्दद्वारकञ्चेति** । आदिना विधानं । 'स्त्रिया' इति सूत्रस्थेन 'न ह्यर्थेन पौर्वापर्यमस्ती'ति भाष्येणेदं विरुध्यते । तस्मा**दर्थग्रहणमित्यस्य** भाष्यस्य,–नपुंसकार्थादङ्गात्परस्येत्यर्थः । अर्थपरस्य 'नपुंसक'-शब्दस्याऽर्थप्रतिपादके लक्षणेति भावः ।अनङ्विधौ नपुंसकग्रहणाभावात्कथमव्याप्त्युद्भावनमत आह—**नपुंसकस्येति** । **तेन छन्दसीति** । वाक्यभेदेन संबन्धादिति भावः ॥ 'व्यत्ययो बहुल'मिति लिङ्गव्यत्ययेनाऽपीदं सिध्यति । किञ्चाऽभिव्यक्तेति न्यायः पदकार्य एवेति नाऽत्र तस्य विषयः । अतएव सर्वनामसंज्ञायां संज्ञाप्रति-

---

१ अयं पाठो लुप्तः सम्प्रति । २ 'नपुंसकलिङ्गविशिष्टैः' पा० ।

**अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम् ॥ युक्तं पुनरिदं विचारयितुम् । नन्वनेनाऽसन्दिग्धेनार्थग्रहणेन भवितव्यं, नहि नपुंसकं नाम शब्दोऽस्ति ॥ किं तर्ह्युच्यतेऽस्थ्यादिषु शब्दग्रहणमिति, अत्राप्यर्थग्रहणमेव ॥**

**अत्रैतावान् सन्देहः—क्व प्रकृतस्यार्थो विशेष्यते, क्व गृह्यमाणस्येति ? ॥ शिशीलुङ्नुम्विधिषु प्रकृतस्यार्थो विशेष्यतेऽस्थ्यादिषु गृह्यमाणस्य ॥**

**अद्ड्डतरादिभ्यः पञ्चभ्यः ॥७।१।२५॥**

॥ * ॥ अड्भावे पूर्वसवर्णप्रतिषेधः ॥ * ॥ **अड्भावे पूर्वसवर्णस्य प्रतिषेधो वक्तव्यः । कतरत्तिष्ठति । कतरत्पश्य[1] ।** ॥ * ॥ सिद्धमनुनासिकोपधत्वात् ॥ * ॥ **सिद्धमेतत् ॥ कथम् ? ॥ [ 'अनु[2]नासिकोपधत्वात्' ] अनुनासिको-**

प्र.] वचनात्केवलानामप्यस्थ्यादीनामनङ् भवति ।

इदानीं भाष्यकारो विचारमेव पूर्वोक्तमाक्षिप्यमाण आह—**युक्तं पुनरिति** । अर्थमनपेक्ष्य शब्दग्रहणपक्षाऽसंभव इति भावः । **किं तर्ह्युच्यत इति** । नैवेदं वक्तव्यमित्यर्थः । कस्मा[3]न्न वक्तव्यमित्याह—**अत्रापीति** । अर्थधर्मत्वाल्लिङ्गस्य नपुंसकार्थाभिधायित्वादस्थ्यादयो नपुंसकशब्देनाभिधीयन्त इत्यर्थग्रहणमेव भवति । तस्माद्विशेषणविशेष्यभावविचार एव युक्तो न तु यथेष्टसिद्ध्यनङ्गत्वादसंभवादेकतरपक्षग्रहणविचारः ॥ [ **स्वमोर्नपुंसकात्** ] ॥

**अद्ड्डतरादिभ्यः पञ्चभ्यः** । **अड्भाव इति** । सुस्थानिकेऽदादेशोऽयं दोषः । अमादेशे त्वदि स्थानिवद्भावादमिपूर्वइतिपूर्वरूपं सिद्धमिति । **सिद्धं त्विति** । अनुनासिकत्वेन निवृत्तिर्लक्ष्यते । तेनोच्चारणार्थोऽकारो दकारमात्रं त्वादेशः । आदेः परस्ये'-

उ.] षेध आरब्ध' इत्यन्ये । 'अस्थ्यादिषु शब्दग्रहण'मित्यनेन गृह्यमाणाऽस्थ्यादिविशेषणं नपुंसकग्रहणमित्युक्तमित्याह—**विशेषणेति** । **नपुंसकार्थविशिष्टैरिति** । 'गुणः कृतात्मसंस्कार' इति न्यायादिति भावः । **नैवेदमिति** । किंशब्द आक्षेपे इत्यर्थः । **न त्वित्यस्य**,—'एकतरपक्षग्रहणविचार' इत्यनेनान्वयः । 'युक्त' इति च शेषः । तत्र हेतुः—**यथेष्टेत्यादिः** । शब्दग्रहणपक्षस्य यथेष्टसिद्ध्यनङ्गत्वादर्थपक्ष एवेष्टसङ्ग्रहादसंभवाच्चाऽस्य पक्षस्य कोऽप्यन्तराऽभावेन वार्तिककृतो विचारो न युक्त इत्यर्थः । एवञ्च गृह्यमाणसंभवे तद्विशेषणमेव लिङ्गग्रहणं, तदभावे प्रकृतस्याङ्गस्येति निर्णयः । 'अतएव 'वा शा'विति नाऽसूत्रि । तत्र हि नपुंसकग्रहणं गृह्यमाणशत्रन्तस्यैव नपुंसकत्वे यथा स्यादित्यर्थं, तेन बहवो ददतो येषु तानि बहुददतीत्यत्र न । बहूनि ददन्ति येषु ते 'बहुददन्त' इत्यत्र च नुम्भवतीति बोध्यम् ॥ [**स्वमोर्न**]

**अद्ड्ड । अमादेशे त्विति** । 'कतरत्पश्ये'ति भाष्योदाहरणस्य हे कतरत्त्वं पश्येत्यर्थो बोध्यः । **निवृत्तिर्लक्ष्यत इति** । इत्संज्ञायां फलाऽभावादिति भावः ।

१ 'पश्यति' पा० । २ अयं पाठो लुप्तः । ३ 'कस्मादिदानीं न' पा० ।

**पधोऽच्छब्दः करिष्यते** ॥ * ॥ दुक्करणाद्वा ॥ * ॥ **अथवा दुग् डतरादीनामिति वक्ष्यामि** ॥ * ॥ डित्करणाद्वा ॥ * **अथवा डिदच्छब्दः करिष्यते ॥ स तर्हि डकारः कर्तव्यः ? ॥ न कर्तव्यः । क्रियते न्यास एव । द्विडकारको निर्देशः,–'अद्ड्डतरादिभ्य' इति** । [ अद्ड्डतरादिभ्यः ] ॥

## नेतराच्छन्दसि ॥ ७।१।२६॥

॥ * ॥ इतराच्छन्दसि प्रतिषेधे एकतरात्सर्वत्र ॥ * ॥ **इतराच्छन्दसि प्रतिषेधे एकतरात्सर्वत्रेति वक्तव्यम् । एकतरं तिष्ठति । एकतरं पश्य ॥** ॥ * ॥ नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन ॥*॥ **नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन । नपुंसकादेशानामवकाशः—त्रपु त्रपुणी त्रपूणि । युष्मदस्मदोर्विभक्त्यादेशानामवकाशः—त्वं ब्राह्मणः, अहं ब्राह्मणः, युवां ब्राह्मणौ, आवां ब्राह्मणौ, यूयं ब्राह्मणाः, वयं ब्राह्मणाः । इहोभयं प्राप्नोति—त्वं ब्राह्मणकुलम् अहं ब्राह्मणकुलम् । युवां ब्राह्मणकुले आवां ब्राह्मणकुले । यूयं ब्राह्मणकुलानि, वयं ब्राह्मणकुलानि । युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन ॥**

---

प्र.]त्यम आदेर्भवति । मकारस्य तु 'संयोगान्तस्य लोप'इतिलोपः । उच्चारणार्थानां त्वनुनासिकत्वप्रतिज्ञायां 'ब्रुवो वचि'रिति वच्यादीनां नुम्प्रसङ्गः । एतस्मिन्पक्षे 'हे कतर'दित्यत्र संबुद्धिलोपप्रसङ्गं मत्वाह–**दुक्करणाद्वेति** । कार्यिभेदाच्च दुका लुङ्न बाध्यते । **द्विडकारक इति** । दकारस्य ष्टुत्वं स्वरूपविनाशप्रसङ्गान्न कृतं, नापि डकारस्य संयोगान्तलोपः ॥ **[ अद्ड्डतरादिभ्यः ]** ॥

**नेतरा । नपुंसकादेशेभ्य इति** । 'अलिङ्गे युष्मदस्मदी' इत्यनाश्रित्याऽयं विचारः । स्वौजसमां लुक्शीशयः परत्वादमा बाध्यन्त इत्यर्थः । **[नेतराच्छन्दसि]** ।

---

उ.] **संयोगान्तस्य लोप इति** । उत्तरसूत्रे झल्ग्रहणेन क्वचिदझलोऽपि लोप इत्यभिप्रेत्येदम् । ननूच्चारणार्थस्याऽपि निवृत्तयेऽनुनासिकत्वमावश्यकमत आह—**उच्चारणार्थानान्त्विति** । **परे** तु विधेयविषये उच्चारणार्थस्याऽपि निवृत्तिर्यत्नं विना दुर्लभेति अनुनासिकत्वमावश्यकं । वच्यादौ नुम् तु न, धातूपदेशे इदित्त्वाऽभावात् । येषां हि पदार्थोपस्थितिकाले धातुत्वं तेषामुपदेशो धातूपदेशोऽस्य तु विधानोत्तरमतिदेशेन धातुत्वं, स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वेकः सत्त्वाच्चेत्याहुः ।

ननु येन नाप्राप्तिन्यायेन दुका लुको बाधे 'कतर'दित्यादिरूपाऽसिद्धिरत आह—**कार्यिभेदाच्चेति** । ननु कार्यिभेदेऽपि नुम्नुटोरिव बाधकत्वं दुर्वारमित्यरुचेराह—भाष्ये—**अथवा डिदिति** । ननु त्रिडकारक इति वक्तुं युक्तमत आह—**दकारस्येति । स्वरूपेति** । विवक्षितादेशरूपेत्यर्थः । **नाऽपीति** । पूर्वोक्तहेतोरेव । एतदर्थमेव विधेयस्याऽप्यदः पूर्वं निर्देशः । **[ अद्ड्डतरादिभ्यः ]** ।

**नेतरा । अमा बाध्यन्त इति** । विभक्त्यादेशशब्देनाऽमेवोच्यते । स्थानिभेद-

अथेदानीं युष्मदस्मदेर्विभक्त्यादेशेषु कृतेषु पुनः प्रसङ्गाच्छिशीलुङ्नुम्विधयः कस्मान्न भवन्ति ? ॥ * ॥ सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ * ॥—इति[1] ॥

## युष्मदस्मद्भ्यां ङसोऽश् ॥७।१।२७॥

किमर्थः शकारः ? ॥ सर्वादेशार्थः[2] । शित्सर्वस्येति सर्वादेशो यथा स्यात् ॥ नैतदस्ति प्रयोजनम्—अक्रियमाणेऽपि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्याऽकारे कृते त्रयाणामकाराणामतो गुणे पररूपत्वे सिद्धं रूपं स्यात्—तव स्वम् मम स्वम् ॥ यद्येतल्लभ्येत कृतं स्यात्तत्तु न लभ्यम् ॥ किं कारणम् ? ॥ अत्र हि तस्मादित्युत्तरस्यादेः परस्येत्यकारस्य प्रसज्येत ॥

अत उत्तरं पठति—॥ * ॥ ङस आदेशे शित्करणानर्थक्यमकारस्याकारवचनानर्थक्यात् ॥ * ॥ ङस आदेशे शित्करणमनर्थकम् ॥ किं कारणम् ? ॥ 'अकारस्याकारवचनानर्थक्यात्' । अकारस्याऽकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति । ॥ * ॥ अर्थवत्त्वादेशे लोपार्थम् ॥ * ॥ अर्थवत्त्वकारस्याऽऽकारवचनम् ॥ कोऽर्थः ? ॥ 'आदेशे लोपार्थम्' ।

---

प्र.] युष्मदस्मद्भ्यां ङसोऽश् । किमर्थ इति । अकारस्याऽकारवचने प्रयोजनाऽभावादादेः परस्येत्यस्याऽनुपस्थानादलोन्त्यस्येति सकारस्याऽकारः । 'अतो गुण' इतिपररूपेण सिद्धमिति भावः । इतरस्त्वस्त्यकारस्याकारवचने प्रयोजनमिति मत्वाह—शित्सर्वस्येति । अन्तरेणापि शकारं सर्वादेशो भविष्यतीति । आद्यानुसंहारा-

---

उ.] माश्रित्य बहुवचनं । 'यूय'मित्यादावमादौ कृतेऽन्त्यस्य शेषे लोपे तन्निमित्तके कृते 'जशः शी'त्यादि तु न, सन्निपातपरिभाषाविरोधात् । ईदृशेष्वपि सन्निपातपरिभाषाप्रवृत्तावत्र पूर्वपक्षसिद्धान्ताऽकरणपरं भाष्यमेव मानम् । 'ङे प्रथमयो'रित्यत्राऽममनुवर्त्याऽम् अमेवेति व्याख्याने पुनः प्रसङ्गेन श्याद्यापादानपरभाष्यविरोधः । अङ्गवृत्तपरिभाषा तु न क्वाऽपि लक्ष्यसिद्धये भाष्ये आदृता, शिशीविषयेऽपि पूर्वपक्षाऽसङ्गतेश्च । अतएव 'ज्यादादीयसो' 'ज्ञाजनोर्जा' 'रीङृत' इत्येतेषु एतत्परिभाषाज्ञापनोत्तरं 'किमेतस्या ज्ञापने प्रयोजन'मितिप्रश्ने 'पिबेर्गुणप्रतिषेधो न वक्तव्यो भवती'त्येवोक्तं, न तु किञ्चिदपि लक्ष्यं प्रयोजनत्वेनोक्तम् । 'भ्यसोऽभ्य'-मित्यत्र सिद्धान्ते 'अभ्य'मित्येवच्छेद इति स्पष्टं 'युष्मदस्मदोरनादेशे' इति सूत्रे भाष्ये । भाष्ये—'शिशीलुग्विधय' इत्येव पाठः । क्वचिन्नुम्विधय इति पठ्यते सोऽपपाठः, अमः सर्वनामस्थानत्वाऽभावात्प्रकृतेरिगन्तत्वाऽभावाच्चेत्याहुः । [अद्भु-]।

युष्मदस्मद्भ्यां ङ । अस्त्यकारस्येति । शेषे लोप इत्यर्थः । संपद्यते इति । सर्वादेशफलसंपत्त्या सर्वादेशो भविष्यतीत्युक्तमिति भावः । नचाऽन्त्यस्यादेशोऽपि विभक्तेरनादेशरूपत्वाद्योऽचीति दुर्वारं, पररूपे विभक्तेरेवादेशरूपत्वात् । न च 'वाणा-

---

१ इतिः क्वचिन्न । २ "शकारः सर्वादेशार्थः" इति वार्त्तिकमिति गौडाः ।

**यः स 'शेषे लोपः' आदेशे स विज्ञायते ॥ ननु चादेशो या विभक्तिरित्येवमेतद्विज्ञायते ॥ आदेश एषा विभक्तिः ॥ कथम् ? ॥**

* सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥१॥ *

॥ * ॥ तस्माच्छित्करणम् ॥ * ॥ **तस्माच्छकारः कर्तव्यः ॥ न कर्तव्यः ॥ क्रियते न्यास एव ॥ कथम् ? ॥ प्रश्लिष्टनिर्देशोऽयम्—अ अ अ इति । सोऽनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति ॥** [ युष्मदस्मद्भ्यां ] ॥

## ङे प्रथमयोरम् ॥७।१।२८॥

**'प्रथमयो'रित्युच्यते कयोरिदं प्रथमयोर्ग्रहणं, किं विभक्त्योराहो स्वि-**

प्र.] भावेऽन्त्यानुसंहाराद्वयोरकारयोः पररूपमित्यर्थात्सर्वादेशः संपद्यते । **यः स शेषे लोप इति ।** अनादेशे आत्वयत्वविधानादादेशः शेषः । **ननु चेति ।** 'शेषे लोप' इत्यत्र 'विभक्ता'वित्यनुवर्तते । तद्विशेषणं च शेषग्रहणमित्यादेशो या विभक्तिरिति विज्ञायते । नहि तदादिविधिरस्ति यत आदेशादाविति विज्ञायेत । तस्मात्सत्यप्यादेशादित्वे विभक्तेरनादेशत्वान्नैवाऽयं शेषः । ततो नास्त्यकारस्याऽकारवचने प्रयोजनम् । **सर्वे सर्वपदादेशा इत्यादि ।** 'विकारद्वारेण विभक्तेरेवादेशो विधीयत' इति विभक्तिरेवादेशः स्यादिति शित्वं सर्वादेशार्थं क्रियते । **सर्वपदादेशा** इत्यत्र 'पद'शब्देन न सुप्तिङन्तमुच्यते, किं तर्हि ?, पद्यते प्रतीयते येनार्थः—अन्वयव्यतिरेकाभ्यां कल्पिताभ्यां यस्य कल्पितार्थवत्ता तदभिधीयते । तत्राऽनन्यार्थादकारविधानादेकदेशद्वारेण विभक्तिरेवादेशः । **प्रश्लिष्टनिर्देश इति ।** ततश्चाऽकारद्वयलक्षणः समुदायः । अनेकाल्त्वात्सर्वादेशः प्रवर्तते । तस्मिन्प्रवृत्तेऽतो गुण इति पररूपमिति सिद्धमिष्टम् । **[ युष्मदस्मद्भ्यां ङसोऽश् ] ।**

**ङेप्रथमयोरम् ।** प्राधान्यलक्षणस्य प्रथमार्थस्येहाऽसंभवात्सन्निवेशापेक्षयाद्यस्य तावद्ग्रहणं विज्ञायते तत्र विशेषज्ञानाय पृच्छति–**कयोरिति ।** यदि स्त्रीलिङ्गेन निर्देशस्ततो विभक्त्योर्ग्रहणेन भाव्यं, पुँल्लिङ्गेन निर्देशे तु प्रत्यययोः। तत्र यद्यन्तरङ्गं प्राथम्यमाश्रीयते ततः पुँल्लिङ्गेन निर्देशात्प्रत्ययग्रहणम् । वर्गस्याऽसमाप्तावेव प्रत्ययोः

उ.] दाङ्गं बलीय' इति पररूपात्पूर्वमेव यत्वम्। एकस्थानिकत्वे एव वार्णाङ्गयोस्तत्प्रवृत्तेरित्याशयात् । **अनादेश इति ।** नचादेशवत्त्वात्कथमयं शेष इतिवाच्यम् , अनादेशपदे लाघवेन तत्पुरुषस्यैवाङ्गीकारादिति भावः । **नहि तदादीति ।** अल्ग्रहणे तद्विज्ञानादिति भावः । ननु विभक्तेरयमादेशो न पदस्येति कथमत्राऽयं न्यायोऽत आह—**पदशब्देनेति ।** अस्य च न्यायस्य शित्करणमेव ज्ञापकमिति बोध्यम् ॥

**ङे प्रथमयोः ।** ननु प्रथमशब्दस्याऽनेकार्थत्वेनाऽऽद्यर्थवृत्तेरेव ग्रहणमिति निश्चयाऽभावेन कुतोऽयमेव सन्देहोऽत आह—**प्राधान्येति ।** लिङ्गविषयसन्देह-

१ 'अर्थोऽनेनेति' पा० ।

त्प्रत्यययोः ? ॥ 'विभक्त्यो'रित्याह ॥ कथं ज्ञायते ? ॥ अन्यत्रापि हिं प्रथमयोर्ग्रहणे विभक्त्योर्ग्रहणं विज्ञायते न प्रत्यययोः ॥ क्वान्यत्र ? ॥ 'प्रथमयोः पूर्वसवर्ण' इति ॥ अस्ति कारणं येन तत्र विभक्त्योर्ग्रहणं विज्ञायते ॥ किं कारणम् ? ॥ 'अची'ति तत्र वर्तते न चाजादी प्रथमौ प्रत्ययौ स्तः। ननु चैवं विज्ञायते—अजादी यौ प्रथमावजादीनां वा यौ प्रथमाविति ॥ यत्तर्हि तस्माच्छसो नः पुंसीत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यो— 'विभक्त्योर्ग्रहण'मिति ॥ इहाप्याचार्यप्रवृत्तिर्ज्ञापयति—'विभक्त्योर्ग्रहण'मिति यदयं 'शसो ने'ति प्रतिषेधं शास्ति ॥ नैष प्रतिषेधो, नत्वमेतद्विधीयते ॥ सिद्ध-

---

प्र.] प्राथम्यसंप्रत्ययात्। अथ तु 'सपूर्वायाः प्रथमाया विभाषा' 'प्रथमायाश्च द्विवचने' इत्यत्र शास्त्रे प्रसिद्धिराश्रीयते ततः स्त्रीलिङ्गनिर्देशाद्विभक्तिग्रहणम्। प्रत्ययग्रहणपक्षे च युष्मदस्मदोः प्रातिपदिकत्वात्प्रातिपदिकप्रत्यययोः 'सु' 'औ' इत्यनयोर्ग्रहणेन भाव्यम्। ननु द्वयोः कथं प्राथम्यं, यावताऽऽद्यापेक्षया परस्य द्वितीयत्वम्। नैष दोषः। राश्यपेक्षया द्वयात्मकस्य समुदायस्य प्राथम्याऽविरोधात्। प्रथमसाहचर्याद्वा द्वितीयस्यापि प्रथमव्यपदेशः,—यथाऽर्धर्चाः पुंसि चेति,—गोमयादीनामर्धर्चव्यपदेशः। अन्यत्रापीति—प्रसिद्धिमाह। अस्ति कारणमिति। यस्मात्कारणात्तत्र विभक्तिग्रहणं तदिह नास्ति। न चाजादी इति। प्रथमयोर्विशेष्यत्वमचीत्यस्य विशेषणत्वमिति भावः। न चाऽजादित्वं सोः संभवतीति सामर्थ्यात्तत्र विभक्तिग्रहणं विज्ञायते। अजादी यौ प्रथमाविति। अजादी विशेष्यौ, प्राथम्यं विशेषणं, तेन चाजादित्वाऽभावात् सुः परिहृतः औजसोः प्राथम्यं न विहन्ति। यथा ब्राह्मणाऽब्राह्मणपङ्क्तौ 'ब्राह्मणौ प्रथमावानये'त्युक्ते अब्राह्मणः प्रथमोऽपि चोदनायामनन्तर्भावाद्ब्राह्मणयोर्न प्रथमव्यपदेशविघातहेतुः। अजादीनां वेति। 'अची'त्यनुवृत्तं निर्धारणसप्तम्यन्तं विज्ञायते। यदयं शसो नेति। 'ङेप्रथमयो'रित्यम्भावस्य प्राप्तस्य 'शसो ने'ति प्रतिषेधः क्रियते। ततो 'योऽची'ति यत्वे प्राप्ते 'द्वितीयायां चे'त्यात्वे कृते 'प्रथमयोः पूर्वसवर्ण' इतिपूर्वसवर्णे 'तस्माच्छसो नः पुंसी'ति नत्वे 'युष्मानस्मा'निति रूपं सिद्ध्यति। इतरः प्रतिषेध आश्रीयमाणे पुंस्येव नत्वं स्यान्न स्त्रीनपुंसकयोरिति मत्वाह—नैष प्रतिषेध इति। 'आदेः परस्ये'त्यादेर्नकारे कृते सकारस्य संयोगान्त-

---

उ.] स्याऽपि निदानमाह—तत्र यदीति। अन्तरङ्गत्वमेव दर्शयति—वर्गस्येति। ननु प्रत्यययोर्ग्रहणे तिङामाद्ययोः प्रत्यययोस्तिप्तसोर्ग्रहणं कुतो नेत्यत आह— प्रत्ययग्रहणेति। स्त्रीलिङ्गनिर्देशे तु प्रथमादिशब्दानां सुपां त्रिकेष्वेव रूढत्वादन्यग्रहणसंभव एव नेति भावः। समुदायस्येति। उद्भूतावयवभेदस्येत्यर्थः। साहचर्याद्वेति। 'ङे' इति लुप्तषष्ठीकं पृथक् पदमेव। एवञ्च द्विवचननिर्देशसामर्थ्याद्द्वितीयोऽपि प्रथमशब्देन लक्ष्यत इति भावः। अजादी विशेष्याविति। पूर्वं तदादिविधिः पश्चाद्विशेषणत्वम्। शब्दरूपं विशेष्यमादाय भाष्यप्रामाण्यात्तदादि-

मत्र नत्वं 'तस्माच्छसो नः पुंसी'ति ॥ यत्र तेन न सिध्यति तदर्थम् ॥ क्व च तेन न सिध्यति ? ॥ स्त्रियां नपुंसके च । 'युष्मान् ब्राह्मणीः पश्य' 'अस्मान्ब्राह्मणीः पश्य' । 'युष्मान्ब्राह्मणकुलानि पश्य' 'अस्मान् ब्राह्मणकुलानि पश्ये'ति ॥ यत्तर्हि 'युष्मदस्मदोरनादेशे' 'द्वितीयायां चे'त्याह तज्ज्ञापयत्याचार्यो–'विभक्त्योर्ग्रहण'मिति ॥ [ ङे प्रथमयोरम् ] ॥

**भ्यसोभ्यम् ॥७।१।३०॥**

किमयं भ्यम्शब्द आहो स्विदभ्यम्शब्दः ? ॥ कुतः सन्देहः ? ॥ ॥ * ॥ समानो निर्देशः ॥ * ॥ किं चातः ॥ यदि तावद्भ्यम्शब्दः शेषे लोपश्चान्त्यस्य,–एत्वं प्राप्नोति । अथाऽभ्यम्शब्दः शेषे लोपश्च टिलोपः, उदात्त-

प्र.] त्वाल्लोपः । एतच्चाभ्युपगम्य लिङ्गवत्त्वमुक्तम् । **यत्तर्हीति** । यदि प्रत्यययोरिदं ग्रहणं स्यात्ततो द्वितीयाया अनादेशत्वात्तस्यामात्वं सिद्धमेवेति 'द्वितीयायां चे'त्यात्वविधानमनर्थकं स्यात् । ननु च 'योऽची'ति यत्वे प्राप्ते तद्बाधनार्थमात्वविधानं स्यादिति कथं ज्ञापकम् ? । उच्यते । यद्येतावत्प्रयोजनं स्यात्–'योच्यनमौटो'रिति ब्रूयात् । यत्वे प्रतिषिद्धे आत्वस्य भावात् । युष्मानस्मानित्यत्रापि शसो नकारे कृते 'शेषे लोप' इति लोपे 'सुपि चे'ति दीर्घत्वं भविष्यति । **[ङे प्रथमयोरम्]** ।

**भ्यसोभ्यम् । किमयमिति** । संहितायां निर्देशस्य साम्याद्विचारः । चत्वारोऽत्र पक्षाः संभवन्ति–भ्यमादेशः, शेषे लोपोऽन्त्यलोपः । भ्यमादेशः, शेषे लोपष्टिलोपः । अभ्यमादेशः, शेषे लोपोऽन्त्यलोपः । अभ्यमादेशः, शेषे लोपष्टिलोप इति । तत्र यदा भ्यमादेशस्तदा शेषे लोपोऽन्त्यलोप एवाश्रयितव्यः, टिलोपे रूपाऽसिद्धिप्रसङ्गात् । अभ्यमादेशे शेषे लोपेऽन्त्यलोपे च द्वयोरकारयोः पररूपमेकादेश उदात्तेनोदात्त इत्युदात्तत्वं भवति । युष्मदस्मदोः प्रातिपदिकस्वरेण प्रत्ययस्वरेण वाऽन्तोदात्तत्वात् । टिलोपपक्षे चाऽकारोच्चारणमर्थवत्, अन्त्यलोपेऽप्येत्त्वानिवृत्त्यर्थमिति,–अकारोच्चारणसामर्थ्यात्सवर्णदीर्घत्वेन भाव्यमिति न चोदनीयम् । तदेवं

उ.] विधिरिति भावः । **निर्द्धारणेति** । वचनविपरिणामेनेत्यर्थः । **आदेर्नकार इति** । 'शसो ने'त्युच्चारणार्थोऽकारेणाऽविभक्तिको निर्देश इत्यर्थः । **एतच्चेति** । तदनभ्युपगमे तु पुंस्यपि असिद्धिरिति भावः । 'लिङ्गत्व'मितिपाठेऽर्श आद्यजन्तात्त्वः । **आत्वं सिद्धमिति** । 'युष्मदस्मदो'रित्यनेन । ननु 'युष्मा'नित्यत्रादेशविभक्तित्वात्कथमात्वमत आह— **युष्मानित्यादि । लोपे इति** । अन्त्यलोप इत्यर्थः । स एव च सिद्धान्त इति भावः । **[ ङे प्रथमयोरम् ]** ।

**भ्यसोऽभ्यम् । शेषेलोपष्टिलोप इति** । 'शेष' इति विषयसप्तम्या स्थानीनिर्दिष्टः । मपर्यन्ताच्च शेष इति भावः । **टिलोपे रूपेति** । एवञ्च टिलोपान्त्यलोपयोर्लक्ष्यानुरोधेन व्यवस्थेति भावः । **टिलोपपक्षे चेति** । अभ्यमादेशपक्षे

१ भाष्यमेतदित्यन्ये । वार्त्तिकमिति परे ।

निवृत्तिस्वरः प्राप्नोति ॥*॥ यथेच्छसि तथास्तु ॥*॥ अस्तु तावद्भ्यम्शब्दः शेषे लोपश्चान्त्यस्य ॥ ननु चोक्त'मेत्वं प्राप्नोती'ति ॥ नैष दोषः, 'अङ्गवृत्ते[1] पुनर्वृत्तावविधिर्निष्ठितस्ये'ति न भविष्यति ॥

अथ वा पुनरस्त्वभ्यम्शब्दः शेषे लोपश्च टिलोपः ॥ ननु चोक्तमुदात्तनिवृत्तिस्वरः प्राप्नोतीति ॥ नैष दोषः—उक्तमेतत्—'आदौ सिद्ध'मिति ॥

## साम आकम् ॥७।१।३३॥

किमर्थं सामः[2] ससकारस्य ग्रहणं क्रियते न 'आम आक'मित्येवोच्येत[3] ? ॥ केनेदानीं ससकारस्य भविष्यति ? ॥ आमोऽयं[4] सुड्भक्त आम्ग्रहणेन ग्राहिष्यते ॥ अत उत्तरं पठति—॥ * ॥ साम्ग्रहणं यथागृहीत-

प्र.] द्वितीयः पक्षोऽत्यन्तदुष्टः। तृतीयस्तु निर्दोष इति तत्परिहारेण पक्षद्वयाश्रयो भाष्ये विचारः। **उदात्तनिवृत्तिस्वर इति।** 'कर्षात्वतो घञोऽन्त उदात्त' इत्यतोऽन्तग्रहणमनुदात्तस्य च यत्रोदात्तलोप इत्यत्रानुवर्तते, ततश्चाऽन्तोदात्तं पदं प्राप्नोति, मध्योदात्तं[5] चेष्यते। **अङ्गवृत्त इति।** एत्ववत् 'सुपि चे'ति दीर्घत्वमपि न भवति। **आदौ सिद्धमिति।** अन्तग्रहणं नानुवर्तते। उच्चारणक्रमप्रत्यासत्त्या चाऽऽदेरेवोदात्तत्वम्। [ भ्यसोभ्यम् ]।

**साम आकम्। किमर्थमिति।** युष्मद्-आमिति स्थिते आदेशेनाऽत्र भाव्यमिति यत्वं न प्रवर्तते। आदेशश्च शेष इति अकृत आदेशे शेषत्वाऽभावाल्लोपाऽप्रसङ्गः। त्यदाद्यत्वमपि नास्ति, द्विपर्यन्तानां विधानात्, ततश्चाऽनकारान्तत्वादादेशप्रवृत्तिकाले सुण्नास्तीति नार्थः ससकारनिर्देशेन। कृतेऽप्याकमादेशे शेषे लोपे टिलोपे च तथैव सुण्नास्तीति भावः। इतरः कृत आदेशे शेषे लोपेऽन्त्यलोपे च सुट् प्राप्नोतीति भाविनः सुटो निवृत्त्यर्थं ससुट्कोपादानं कर्तव्यमिति मत्वाह—**केनेदानीमिति।** स एव परमतमाशङ्कते—**आमोऽयमिति।** सुडप्ययमाम्भक्त इति यदि

उ.] इदम्। **अत्यन्तदुष्ट इति।** रूपाऽसिद्धेरिति भावः। नन्वभ्यम आद्याऽकारस्योदात्तनिवृत्तिस्वरेऽपि न कश्चिद्दोषोऽत आह—**कर्षात्वत इति। उच्चारणक्रमेति।** इदं चिन्त्यं—'निजान्त्रयाणा'मित्यत्र 'त्रयाणां'ग्रहणादाद्युदात्तश्चेत्यादावादिग्रहणाच्चाऽस्या अत्र शास्त्रेऽनाश्रयणात्। तस्मान्निमित्तत्वानादरेण यत्रानुदात्ते परत उदात्तलोपस्तस्योदात्त इत्यर्थादादेरेवेति बोध्यम्। [ भ्यसोऽभ्यम् ]॥

**साम आकम्। आदेशेनात्र भाव्यमिति।** एवञ्च नित्यत्वादाकमिति भावः। 'शेषे लोपे टिलोपे चे'ति पाठे **चो** वाक्यालङ्कारे। **इतर इति।** ससुट्कोपादानं विना भाविसुण्निवृत्तये नान्यो हेतुर्विद्यत इति भाष्यार्थः। 'शेषे लोपेऽन्त्यलोपे चे'ति पाठेऽपि चः पूर्ववत्। यद्युत्तरवादिनोऽयमाशयस्तर्ह्यामोयमिति चोदकवचोऽनुपपन्न-

१ 'अनुदात्तस्य च यत्रे'ति सूत्रे। २ 'आमः' पा०। ३ 'उच्यते' पा०। ४ 'आमः सुडयं भक्तः' पा०। ५ 'अन्तोदात्तत्वं प्राप्नोति मध्योदात्तत्वं चेष्यते' पा०।

स्यादेशवचनात् ॥ * ॥ साम्ग्रहणं क्रियते ॥ [ किमर्थं ? ॥ 'यथागृहीतस्यादेशवचनात्' । ] 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवंससकारस्य न प्राप्नोति, इष्यते च स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति–साम आकम्–,एवमर्थमिदमुच्यते ॥ * ॥ न वा द्विपर्यन्तानामकारवचनादामि सकाराऽभावः ॥ * ॥ न वैतत्प्रयोजनमस्ति ॥ किं कारणम् ? ॥ 'द्विपर्यन्तानामकारवचनात्' । द्विपर्यन्तानां हि त्यदादीनामत्वमुच्यते । तेनामि सकारो न भविष्यति ॥ * ॥ सुट्प्रतिषेधस्त्वादेशे लोपविज्ञानात् ॥ * ॥ सुट्प्रतिषेधस्तु वक्तव्यः ॥ किं कारणम् ? ॥ 'आदेशे लोपविज्ञानात्' । यः स शेषे लोप आदेशे स विज्ञायते ॥ * ॥ न वा टिलोपवचनादादेशे टाप्प्रतिषेधार्थम् ॥ * ॥ न वा सुट्प्रतिषेधो वक्तव्यः ॥

प्र.] त्वं मन्यसे तत इदमुच्यते । साम्ग्रहणमिति । निर्दिश्यमानस्येति । यदि ससकारको न निर्दिश्येत तदादेशविधानकालेऽसंनिहितः पश्चादन्त्यलोपे कृते प्राप्नुवन् सुट्केन निवर्त्येत ? । इष्यते च तन्निवृत्तिरित्येवमर्थं ससकारग्रहणम् । अथवा त्यदाद्यत्वे कृते सुटि च निर्दिश्यमानस्यादेशा इति सुट्सहितस्य न प्राप्नोति । यस्तु निर्दिश्यते तस्य वचनसामर्थ्यान्निर्दिष्टग्रहणपरिभाषानुपस्थानाद्व्यवहितस्याकमादेशः प्राप्नोति, ससुट्कनिर्देशात्ससुट्कस्य भवति । अत्र पक्षे 'आमोऽयं भक्त आम्ग्रहणेन ग्रहीष्यते' इति चोदकस्यैव ग्रन्थः । इतरस्तु पूर्वां व्याख्यामबुध्वा उत्तरां च दोषवतीमवगम्याह—न वेति । टिलोप इति । वक्ष्यमाणमपर्यन्तस्थान्यपेक्षया शेषे विज्ञायमाने टेरेव शेष इति तस्यैव लोपो विज्ञायते । 'शेष' इति स्थानी

उ.] मत आह–स एवेति । 'अत उत्तरं पठती'त्येतद्व्याचष्टे—तत इदमिति । यदि ससकारक इति । निर्दिश्यमानस्य भाविनो विद्यमानस्य वादेशा निवर्तका भवन्तीति सकाराऽभावे ससकारस्य निवृत्तिर्न प्राप्नोतीति भाष्यार्थ इतिभावः । अत्र व्याख्याने नवेत्याद्यग्रिमभाष्याऽस्वारस्यं मत्वा पक्षान्तरमाह—अथवेति । 'द्विपर्यन्ताना'मित्यनभ्युपगम्येदम् । ननु निर्दिश्यमानस्य तर्हि व्यवहितत्वान्न स्यादत आह—यस्त्विति । वचनसामर्थ्यादिति । चिन्त्यमिदम् । 'अतित्याक'मिति गौणे चरितार्थत्वात् । तस्मादत्र न स्यादित्येव भाष्याशयः । इतरस्त्विति । चोदक इत्यर्थः । उत्तराञ्चेति । 'त्यदाद्यत्वे कृते' इति यत्–तदनुपपन्नमित्यनेन प्रतिपाद्यत इत्यर्थः । भाष्ये–सुट्प्रतिषेधस्त्विति । आदेशात्पूर्वन्तु सुड् दुर्लभः । आदेशोत्तरं जातस्य तु निवृत्तिः कर्तुमशक्येति सुट्प्रतिषेध एव वक्तव्य इत्यर्थः । 'आदेशे स विज्ञायत' इत्यनेन तत्रान्त्यलोपविज्ञानमुक्तं, तेन च सुट्प्राप्त्युपपादनं बोध्यम् । ननु षष्ठ्या निर्देशाभावात्कथं तस्य स्थानित्वमत आह—शेष इतीति ।

भाष्ये—यः स इति । यः (उद्देश्यः स) प्रसिद्ध आदेशे शेषे लोपः स टिलोपो वक्तव्य इत्यक्षरार्थः । नन्वत्र पक्षे शेषग्रहणस्य विभक्तिविशेषणत्वाऽभावादादेशे

किं कारणम् ? ॥ 'टिलोपवचनात्' । आदेशे यः स शेषे लोप[1]ष्टिलोपः स वक्तव्यः ॥ किं प्रयोजनम् ? ॥ 'टाप्प्रतिषेधार्थम्' । टाप्मा भूदिति ॥ स तर्हि टिलोपो[2] वक्तव्यः ? ॥ [ न वक्तव्यः[3] ] ॥*॥ न वा लिङ्गाभावाट्टिलोपवचनानर्थक्यम् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'लिङ्गाऽभावात्' । अलिङ्गे युष्मदस्मदी ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गंस्यते ॥ न ह्यस्ति-विशेषो युष्मदस्मदोः स्त्रियां पुंसि नपुंसके वा ॥ अस्ति कारणं येनैतदेवं भवति ॥ किं कारणम् ? ॥ योऽसौ विशेषवाची शब्द[स्त्रीप्रत्ययष्टाप्शब्द]स्तदसांनिध्यात् । अङ्ग ! हि भवांस्तमु[4]च्चारयतु गंस्यते स विशेषः ॥

ननु च नैतेनैवं भवितव्यम्, न हि शब्दनिमित्तकेन नामाऽर्थेन भवितव्यम् ॥ किं तर्हि ? ॥ अर्थनिमित्तकेन नाम शब्देन भवितव्यम् ॥ तदेत[5]देवं दृश्यताम्–

प्र.] विषयसप्तम्या निर्दिष्टः । लोपस्य चाऽस्मिन् पक्षे उत्सर्गत्वादनादेशे आत्वयत्वविधानादादेश एव विभक्ताववस्थितः । **टाप्प्रतिषेधार्थमिति** । टापोऽनुत्पत्त्यर्थमित्यर्थः । युष्मदस्मदोर्द्रव्यवाचित्वाद्द्रव्यस्य च लिङ्गसङ्ख्यासंबन्धादन्त्यलोपे सत्यकारान्तत्वाट्टाप्प्राप्नोति । संनिपातपरिभाषायाश्च दोषः पठितः–'त्यदाद्यकारष्टाब्विधे'रिति टापि सा नाश्रीयते । **अलिङ्गे इति** । अभिधेयस्याऽलिङ्गत्वादलिङ्गे । शब्दशक्तिस्वाभाव्याल्लिङ्गरहित एव ताभ्यामर्थोऽभिधीयते इति टाब्निवृत्तये टिलोपो नाश्रयितव्यः । **योऽसौ विशेषवाचीति** । ननु द्योतकाष्टाबादयः, तदुक्तम्—'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादय' इति । नैष दोषः । इदमप्युक्तम्––'अथ वा पुनरस्तु स्त्रियामभिधेयाया'मिति । 'अथ वा वचिर्द्योतिने वर्तते । वाचकेन खल्वप्युत्पत्तव्यम् । 'वाचकश्चेत्प्रश्नोक्तव्यो वाचकश्चेत्प्रयुज्यता'मित्यत्र वचिर्द्योतिने प्रयुक्तः ।

**न हि शब्दनिमित्तकेनेति** । ननु शब्दनिमित्त एवार्थस्तथा चैकरूपोऽप्यर्थो भिन्न-

उ.] इति कथं लक्ष्यतेऽत आह—**लोपस्य चेति** । **अवस्थित इति** । अस्य 'लोप' इति शेषः । 'अवस्थिति'रिति पाठान्तरं । प्रतिषेधशब्देनानुत्पत्तिर्विवक्षितेत्याह–**टाप इति** । **टापि सेति** । अन्यथा या सेत्यादौ न टाप्स्यात् । तेन सन्निपातपरिभाषया टान्न स्यादिति न शङ्क्यमिति भावः । ननु लिङ्गस्याऽर्थधर्मत्वा'द्युष्मदस्मच्छब्दरूपे अलिङ्गे' इत्यनुपपन्नमत आह—**अभिधेयस्येति** । नन्वनयोर्द्रव्यवाचित्वेन लिङ्गयोग आवश्यकोऽत आह—**शब्दशक्तीति** । द्रव्यत्वं तद्वाच्यस्याऽर्थस्य सङ्ख्याकारकत्वाभ्यां योगादेवेति भावः । भाष्ये—'**विशेषवाची**'त्यनेन टाबादिर्विवक्षितः । तत्र तेषां द्योतकत्वाद्वाचीत्यनुपपन्नमिति शङ्कते—**नन्विति** । 'वाचकेन खल्वपी'त्यादि—'अतिशायने तम'बित्यत्रोक्तम् । तेषाञ्च द्योतकत्वमेवाभ्युपगतमिति भावः । **ननु शब्दनिमित्त एवेति** । शब्दानुसारेणैवाऽर्थावगतिर्न वस्त्वनु-

१ 'लोपः स टिलोपो वक्तव्यः' पा० । २ 'टेर्लोपः' पा० । ३ इदं क्वचिन्न । ४ 'स्तं समु' पा० । ५ 'तदेतदेव' पा० ।

**अर्थरूपमेवैतदेवंजातीयकं, येनात्र विशेषो न गम्यत इति ॥ अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते–, योऽसौ विशेषवाची शब्द[:स्त्रीप्रत्ययष्टाप्शब्द]स्तद-सांनिध्यादत्र विशेषो न गम्यत इति–, इहापि तस्य विशेषो न गम्येत–**

प्र.] शब्दोच्चारणान्नानारूपः प्रतिभाति। यथा 'पचति' 'पाकं करोति' 'पाकक्रियानिर्वृत्तिं करोती'ति। तथा च 'बलाहकाद्विद्योतते' 'बलाहके विद्योतते' 'बलाहको विद्योतते' इति। कंसादीनां च साधनत्वं शब्दोपहितरूपाणां बुद्धिविषयाणां 'हेतुमति चे'त्यत्र प्रतिपादितम्। एवं तर्हि यः शब्दो लोकेऽत्यन्तमदृष्टप्रयोगस्तन्निमित्तोऽर्थो न भवतीत्युच्यते, शब्दं प्रयुयुक्षमाणेन लोकस्यानुसरणात्। स्वसामर्थ्येन हि शब्दोऽर्थं प्रत्याययति, तच्च सामर्थ्यं लौकिकप्रयोगादवधार्यम्। **अर्थरूपमिति**। सत्यपि वस्तुतो लिङ्गवत्त्वे युष्मदस्मद्भ्यां न तत्प्रत्याययितुं शक्यत इत्यर्थः। युष्मदस्मदभिधेयं चार्थरूपशब्देनोच्यते, न वस्तुरूपम्। तस्यैव वस्तुनो[1] ब्राह्मणादिशब्दैर्लिङ्गयुक्तस्य प्रतिपादनात्। न चाऽयं नियमः—'सत्त्वभूतोऽर्थोऽवश्यं लिङ्गसङ्ख्यायुक्तः प्रतीयत' इति; पञ्च सप्तेति लिङ्गानवगमात्। तथा च षट्संज्ञकेभ्यः स्त्रीप्रत्ययप्रतिषेधः प्रत्याख्यायते। के चिल्लिङ्गविशेषनिषेधं मन्यमाना लिङ्गसर्वनामनपुंसकयोगं युष्मदस्मदोरिच्छन्ति। तथा च शिशीलुङ्नुमां युष्मदस्मद्विभक्त्यादेशानां च विप्रतिषेध उक्तः। **अन्ये** तु दर्शनभेदेन शिशीलुङ्नुमां विप्रतिषेधः, पुंसि नत्वं च लिङ्गवत्त्वाभ्युपगमेन प्रदर्शितम्। सत्त्वभूतस्यार्थस्याऽवश्यं लिङ्गसङ्ख्यायोगः। तथा च

उ.] सारेण, तदुच्यते–'यच्छब्द आह तदस्माकं प्रमाण'मिति। 'पचती'त्यत्र क्रिया प्रधानं, द्वितीये पच्यर्थस्याऽप्राधान्यं, कर्मत्वेन प्रतीतिश्च। तृतीये तु क्रियाया अप्यप्राधान्यं। तथा 'बलाहके' इत्यत्र 'स्थित्वे'ति, द्वितीये 'निःसृत्ये'ति, तृतीये विद्युद्बलाहकयोरभेदाध्यवसायः। वस्तु त्वेकमेव सर्वत्राऽपि। शब्दजबुद्धौ प्रतिभासमान एव शब्दार्थ इत्यत्र दृष्टान्तान्तरमाह—**कंसादीनाञ्चेति**। **बुद्धिविषयाणामिति**। कथकश्रोत्रोरिति भावः। कंसादीनामिदानीमविद्यमानत्वादिति तात्पर्यम्।

**यः शब्द इति**। लोकव्यवहाराद्यस्य शब्दस्य यत्रार्थे सामर्थ्यमवगतं ततोऽन्यो योर्थः स तन्निमित्तो न भवति, व्युत्पत्तिसिद्धार्थप्रत्यायनाय शब्दप्रयोगादिति 'अर्थनिमित्तकेन शब्देन भवितव्य'मिति भाष्यार्थ इति भावः। '**अर्थरूपशब्देने**'ति निरनुस्वारः पाठः। युष्मदस्मच्छ्रवणानन्तरं यो बौद्धोऽर्थः प्रतीयते सोऽत्र अर्थरूपशब्देनोच्यत इत्यर्थः। वस्तुरूपस्य लिङ्गवत्त्वं दर्शयति—**तस्यैवेति**। ततश्च-केवलयुष्मदस्मद्भ्यां लिङ्गविशेषानवगमादलिङ्गत्वमुक्तमिति भावः। पञ्च सप्तेत्याद्यर्थस्य सत्त्वरूपत्त्वन्तु कारकत्वेनाऽन्वयादेवेति बोध्यम्। 'प्रत्याख्यायते' इत्यस्य'कैश्चिद्वृत्तिकारादिभि'रिति शेषः। नन्वत्र वार्तिककृताऽनयोरलिङ्गत्वमुक्तं, पूर्वत्र तु लिङ्गवत्त्वमाश्रित्य विप्रतिषेध उक्त इति विरोधोऽत आह—**केचिदिति**। अत्र लिङ्ग-

१ 'वस्तुतः' पा०।

दृषत् समिदिति ॥*॥ तस्मात्सुट्प्रतिषेधः ॥*॥ तस्मात्सुट्प्रतिषेधो वक्तव्यः ॥ "ससकारग्रहणं वा" कर्तव्यम् ॥

अथ क्रियमाणेऽपि ससकारग्रहणे कस्मादेवात्र सुण्न भवति ? ॥ ससकारग्रहणसामर्थ्याद्भाविनः सुट आदेशो विज्ञायते ॥ [ साम आकम् ] ।

**आत औ णलः ॥७।१।३४॥**

इह पपौ तस्थाविति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति–द्विर्वचनमेकादेश

---

प्र.] षट्संज्ञेभ्यः स्त्रीप्रत्ययनिषेधः कृतः । इह त्वलिङ्गत्वेन टाप्परिहृत इति विरोधं परिहरन्ति । **तस्मादिति** । टाबभावे टिलोपानाश्रयणादन्त्यलोपे सति सुटः प्राप्तस्य प्रतिषेधो विधेयः, लाघवात्सकारग्रहणं (वा) कर्तव्यम् । **अथेति** । आदेशप्रवृत्तिकाले संनिहित आदेशेन निवर्त्यो नान्यः । **ससकारग्रहणसामर्थ्यादिति** । न हि सत आदेशेन निवृत्तिः (क्रियते) । किं तर्हि?, अत्यन्ताभावस्तस्मिन्विषये तस्यानेनोपायेनाख्यायते । शास्त्रेण तु प्रसङ्गवतो निवृत्तिराख्यायत इति भाविनः सुटो निवृत्तिः ससुड्निर्देशेन प्रतिपाद्यते । **[ साम आकम् ] ॥**

**आत औ णलः । त्रीणि कार्याणीति** । लित्स्वरस्तु प्रयोजनाभावान्नोपन्यस्तः ।

---

उ.] वत्त्वपक्ष एव युक्तः, सूत्रवार्तिकोभयसंमतत्वात् । टिलोपस्त्वनर्थक एव, सन्निपातपरिभाषया टापोऽप्राप्तेः । अत एव वार्तिककृता त्यदाद्यत्वविषय एव टाब्विधौ तस्या दोष उक्तो नतु सामान्यतष्टाब्विधौ । अत्र 'न वा लिङ्गाऽभावा'दित्युक्तिस्त्वेकदेशिनः, अतितुच्छत्वात्, सूत्रवार्तिकविरुद्धत्वाच्च न तत्खण्डने भगवत आदर इति बोध्यम् । **टाबभावे इति** । अलिङ्गत्वात्सन्निपातपरिभाषया वा तदभावे सिद्ध इत्यर्थः । 'ससकारग्रहणं वे'त्येव ज्याय इत्याह—**लाघवादिति** । अत्र सूत्रे सकारग्रहणं भाष्यकैयटयोः सुड्ग्रहणं चागमोपलक्षणं, तेन 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रभाष्योदाहृतेऽतित्वाकमित्यादौ भाविनुटोऽपि व्यावृत्तिः । **नहि सत इति** । शब्दाऽनित्यत्वप्रसङ्गादिति भावः । **किन्तर्हीति** । यथार्द्धधातुकविषयेऽस्तेरप्रयोगो भूशब्दस्य च प्रयोगोऽस्तेर्भूरित्यनेनोपायेन प्रतिपाद्यत इति भावः । कथन्तर्हि 'स्थानिनं निवर्त्यादेशः क्रियते' इति शास्त्रे व्यवहारोऽत आह—**शास्त्रेणेति** । **प्रसङ्गवतः**-बुद्धिस्थितस्य । अस्त्युपदेशात्सर्वत्राऽस्तिबुद्धौ प्रसक्तायामार्द्धधातुके भूबुद्धिप्रतिपादनेन तद्बुद्धिनिवृत्तिः क्रियते । सैव च विषये आरोप्यत इति भावः । **भाविनः सुट इति** । भाविसुड्बुद्धेरित्यर्थः । तन्निवृत्तिश्चामोऽभावात् । अत्र सामः स्थानित्वोक्त्याऽऽकमि स्थानिवत्त्वेन साम्त्वमेव न त्वाम्त्वम्, अत्र एवाऽतिलाकमित्यादौ 'प्रत्ययोत्तरपदयो'रिति सूत्रभाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेणादेशः । आदेशस्याम्त्वाऽभावाच्चात्र न नुट् । न च यत्र भावी सुट् तत्रैवाऽयं; सामो भावित्वस्य सर्वथा दुरुपपादत्वादिति भाष्यविरुद्धकल्पना व्यर्थेतिदिक् ॥

**आत औ । सर्वथेति** । सत्यसति च लित्स्वरे 'एकादेश उदात्तेनोदात्त' इत्य-

**औत्वमिति । तद्यदि सर्वत औत्वं लभ्येत कृतं स्यात् । अथापि द्विर्वचनं लभ्येत एवमपि कृतं स्यात् । तत्तु न लभ्यम् ॥ किं कारणम् ? ॥ अत्र हि परत्वादेकादेशो द्विर्वचनं बाधते ॥ परत्वादौत्वम् ॥ नित्य एकादेश औत्वं बाधेत ॥ कं पुनर्भवानौत्वस्यावकाशं मत्वाह-'नित्य एकादेश' इति,- अनवकाशमौत्वमेकादेशं बाधिष्यते । औत्वे कृते द्विर्वचनमेकादेश इति ; यद्यपि परत्वादेकादेशः स्थानिवद्भावाद्द्विर्वचनं भविष्यति ॥** [ आत औ ] ॥

---

प्र.] सर्वथाऽन्तोदात्तत्वस्य सिद्धत्वात्। **औत्वं लभ्येत कृतं स्यादिति**। एकादेशे कृते औत्वाऽप्राप्तिदोषस्तावत्परिहृत इत्यभिसन्धाय द्विर्वचनाऽसिद्धावपि 'कृत'मित्युक्तम् । **द्विर्वचनं लभ्येतेति** । एकादेशे कृते व्यपवर्गाभावाद्या द्विर्वचनाऽप्राप्तिः सा परिहृता भवतीत्येतावता द्विर्वचनसिद्ध्या 'कृत'मित्युक्तम् । **परत्वादेकादेश इति** । वर्णाश्रयत्वादन्तरङ्गत्वादपीति द्रष्टव्यम् । **नित्य एकादेश इति** । यद्यप्यकृते औत्वे सवर्णदीर्घत्वं प्राप्नोति, कृते तु वृद्धिः, तथापि व्यक्तिभेदमनाश्रित्यैकादेशसामान्याश्रयं नित्यत्वमुच्यते । औत्वं तु कृते एकादेशे नैव प्राप्नोतीत्यनित्यम् । **अनवकाशमौत्वमिति** । सावकाशस्य सवर्णदीर्घस्य बाधकमित्यर्थः। **यद्यपीति** । 'वार्णादाङ्गं बलीय' इति पूर्वं द्विर्वचनं भवति, अथाप्यङ्गाधिकारविहितमाङ्गमुच्यते तथापि न दोष इति भावः। **स्थानिवद्भावादिति**। 'द्विर्वचननिमित्तेऽचि परतोऽजादेशः स्थानिवद्भवती'ति सूत्रार्थमाश्रित्यैकादेशे कृतेऽचःपरत्वाभावात्स्थानिवद्भावाऽभाव आशङ्कितः । 'अचि यो विहितोऽजादेशः स स्थानिव'दितिसूत्रार्थाश्रयणेन तु स्थानिवद्भाव उक्तः । नहि स्थानिवद्भावस्य परभूतोऽज् निमित्तभूत आश्रीयते । किं तर्हि ? । अजादेशस्य । यदि तर्हि स्थानिवद्भावाद्द्विर्वचनं,ततो नित्यं तदिति पूर्वमेव तेन प्रवर्त्यम् । नैतदस्ति। एकादेशोपि नित्योऽन्तरङ्गश्चेति स एव पूर्वं प्रवर्तते । क्रमप्रतिपत्त्यर्थं चानवकाशत्वमौत्वस्याश्रितम् । वृद्धिलक्षणं चैकादेशमौत्वं न बाधते, न हि तस्मिन् नाप्राप्ते औत्वमारभ्यते । **[आत औ णलः]** ॥

---

उ.] नेनाऽन्तोदात्तत्वसिद्धेरिति भावः। एतेन 'त्रीणि' इति न्यूनमित्यपास्तम् । नन्वौत्वेपि द्वित्वात्पूर्वमन्तरङ्गत्वादेकादेशे व्यपवर्गाऽभावेन द्वित्वं न स्यादिति 'कृत'मित्ययुक्तमत आह—**एकादेशे इति** । ननु द्वित्वे एकादेशे औत्वं न स्यादिति कथं कृतं स्यादत आह—**एकादेशे इति** । भाष्ये-**परत्वादौत्वमिति** । एकादेशबाधकमिति पूर्वः पक्षः । **वार्णादाङ्गमिति** । प्रत्यये परतः पूर्वस्य विधानादिदमप्याङ्गमिति भावः । **स्थानिवद्भावाऽभाव इति** । तत्र सति परत्वादेकादेश आशङ्कित इत्यर्थः । चोदकेन स्थानिवत्त्वमनाश्रित्य चोदितं, तदाशयमाह—**द्विर्वचननिमित्ते इति । अचि परत इति** । स्थानिवत्त्वस्य निमित्तमित्यर्थः । **यदि तर्हीति** । एवञ्च 'स्थानिवद्भावा'दिति हेतुरयोग्यो नित्यत्वादिति भाष्ये युक्तमिति भावः ।

नन्वनवकाशमौत्वं दीर्घवद्वृद्धिमपि बाधेतेत्यत आह—**क्रमेति** । औत्वं ततो

## विदेः शतुर्वसुः ॥७।१।३६॥

॥ * ॥ विदेर्वसोः कित्त्वम् [–वसुग्रहणे लिडादेशग्रहणार्थम् ] ॥ * ॥

**विदेर्वसोः कित्त्वं वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ [ 'वसुग्रहणेषु लिडादेशग्रहणार्थम्' ] । वसुग्रहणेषु लिडादेशस्यापि ग्रहणं यथा स्यात् ॥ किं च कारणं न स्यात् ? ॥ 'अननुबन्धकग्रहणे हि सानुबन्धकस्य ग्रहणं ने'त्येवं लिडादेशस्य न प्राप्नोति, सानुबन्धको हि स क्रियते ॥ किं पुनः कारणं स सानुबन्धकः क्रियते ? ॥ अयमृकारान्तानां**

प्र.] **विदेः शतुर्वसुः। वसोः कित्त्वमिति।** लिडादेशस्य कित्त्वमस्तीति तदनुरोधेनाऽस्य कित्त्वमुच्यते । अनुबन्धान्तरेणापि तस्य सानुबन्धकत्वं संपद्यते । **अननुबन्धकग्रहण इति।** स्थानिवद्भावादुगित्कार्यस्य सिद्धत्वादुकार उच्चारणार्थो नानुबन्ध इति मन्यते । सत्यपि वाऽस्य सानुबन्धकत्वे तदनुबन्धकग्रहणपरिभाषया क्वसोरग्रहणप्रसङ्गः। परिभाषोपादानं त्वग्रहणोपलक्षणम् । **किं पुनः कारणमिति।** 'असंयोगाल्लिट्कि'दिति कित्त्वस्य सिद्धत्वाद्वसुरेव लिटो विधीयताम् । **अयमिति** । यथा 'तेरतु'रित्यादौ गुणो भवति तथा वसावपि स्यादिति तद्बाधनार्थं कित्त्वं क्रियते । एतच्च प्रयोजनोपलक्षणमिति संयोगान्तार्थमपि कित्त्वमित्याहुः। तेनाऽऽजिवानित्यञ्जेः, 'रेधिवा'निति रधेर्नुमि सिद्धं भवति । ननु संयोगान्तार्थत्वे कित्त्वस्य कथं प्रतिषेधविषय आरभ्यमाणो गुणो बाध्यः ?। उच्यते । ऋकारान्तेभ्यः परस्य क्वसोरौपदेशिकातिदेशिककित्त्वद्वयसामर्थ्यात् 'क्ङिति चे'ति गुणनिषेधो द्विरुपतिष्ठते । तत्र पुनरुपस्थानं प्रतिषेधविषये गुणनिषेधं विधास्यति । के चिदाहुः—छान्दसः क्वसुः, तत-

उ.] वृद्धिस्ततः स्थानिवत्त्वाद्ङित्वमिति क्रमप्रतिपत्त्यर्थं यदनवकाशत्वमाश्रितं तन्न-नित्यत्ववदेकादेशसामान्यापेक्षं किन्तु दीर्घापेक्षमेवेति वृद्धिर्भवत्येवेत्यर्थः। तदाह—**वृद्धिलक्षणश्चेति। [ आत औ णलः ]।**

**विदेःश** । ननु वसोः कित्त्वं न गुणाऽभावाय, शतृस्थानिकत्वेन ङित्त्वादेव सिद्धेः, किन्तु सामान्यग्रहणार्थं, तस्य चानुबन्धान्तरेणाऽपि संभवात्किं ककारानुबन्धेनेत्यत आह—**लिडादेशस्येति।** ननु वसुरुकारेण सानुबन्धक इति किमुच्यते-'अननुबन्धकग्रहणे' इति, तत्राह—**स्थानिवदिति।** ननु विधेयाविषये उच्चारणार्थस्याऽपीत्संज्ञावश्यक्येव, किञ्चाऽल्विधित्वादुगित्त्वन्दुर्लभमित्यत आह—**सत्यपि वेति । तदनुबन्धकेति** । यावदनुबन्धैरनुबन्धवत्ता तदन्यतमरहितग्रहणे तद्विशिष्टग्रहणं नेति भाष्यार्थ इति भावः । **उपलक्षण**मित्यस्य-तथा भाष्यं व्याख्येयमित्यर्थः । ननु क्वसोः कित्त्वं गुणप्रतिषेधार्थं स्यादिति प्रश्नाऽसङ्गतिरत आह—**असंयोगादिति।** 'आजिवा'नित्यादौ नलोपः कित्त्वस्य फलं, 'रेधिवा'नित्यादौ एत्वाभ्यासलोपौ च । **नन्विति** । अन्यार्थत्वात्कित्त्वस्य सामर्थ्याऽभावः । **द्विरुपतिष्ठत**

१ अयं पाठः क्वचिन्न । २ अयंपाठः सर्वत्र लुप्तोऽप्यौचित्यादत्र स्थापितोऽस्माभिः ।

लिटि गुणः प्रतिषेधविषय आरभ्यते स पुनः कित्करणाद्बाध्यते। आतीस्तीर्वान् निपुपूर्वानिति ॥ स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्यः ? ॥ न कर्तव्यः। क्रियते न्यास एव–द्विसकारको निर्देशः। "विदेः शतुर्वसुस्समासेऽनञ्पूर्वे क्त्वो ल्यप्" ॥ [ विदेः शतुर्वसुः ] ॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप ॥७।१।३७॥

॥ * ॥ ल्यबादेश उपदेशिवद्वचनम् [–अनादिष्टार्थम् ] ॥ * ॥ ल्यबादेशे उपदेशिवद्भावो वक्तव्यः। उपदेशावस्थायां ल्यब्भवतीति वक्तव्यम् ॥ किं प्रयोजनम् ॥ 'अनादिष्टार्थम्'। अकृतेष्वादेशेषु ल्यब्यथा स्यात् ॥

के पुनरादेशा उपदेशिवद्वचनं प्रयोजयन्ति ? ॥ हित्वदत्त्वात्त्वेत्त्वेत्त्वदीर्घत्वशूडिटः। हित्वं–हित्वा। प्रधाय। हित्वम् ॥ दत्त्वं–दत्त्वा। प्रदाय।

---

प्र.] छन्दस्युभयथेति सार्वधातुकत्वान्ङित्त्वान्नलोपस्य सिद्धत्वात्संयोगान्तार्थं कित्त्वं नोपयुज्यते। **द्विसकारक इति**। 'वसुस्'इत्यादेशो निर्दिष्टः। तत्र सकारस्य रुत्वविसर्जनीयौ कृतौ। ततः सकारेण सानुबन्धत्वं वसोः संपद्यत इति वसुप्रदेशेषूभयोर्विशेषाद्ग्रहणं सिध्यति। **[ विदेः शतुर्वसुः ]** ॥

**समासेऽनञ्पूर्वे। ल्यबादेश इति**। अनेकपदाश्रयसमासनिमित्तो ल्यबादेशो बहिरङ्गो हित्वादयस्त्वेकपदविषयप्रकृतिप्रत्ययापेक्षा अन्तरङ्गा इति ते पूर्वं प्राप्नुवन्तीति भावः। तत्रोपदेशे समास इति विरोधात्समासो विषयत्वेनाश्रीयते। समासविषयेऽकृत एव तस्मिन् क्त्व उपदेशावस्थायामेव ल्यब्भवति। तस्मिन् कृतेऽनल्विधाविति स्थानिवत्त्वनिषेधाद्धित्वाद्यभावः। पूर्वोक्तविरोधपरिहाराय भाष्यकारोऽतिदेशं व्याचष्टे—**उपदेशिवद्भावो वक्तव्य इति। उपदेशावस्थायामिति**। अत्राप्युपमानोपमेयसंबन्धो द्रष्टव्यः–कृतेऽपि समासे ल्यब्भवन्नुपदेशिवद्भवति, अकृतेषु हित्वादिषु भवतीत्यर्थः। अथ वा समास इति विषयसप्तम्याश्रयमेव भाष्यम्, उपदेशावस्थायां ल्यब्भवतीति। 'उपदेशिवद्भावो वक्तव्य' इत्येतत्तु वस्तुव्याख्यानम्। उपदेशावस्थायां ल्यब्भवन्नन्यैरुपदेशिभिस्तुल्यं भवतीत्यर्थः। **अनादिष्टार्थमिति**।

---

उ.]**इति**। निषेधसूत्राणां परिभाषात्वादिति भावः। **केचिदिति**। अत्र पक्षे कित्त्वसामर्थ्यात्प्रतिषेधविषयगुणनिषेधः सूपपादः। 'अत एके'त्यत्र क्ङितीत्यनुवृत्त्यैत्वाभ्यासलोपावपि सिद्धाविति भावः। **[ विदेः शतुर्वसुः ]**।

**समासे नञ्पू। विरोधादिति**। क्त्वोपदेशे समासाऽभावादिति भावः। **अनल्विधाविति**। तकारादौ हलादौ चादेशानां विधानादिति भावः। **अत्राप्युपमानेति**। उपदेशावस्थायामिवेत्यर्थ इति भावः। तर्हि '**पदेशिवद्भाव**'इति भाष्यमयुक्तं स्यादत आह—**उपदेशिवद्भावो वक्तव्य इत्येतत्त्विति**।

---

१ 'आतितीर्वान्' पा०। २ उपदेशिवद्वचनं' पा०। ३ 'सानुबन्धकत्वं' पा०। ४ 'विशेषेण ग्रहणं' पा०।

दत्त्वम् ॥ आत्त्वं–खात्वा । प्रखन्य । आत्त्वम् ॥ इत्वं–स्थित्वा । प्रस्थाय । इत्वम् ॥ ईत्त्वम्–पीत्वा । प्रपाय । ईत्त्वम् ॥ दीर्घत्वं–शान्त्वा । प्रशम्य । दीर्घत्वम् ॥ 'श्[1]'–पृष्ट्वा । आपृच्छ्य । 'श्[1]' ॥ ऊठ्–द्यूत्वा । प्रदीव्य । ऊठ् ॥ इट्–देवित्वा । प्रदीव्य [ इट्[2] ] ॥

किं पुनः कारणमादेशास्तावद्भवन्ति न पुनर्ल्यप्, ननु[3] परत्वाल्ल्यपा भवितव्यम् ॥ सन्ति चैवाऽत्र के चित्परे आदेशाः । अपि च—

॥*॥ बहिरङ्गलक्षणत्वात् ॥*॥ बहिरङ्गो ल्यप्, अन्तरङ्गा आदेशाः । "असिद्धं बहिरङ्गमन्तरङ्गे" ॥ स तर्ह्युपदेशिवद्भावो वक्तव्यः ? ॥ न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति, यदयमदो जग्धिर्ल्यप्ति कितीति'ति किती'त्येव सिद्धे ल्यब्ग्रहणं करोति ॥

प्र.]आदेश आदिष्टं, तस्याऽभावोऽनादिष्टमित्यव्ययीभावः । **प्रखन्येति** । 'ये विभाषे'ति विकल्पेनात्वमिष्यते, 'जनसनखनां सञ्झलो'रित्यनेन तु ल्यबादेशात्पूर्वं नित्यं प्राप्नोति । **प्रदीव्येति**। पूर्वमिटि कृते 'निर्दिश्यमानस्यादेशा भवन्ती'ति केवलस्य क्त्वो ल्यपि सति इटः श्रवणं प्राप्नोति । अथापि कथं चित्सेक्त्वस्य स्थाने ल्यप्स्यात्तथापि-स्थानिवद्भावान्न क्त्वा सेडिति कित्त्वप्रतिषेधाद्गुणः प्रसज्येत, दीर्घत्वस्याऽसिद्धत्वात् ।

**परत्वादिति** । इष्टत्वादित्यर्थः। इतरस्त्विष्टानिष्टत्वविभागो न ज्ञायत इति व्यवस्थाशब्द एवानेन परशब्दः प्रयुक्त इति मत्वाह—**सन्ति चेति** । **बहिरङ्गलक्षणत्वादिति**। समासापेक्षया बहिरङ्गं–लक्षणं–शास्त्रमस्येति समासः । अथ वा बहिरङ्गः समासो लक्षणं निमित्तमस्येत्यर्थः । **यदयमिति** । 'ति किती'त्येव जग्धिभावस्य ल्यबादेशात्प्रागेव सिद्धत्वाल्ल्यब्ग्रहणं यथोक्तमर्थं ज्ञापयति । स्थानिवत्सूत्रे

उ.] **अव्ययीभाव इति** । अर्थाभावे । तेनादेशाऽभावार्थमित्यर्थः । तत्पुरुषेणैवार्थलाभादव्ययीभावो न युक्तो नञेति–नञ्सूत्रे निरूपितम् । नन्वेवं सति प्रखायेत्यसाध्वेव स्यादत आह—**ये विभाषेति** । भाष्ये—**ईत्वं पीत्वा प्रपायेति**। एवञ्च 'न ल्यपी'ति सूत्रमसङ्गतं स्यादुपदेशवचनाऽभावे इति भावः। **अथापीति** । तदन्तविधिविषय एवैषा परिभाषा नतु 'यदागमा' इत्येतद्विषये इति यद्यभ्युपगम्येतेत्यर्थः । इदन्तु प्रौढ्यैव, 'पादःप'दिति सूत्रस्थभाष्यविरोधात् । किञ्च सेट्त्वमशास्त्रीयत्वात्स्थानिवत्त्वेन दुर्लभमित्यन्ये । **केचित्तु** विशिष्टस्य निर्दिश्यमानत्वाऽभावान्निर्दिश्यमानस्य च व्यवहितत्वाल्ल्यपोऽप्राप्तिरेवाऽत्र दोष इत्याहुः। **दीर्घत्वस्य**—'हलि चे'त्यस्य । **समासापेक्षमित्यादि** । लक्षणशब्दः शास्त्रपरो निमित्तपरो वेति भावः । **ज्ञापयतीति** । एवं 'न ल्यपी'त्यपि ज्ञापकं बोध्यम् । ननु ल्यब्ग्रहणं स्थानिवत्सूत्रेऽन्यार्थज्ञापकमुक्तमिति चरितार्थं कथमस्यार्थस्य ज्ञापकं स्यादत आह—**स्थानिवत्सूत्रे इति** ।

१ 'शत्व'मिति क्वचित्पाठः।
२ इदं लिखितेषु आदर्शेषु न दृश्यते, भाष्यकृच्छैलीविरुद्धञ्च। ३ 'न परत्वात्' पा० ।

॥ * ॥ स्नात्वाकालकादिषु च[१] प्रतिषेधः ॥*॥ **स्नात्वाकालकादिषु च प्रतिषेधो वक्तव्यः। स्नात्वाकालकः। पीत्वास्थिरकः। भुक्त्वासुहितक इति।** ॥*॥ तदन्तनिर्देशात्सिद्धम् ॥ * ॥ **तदन्तनिर्देशात्सिद्धमेतत् ॥ कथम्[२] ॥ क्त्वान्तस्य ल्यपा भवितव्यं नचैतत्क्त्वान्तम्** ॥*॥ समासनिपातनाद्वा ॥*॥ **अथ वाऽवश्यमत्र समासार्थं निपातनं कर्तव्यन्तेनैव यत्नेन ल्यबपि न भविष्यति।** ॥*॥ अनञो वा परस्य ॥*॥ **अथ वाऽनञः परस्य ल्यपा भवितव्यं, न चात्रा-**

---

**प्र.]** युष्मदस्मदोरनादेश इत्यनादेशग्रहणं तत्स्थानापत्त्या तद्धर्मलाभस्य स्वरूपविधिना निरस्तस्य ज्ञापकमुक्तम्। ल्यब्ग्रहणं त्वलाश्रयेषु कार्येषु तद्धर्मलाभाऽभावस्य। यमर्थमन्तरेण यस्यानुपपत्तिस्तस्य सर्वस्य ज्ञापकं तद्भवतीत्यनेकोप्यर्थो ल्यब्ग्रहणेन ज्ञाप्यत इति विरोधाऽभावः। **स्नात्वाकालकादिष्विति।** मयूरव्यंसकादिषु समासप्रकरणात्समासार्थ एवैषां पाठः। तत्र समासेऽनञ्पूर्वे यो व्यवस्थितः क्त्वाप्रत्ययस्तस्य ल्यब्विधीयमानोऽत्रापि प्राप्नोति। **तदन्तनिर्देशादिति।** क्त्वान्तः समास इह निर्दिश्यत इत्यर्थः। समासे इति निर्धारणे सप्तमी, सामान्यापेक्षं चैकवचनम्, अथ वा छान्दसं बहुवचनस्य स्थाने। निर्धारणञ्च समानजातीयस्य भवतीति क्त्वान्तः समासो गृह्यते। निर्धार्यमाणस्य क्त्वाग्रहणेन विशेषणात्तदन्तविधौ सत्ययमर्थो भवति–'समासेष्वनञ्पूर्वेषु क्त्वान्तस्य समासस्य ल्यब्भवति'। स च 'निर्दिश्यमानस्यादेशा भवन्ती'ति क्त्व एव भवति। **समासनिपातनाद्वेति।** समुदायानां साधुत्वमभ्यनुज्ञायते—प्राकरणिकाऽप्राकरणिककार्यभावाऽभावविधानद्वारेणेत्यर्थः। येषु चात्र स्नात्वाकालकादिषूत्तरपदानुपात्तक्रियापेक्षः क्त्वाप्रत्ययस्तेषां सापेक्षत्वेऽपि निपातनात्समासः। **अनञो वा परस्येति।** अनञ् चासौ पूर्वश्चेति समासो, निपातना-

---

**उ.]यमर्थमिति।** यं यमर्थमित्यर्थः। ननु मयूरव्यंसकादिपाठादेव ल्यबभावः सिद्धोऽत आह—**मयूरेति।** प्रकरणात्समासविध्यर्थ एव स पाठ इति भावः।

ननु क्त्वान्तनिर्देशेऽपि 'स्नात्वे'ति क्त्वान्तमस्त्येवेत्यत आह—**क्त्वान्तः समास इति।** ननु विविभक्तित्वात्कथं समासपदेन क्त्वः सामानाधिकरण्यमत आह–**निर्धारण इति। समास इति।** सप्तमी षष्ठ्यर्थे सौत्रीति वक्तुं युक्तम्। **समुदायानामिति।** समुदायनिपातनसामर्थ्यादप्राकरणिकमपि किञ्चिन्निपातनान्निषिध्यत इति भावः।

ननु क्रिययोः समानकर्तृकयोः पूर्वकालवृत्तिक्रियावाचकात् क्त्वाविधानेन 'स्नात्वाकालक' इत्यत्र क्त्वा दुर्लभः। 'पीत्वासुहितक' इत्येवोदाहर्तुं युक्तं। संपत्त्यादिक्रियापेक्षक्त्वाप्रत्यये तु सापेक्षत्वाद्वृत्तिर्दुर्लभेत्यत आह—**येषु चेति। सापेक्षत्वेऽपीति।** 'स्नात्वाकालकः संपन्न' इत्यर्थात्प्रतीयमानक्रियासापेक्षत्वेऽपीत्यर्थः।

नन्वनञ्पूर्वे इति सूत्राक्षरेषु स्थितेषु कथमनञः परस्येत्यर्थलाभोऽत आह—**अनञ्चासाविति।** वस्तुतः पूर्वग्रहणमकृत्वा'ऽनञ' इत्येव सूत्रे पाठ्यमिति भाष्याशयः।

---

१ चकारः क्वचिन्नास्ति। २ अयं पाठः क्वाचित्कः।

ऽनञं पश्यामः ॥ ननु च धातुरेवाऽनञ ॥ न धातोः परस्य भवितव्यम् ॥ किं कारणम् ? ॥*॥ नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥*॥ नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते[1] ॥ कुत एतत् ? ॥ [ 'तथा ह्यर्थगतिः'[3] ] । तथा ह्यर्थो गम्यते । तद्यथा–'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृशं पुरुषमानयति, नाऽसौ लोष्टमानीय कृती भवति । एवमिहाप्यनञिति नञ्प्रतिषेधाद[4]न्यस्मादनञो नञ्सदृशात्कार्यं विज्ञास्यते ॥ किं चान्यदनञ्नञ्सदृशम् ?॥'पद' मित्याह । अथ वा''प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती''त्येवं धातुरपि 'क्त्वा'ग्रहणेन ग्राहिष्यते ॥ ननु चेयमपि परिभाषास्ति–''कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवती''ति साऽपीहोपतिष्ठते ॥ तत्र

प्र.] त्पूर्वशब्दस्य परनिपातः, विशेष्यत्वेन विवक्षितत्वाद्वा। 'अन'ञिति वा लुप्तसप्तमीकं पृथक्पदम् । सत्सप्तमी चेयम् । 'अनञि पूर्वे सति क्त्वो ल्यब्भवति, अर्थादनञः परस्ये'त्यर्थोऽवतिष्ठते । तदन्तविधिश्चाऽत्र नाश्रीयते, क्त्वाप्रत्ययस्य प्राधान्येन प्रक्रमाद्विशेषणत्वाऽभावात्—'येन विधिस्तदन्तस्ये'ति । प्रत्ययग्रहणपरिभाषाश्रयस्तु तदन्तविधिः परस्ताद्वक्ष्यते । 'येन नाव्यवधान'मिति च धातुना व्यवधानमाश्रीयते । **ननु चेति** । असत्त्वभूतार्थवाचित्वादिना धर्मेण धातुरपि नञ्सदृशो भवति । **न धातोःपरस्येति** । पदत्वनिबन्धनं सादृश्यमाश्रीयते न तु धर्मान्तरनिबन्धनम् ।

नाऽस्त्यत्र प्रमाणमित्याशङ्क्याह—**अथ वेति** । क्त्वाग्रहणेन धातुप्रत्ययसमुदायस्य परिग्रहात्तदवयवत्वाद्धातोः स्वावयवेन पौर्वापर्याऽसंभवाद्धातुरनञ्ग्रहणेन न गृह्यते ।

उ.] नन्वञः परस्य क्त्वान्तस्येत्यर्थ, उत क्त्व इत्येव?, नाद्यः, 'ननु च धातुरेवे'ति भाष्याऽसङ्गतेः। नान्त्यः, 'प्रकृत्ये'त्यादौ धातुना व्यवधानाल्ल्यबनापत्तेः, 'नञिवयुक्त'-न्यायेन पदात्परस्येत्यर्थादत आह—**तदन्तविधिश्चेति** । 'येन विधिस्तदन्तस्ये'ति तदन्तविधिश्चात्र नाश्रीयत इति पूर्वेणान्वेति । विशेष्याऽसन्निधानादिति भावः ।

**प्रत्ययग्रहणपरिभाषेति**। अस्याशयं वक्ष्यामः । नन्वेवं 'प्रकृत्ये'त्यादौ न स्यादत आह—**येन नेति** । **पदत्वनिबन्धनमिति** । लक्ष्यमूलाद्व्याख्यानादिति भावः । भाष्ये **अथवा प्रत्ययग्रहणे इति**।न च विशेष्याऽभावात्तदन्तविधेः कथं प्राप्तिः, नाऽनेनाऽपूर्वतदन्तविधिबोधनं किन्तु 'येन विधि'रित्यस्यैवेति वाच्यं, शब्दशास्त्रत्वेनोपस्थितशब्दरूपं विशेष्यमादाय तदन्तविधेरदोषात् । तत्र तात्पर्यग्राहकन्तु 'यस्मा'दित्यादि वार्तिकमेव। वस्तुतोऽयं वाचनिक इत्येव युक्तम्। अन्यथा 'वनो र चे'त्यादौ 'समासप्रत्ययविधा'वित्येनाऽस्याऽपि निषेधः स्यात् । मम तु सौत्रस्यैव स निषेध इति भावः । एवञ्च 'समासेऽनञः परस्याऽङ्गनिमित्तक्त्वान्तावयवस्य निर्दिश्यमानस्य क्त्वो-ल्य'बिति सूत्रार्थ इति स्नात्वाकालकादौ न दोष इति भावः । भाष्ये—**गतिकारक-**

१ 'वा' पा० । २ 'विज्ञास्यते' पा० ।
३ अयं पाठो लुप्तः सम्प्रति सर्वत्र । ४ 'प्रतिषेधात्' पा० ।

को दोषः ? ॥ इह न स्यात्—प्रकृत्य । प्रहृत्य । इह तर्हि स्यात्—परममकृत्वा । उत्तमकृत्वा । न वा अत्रेष्यते ॥ अनिष्टं च प्राप्नोति, इष्टं च न सिध्यति ॥"गतिकारकपूर्वस्यैवेष्यते"॥ कुतो नु खल्वेतद्द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः 'प्रत्ययग्रहणे यस्मात्स (विहित)स्तदादेर्ग्रहणं भवति' 'कृद्ग्रहणे गतिकारकपूर्वस्ये'ति च; इयमिह परिभाषा भवति–'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति, इयं न भवति—'कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति ?॥ आचार्यप्रवृत्तिर्ज्ञापयति—इयमिह परिभाषा भवति

प्र.]प्रकृत्येति। गतेः क्त्वान्ते समुदायेऽनुप्रवेशात्पौर्वापर्याऽभावात्तद्व्यतिरिक्तनञ्सदृशशब्दान्तराऽभावाल्ल्यपोऽप्राप्तिः । **परमकृत्वेति** । परमशब्दो न गतिर्न च कारकमिति क्त्वान्तेऽनन्तर्भूतः पूर्व इति ततः परस्य क्त्वान्तस्य ल्यप्प्रसङ्गः । 'गतिकारकपूर्वस्यापी'त्यपिशब्दात्केवलस्याऽपि 'कृत्वे'त्यादेः क्त्वान्तस्य ग्रहणात् ।

आचार्य आह—**न वै अत्रेष्यत इति**। तस्मात्कृद्ग्रहणपरिभाषाऽत्र नाश्रीयते । चोदक आह–**अनिष्टं चेति**। आचार्य आह–**गतिकारकपूर्वस्यैवेष्यत इति**। 'प्रकृत्य' 'पार्श्वतःकृत्ये'त्यादौ ल्यबादेश इष्यते । कृद्ग्रहणपरिभाषोपस्थाने च न सिध्यतीति नासावाश्रीयते । चोदक आह—**कुतो न्विति** । प्रत्ययग्रहणपरिभाषाया अवकाशः उपगोरपत्यमौपगव इत्यत्र, तद्धितान्तस्य प्रातिपदिकत्वात्सुब्लुग्भवति । कृद्ग्रहणपरिभाषाया अवकाशः–व्यावलेखी व्यावचर्चीति । 'णचः स्त्रियाम'ञिति गतिपूर्वस्य णजन्तत्वादञि सति वृद्धिस्वरौ भवतः । अत्र हि प्रत्ययग्रहणपरि-

उ.]**पूर्वस्यापीति**। गत्यादिसन्निधाने विशिष्टस्यैव क्त्वान्तग्रहणेन ग्रहणं, तदसन्निधाने धातुप्रत्ययसमुदायस्यापीत्यर्थस्तदाह—**गतेः क्त्वान्ते इति** । **ल्यपोऽप्राप्तिरिति** । सूत्रन्तु 'परमकृत्वे'त्यादौ चरितार्थं स्यादिति भावः। भाष्ये—**परमकृत्वेति** । 'सन्महत्परमे'ति विशेषणसमासः । **केवलस्यापीति** । यत्र तु गतिकारकपूर्वत्वं तत्र विशिष्टस्यैव क्त्वान्तत्वं न केवलस्य, अन्यत्र तु केवलस्यापि तत्त्वमिति भावः। 'गतिरनन्तर' इत्यत्र गतेः पूर्वपदभूताथाः क्त्वान्ते उत्तरपदे कार्यविधानात्तत्समवधानेऽपि केवलस्य क्त्वान्तत्वेन ग्रहणं, न चेह तथा मानमस्तीति तात्पर्यम् ।

आचार्य आह–**नवै अत्रेति**। अनञ इति नञ्भिन्नमव्ययमेव गृह्यत इति तदाशयः।

**तस्मादिति** । यतः 'परमकृत्वे'त्यत्र नेष्यते 'प्रकृत्ये'त्यत्र चेष्यते तस्मादित्यर्थः । **चोदक इति** । 'आशयानभिज्ञ' इति शेषः । परिभाषाऽनाश्रयणे मानाऽभावात्। अनिष्टे 'परमकृत्वे'त्यत्रैव प्राप्नोति, इष्टे च 'प्रकृत्ये'त्यत्र न प्राप्नोतीति भावः । **आचार्य आहेति** । भाष्ये-एवकारस्य 'परमकृत्वे'त्यादि व्यावर्त्यमिति भावः। 'पार्श्वत' इत्यत्राद्यादित्वात्सप्तम्यन्तात्तसिः । 'स्वाङ्गे तस्प्रत्यये' इति क्त्वा ।

१ इदं क्वाचित्कम् । २ 'क्व तर्हि' पा० । ३ 'उत्तमहत्वा' पा० ।
४ 'नासौ परिभाषाश्रीयते' पा० । ५ 'इत्याद्यादित्वात्' पा० ।

**'प्रत्ययग्रहण'इति, इयं न भवति—'कृद्ग्रहण'इति, यदयमनञिति प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम् ?॥ अयं हि नञ्न गतिर्न च कारकम्, तत्र कः प्रसङ्गो यन्नञ्पूर्वस्य स्यात् ?। पश्यति त्वाचार्य इयमिह परिभाषा भवति—'प्रत्ययग्रहण' इति, इयं न भवति 'कृद्ग्रहण' इति—ततोऽन'ञिति प्रतिषेधं शास्ति ॥**

॥*॥ किं नञः प्रतिषेधेन न गतिर्न च कारकम् ।
यावता नञि पूर्वे तु ल्यब्भावो न भविष्यति ॥ १ ॥

---

प्र.] भाषायाः 'स्त्रीप्रत्यये चानुपसर्जने ने'ति प्रतिषेधात्तदुपस्थानाऽभावः । एवं साव-काशयोः परिभाषयोर्भिन्नफलयोर्विरोधात्पर्यायोऽप्रतिपत्तिर्वा प्राप्नोति । प्रत्ययग्रहण-परिभाषायामाश्रीयमाणायां 'प्रकृत्ये'ति गतेः क्त्वान्तेऽनन्तर्भावात्पौर्वापर्योपपत्तौ ल्यप्सिद्ध्यति न तु कृद्ग्रहणपरिभाषाश्रयणे इति फलभेदः । 'कार्यकालं संज्ञा-परिभाष'मित्यत्र दर्शने समानदेशत्वात्परिभाषयोः परत्वेनाऽपि व्यवस्था नास्ति । साङ्कूटिने त्वेवमव्यवस्थाप्रसङ्गाद्यथोद्देशपक्ष आश्रयितव्यः । तत्र हि परत्वेन व्यवस्थासिद्धिः । प्रत्ययग्रहणपरिभाषा 'अङ्ग'संज्ञासूत्रे योगविभागेन व्यवस्थापिता । कृद्ग्रहणपरिभाषा तु 'गतिरनन्तर' इत्यत्र अनन्तरग्रहणेन ज्ञापनात्परा भवति ।

**यदयमिति** । कथं पुनरेतज्ज्ञापकं यावता सत्यामपि कृद्ग्रहणपरिभाषाया-मपिशब्दात्केवलस्यापि क्त्वान्तस्य ग्रहणादकृत्वेत्यादौ नञोऽगतित्वादकारकत्वाच्च क्त्वान्तेऽनन्तर्भावादसत्यनञ्ग्रहणे ल्यप्प्रसङ्गः । 'अप्रकृत्ये'त्यादौ च प्रतिषेधार्थ-

---

उ.] **अत्र हि प्रत्ययग्रहणेति** । यद्यपि तदादिनियमे निषिद्धे कृद्ग्रहणपरिभाषां विनाऽपि समुदायस्य तदन्तत्वात्सिद्ध्यति, तथापि तदधिकग्रहणाऽभावाय तद्विषय-सत्तामात्रेणावकाशोक्तिरिति बोध्यम् । पर्यायादिबीजं विप्रतिषेधसूत्रे उक्तम् ।

**कार्यकालमिति** । कार्यकालपक्षेऽपि शास्त्रपाठकृतपरत्वानपगमाच्चिन्त्यमिदम् । **साङ्कूटिने त्विति** । अभिविधौ भाव इनुणः स्त्रीप्रत्ययत्वाऽभावादणिनुण इत्यत्र प्रत्यय-ग्रहणपरिभाषोपस्थाने 'कूटि'न्नित्यस्य वृद्धिस्वरौ स्यातामिति परत्वात्कृद्ग्रहणपरि-भाषैवाऽत्राश्रयणीयेति भावः । नच कृद्ग्रहणपरिभाषायामपिशब्देन केवलस्याऽपि ग्रहणेन केवलादपि कदा चिदण्स्यादिति वाच्यं, गतिकारकसमभिव्याहारे तत्पूर्वस्य ग्रहणं, तदसमभिव्याहारे तु प्रत्ययग्रहणपरिभाषासिद्धस्याऽपीत्येवाऽपेरर्थात् । अत-एव 'पुंयोगा'दिति सूत्रे साङ्कूटिनस्य 'गतिकारकोपपदाना'मिति 'कृद्ग्रहणे' इति च परिभाषाभ्यां सिद्धिरुक्ता भाष्ये । 'प्रत्ययग्रहण'मितीयमेव भवति, परत्वान्न्याय्याऽपि कृद्ग्रहणपरिभाषा न भवतीति कुत इति । एवञ्चेष्टाऽसिद्ध्यनिष्टापत्ती तदवस्थे इति भाष्यार्थः । **केवलस्यापीति** । गत्याद्यसमवधाने इति भावः । तदाह—**अकृत्वेत्या-दाविति** । गत्यादिसमवधानेऽपि तत्फलमाह—**अप्रकृत्येत्यादाविति** । **केवल-**

---

१ 'नञ्पूर्वे' पा० ।

प्रतिषेधात्तु जानीमस्तत्पूर्वं नेह गृह्यते ।
प्रत्ययग्रहणे यावत्तावद्भवितुमर्हति ॥२॥ ॥*॥

**सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥७।१।३९॥**

[॥*॥ सुपां च सुपो भवन्ति ॥*॥] **सुपां च सुपोभवन्तीति वक्तव्यम् ॥**

प्र.]मनञ्पूर्वस्य ग्रहणं स्यात् ? । उच्यते—अपिग्रहणेन प्रत्ययग्रहणपरिभाषा समुच्चीयते न त्वन्यपूर्वम् । तत्र समास इति वचनात्केवलस्य क्त्वादेर्ग्रहणाऽभावादपिशब्दसमुच्चेतव्यस्याऽभावाद्गतिकारकपूर्वस्यैव समासस्य ग्रहणं भविष्यतीति किमनञ्पूर्व इत्यनेन ? । तत्क्रियमाणं कृद्ग्रहणपरिभाषाया अनुपस्थानं ज्ञापयति । तदुपस्थाने तु 'तूष्णींभूय' 'नानाभूय' 'द्विधाभूये'त्यादौ ल्यब्न स्यात् । तदेवं कृद्ग्रहणपरिभाषानुपस्थाने नञ्सदृशादव्ययात्पदात्प्रत्यासत्तिन्यायात्समासावयवात्परस्य धात्वादेः क्त्वान्तस्य समासे क्त्वो ल्यब्विधीयमानः 'स्नात्वाकालकः' 'परमकृत्वे'त्यादौ न भवति । परमं कृत्वा 'परमकृत्वे'ति 'सन्महद्'दिति समासः। परमत्वस्य क्रियाविशेषणत्वात्सामानाधिकरण्यात् । **तत्पूर्वमिति** । गतिकारकपूर्वमित्यर्थः । **प्रत्ययग्रहण इति** । प्रत्ययग्रहणपरिभाषया यावद्ग्राह्यं तावद्गृह्यते ॥ **[समासेऽनञ्पूर्वे] ॥**

**सुपां सुलुक्पूर्वसवर्ण** । सुशब्दे आदेश उच्यमानेऽन्ये सुपो न प्राप्नुवन्तीत्याह—**सुपां चेति** । एतच्च सर्वं 'व्यत्ययो बहुल'मिति व्यत्ययेन सिद्ध्यति ।

उ.] **स्येति** । अपिशब्दसमुच्चेतव्यत्वं तत्रैवेति भावः । अयं भावः–'क्त्वान्तस्य समासस्य ल्य'बित्यर्थोऽस्तु सूत्रस्य । तत्र पूर्वपदापेक्षायां कृद्ग्रहणपरिभाषया गतिकारकरूपमेव तद्ग्रहीष्यत इति 'परमकृत्वे'त्यत्र न । 'प्रकृत्ये'त्र 'अप्रकृत्ये'त्यत्र च सिद्धम्, 'अकृत्वे'त्यादौ च न भविष्यतीत्यनञ्पूर्वग्रहणं व्यर्थमिति । **अनुपस्थानं ज्ञापयतीति** । तदनुपस्थितौ क्त्वान्तस्य समासस्येत्यर्थोऽशक्यः। प्रत्ययग्रहणपरिभाषया तस्य क्त्वान्तत्वाऽभावात्। तथा च समासे विद्यमानस्य क्त्वान्तस्येत्यर्थो वाच्यः, एवञ्चोक्तदोषवारणायाऽनञ्पूर्व इत्यावश्यकमिति भावः । गतिकारकपूर्वक्त्वान्तसमासस्येत्यर्थे लक्ष्याऽसिद्ध दर्शयति—**तूष्णीमिति** । 'तूष्णीमि भुवः' 'नाधार्थप्रत्ययेऽच्व्यर्थे' इति क्त्वा । उपपदसमासः । एतानि च न गतिसंज्ञकानि नाऽपि कारकाणीति भावः । एतेनाऽनञ्पूर्वग्रहणेन गत्यादिसमवधानेऽप्यपिना केवलं समुच्चीयत इत्यपास्तम् । 'अप्रकृत्ये'त्राप्यनापत्तेश्च । गत्यादिपूर्वस्य क्त्वान्तस्य समासस्यानञ्पूर्वस्येत्यर्थापत्तेरिति सुधियो विभावयन्तु । सिद्धान्तार्थे 'परमकृत्वे' त्यादावप्राप्त्युपायमाह—**नञ्सदृशादव्ययादिति** । स्नात्वाकालकादिव्यावृत्त्यर्थमिदम् । 'अव्यया'दित्येव सिद्धे 'पदा'दिति स्वरूपकथनं । 'सुन्दरः स्नात्वाकालक' इत्यादिव्यावृत्तये-'समासावयवा'दिति। **गतिकारकपूर्वमिति**। तत्पूर्वमेवेत्यर्थः। भाष्ये-**प्रत्ययग्रहणे यावदिति**। समासे विद्यमानस्य क्त्वान्तस्येत्यर्थादिति भावः ॥**[समासेऽनञ]**।

**सुपां सुलुक्** । **सुशब्द इति** । लुक्साहचर्य्यादयं सुः सर्वादेशः, छान्द-

युक्ता माताऽसीद्धुरि दक्षिणायाः । 'दक्षिणाया'मिति प्राप्ते [॥*॥ तिङां च तिङो भवन्ति ॥*॥] तिङाञ्च तिङो भवन्तीति वक्तव्यम् ॥ चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते ॥

लुकि किमुदाहरणम् ? ॥ आर्द्रे चर्मन् । लोहिते चर्मन् ॥ नैतदस्ति । पूर्वसवर्णेनाऽप्येतत्सिद्धम् ॥ इदं तर्हि—यत्स्थेवीयस आवसन्नुत सप्तऋषयः सप्तसाकम् ॥ ननु चैतदपि पूर्वसवर्णेनैव सिद्धम् ॥ न सिध्यति । यद्यत्र पूर्वसवर्णः स्यात्त्यदाद्यत्वं प्रसज्येत ॥ इदं चापि उदाहरणम्—आर्द्रे चर्मन् । लोहिते चर्मन् ॥ ननु चोक्तं 'पूर्वसवर्णेनाप्येतत्सिद्धं'मिति ॥ न सिध्यति । यद्यत्र पूर्वसवर्णः स्यादान्तर्यतो दकारः प्रसज्येत ॥ अस्तु—संयोगान्तलोपेन सिद्धम् ॥

॥ * ॥ इयाडियाजीकाराणामुपसङ्ख्यानम् ॥ * ॥ इयाडियाजीकाराणामुपसङ्ख्यानं कर्तव्यम् । इया—दार्विया परिज्मन् । इया ॥ डियाच्—सुक्षेत्रिया । सुगात्रिया । डियाच् ॥ ईकार—दृतिं न शुष्कं सरसी शयानम् ।

प्र.]पूर्वसवर्णेनापीति। 'चर्मन्–इ' इति स्थिते इकारस्य पूर्वसवर्णो नकारः। तस्मात्पूर्वस्य नकारस्य 'स्वादि'ष्विति पदसंज्ञायां सत्यां लोपः । एवं च 'न ङिसंबुद्ध्यो'रित्यत्र ङिग्रहणमपि न कर्तव्यं भवति, प्रातिपदिकान्तत्वाऽभावाद्विभक्तिनकारस्य नलोपाऽप्रसङ्गात् । पूर्वस्य च नकारस्य लोपस्येष्टत्वात् । यदिति। यच्छब्दात्परस्य सुपो लुक् । प्रत्ययलक्षणनिषेधात्त्यदाद्यत्वाऽभावः । येष्विति प्राप्ते। त्यदाद्यत्वमिति । सुशब्दस्य पूर्वसवर्णो भवन्नलोन्त्यस्येत्युकारस्य दकारः प्राप्नोति । ततस्त्यदाद्यत्वे 'बहुवचने झल्ये'दित्येत्वे 'स्कोः संयोगाद्यो'रिति सकारलोपे च 'ये'दिति स्यात् । अथाप्येकवचनस्य स्थाने पूर्वसवर्णो दकारः क्रियते तथापि स्थानिवद्भावात्स्मिभावः प्राप्नोति । आन्तर्यत इति । निरनुनासिकस्येकारस्य सदृशो दकारः । संयोगान्त(स्य)लोपेनेति । 'न ङिसंबुद्ध्यो'रिति नलोप्रतिषेधात्संयोगान्तलोपः । अन्यथा नलोपे कर्तव्ये संयोगान्तलोपोऽसिद्धः स्यात् । एवं च नलोपप्रतिषेधे ङिग्रहणं कर्तव्यमेवेति प्रक्रियालाघवाय 'चर्म'न्नित्यत्र लुगेव विधेय इत्याहुः । दार्वियेति । दारुशब्दादियादेशः । सुक्षेत्रियेति । सुक्षेत्रेणेति प्राप्ते । सरसी

उ.]सत्वाद्वा। शे शकारोच्चारणन्तु 'शे' इत्यत्र विशेषणार्थम्। पूर्वसवर्णो नकार इति। घोषवत्त्वेन साम्यादित्यर्थः । उकारस्य दकार इति । निरनुनासिकत्वादित्यर्थः । येदिति स्यादिति । सर्वस्य पूर्वसवर्णेऽपि इयमेवापत्तिः । सदृशो दकार इति । घोषवत्त्वादल्पप्राणत्वाच्चेत्यर्थः । इत्याहुरिति । भाष्यकृता तु रूपसिद्धिमाश्रित्य निराकृतम् । दारुशब्दादिति। ततः परस्य सुप इत्यर्थः। डियाचो डित्त्वं टिलोपाय।

१ इदं वार्त्तिकं लुप्तं सम्प्रति। चः क्वाचित्कः । २ 'सुवीयसः आवसनुत' पा०। ३ इतिः क्वाचित्कः । ४ अयं पाठो लुप्तो बहुत्र ।

॥ * ॥ आङ्याजयारां चोपसङ्ख्यानम् ॥ * ॥ आङ्याजयारां चोपसङ्ख्यानं कर्तव्यम् । आङ्—प्रबाहवा । [ आङ् ] ॥ अयाच्—स्वप्नया सचसे जनम् । अयाच् ॥ अयार्—सनः सिन्धुमिव नावया॥ [सुपांसुलुक् ] ॥

**अमो मश् ॥ ७।१।४० ॥**

किमर्थः शकारः ?॥ [॥*॥ शकारः सर्वादेशार्थः ॥*॥] 'शित्सर्वस्ये'ति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ॥ अत उत्तरं पठति—॥*॥ अमो मश् न मकारस्य ॥*॥ 'मकारस्य मकारवचने प्रयोजनं नास्ती'ति कृत्वा तत्राऽन्तरेण शकारं सर्वादेशो भविष्यति ॥*॥ वचनादन्यबाधनम् ॥ * ॥ अस्त्यन्यन्मकारस्य मकारवचने प्रयोजनम् ॥ [ किम् ?॥ 'अन्यबाधनं' ।] येऽन्ये मकारादेशाः प्राप्नुवन्ति तद्बाधनार्थम् । तद्यथा—'मो राजि समः क्वा'विति मकारस्य मकारवचनसामर्थ्यादनुस्वारादयो बाध्यन्ते ॥ एवं तर्हि [ ॥*॥ द्विमकारको निर्देशः ॥*॥ ] द्विमकारको निर्देशः करिष्यते ॥*॥ द्विमकार ईडपृक्ते ॥*॥ यदि द्विमकारकः—अपृक्ताश्रय ईण्न प्राप्नोति,—वधीं वृत्रं मरुत इन्द्रियेण ।

---

प्र.]इति । सरःशब्दात्परस्य ङिशब्दस्येकारः । प्रबाहवेति । प्रबाहुशब्दात्परस्य टाप्रत्ययस्याऽऽङादेशः । 'घेर्ङिती'ति गुणः । ननु 'ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादा'वित्युक्तं ततश्च गुणो न प्राप्नोति । ङित्करणसामर्थ्याद्भविष्यतीत्यदोषः। अथ वा 'ङिती'ति बहुव्रीहिराश्रीयते । तत्र परिहारान्तरमाश्रयणीयम्—'वर्णश्चायन्तेन ङित्त्वे न दोषो निर्देशोयं पूर्वसूत्रेण वा स्या'दिति।

स्वप्नयेति । अयाचोऽकारोच्चारणं 'सुपि चे'ति दीर्घनिवृत्त्यर्थम् । नावयेति । 'उपोत्तमं रिती'ति मध्योदात्तं पदं भवति ॥ [ आज्जसेरसुक् ] ॥

अमो मश् । अमो मश न मकारस्येति । मकारस्य मकारः प्रयोजनाऽभावान्न भविष्यतीति शकारो न वक्तव्य इत्यर्थः । वचनादिति । 'वधीं वृत्र'मित्यादौ मकारस्यानुस्वारनिवृत्त्यर्थो मकारः स्यादित्यर्थः। द्विमकारक इति । 'अमोम्मे'ति करिष्यते, भिन्नजातीयवर्णद्वयोच्चारणे प्रयत्नस्य गौरवं भवति, समानजातीयवर्णद्वये तु लाघवात् । तत्रैकस्य मकारस्य संयोगान्तलोपः करिष्यते । ईण्न प्राप्नो-

---

उ.] चित्त्वं स्वरार्थम् । सरःशब्दादिति । एवन्निष्पन्नः सरसीत्यर्थकः सरसीशब्द आद्युदात्तः, संप्रति वेदेऽन्तोदात्तं पठ्यते तत्तु सरसीशब्दान्ङेर्लुकि बोध्यम् । इदन्तौ दूतौ चेति सूत्रे भाष्ये स्पष्टं, स्वरव्यत्ययो वा बोध्यः । [ सुपां सुलुक् ] ॥

अमो मश् । ननु मकारकरणेन शप्रत्याख्याने न फलमत आह—भिन्नजातीयेति । पृथक्स्थानकरणव्यापाराश्रयणादिति भावः । मकारोत्तराऽकारस्तु उभयो-

---

१ 'वावसेचनम्' 'सच सेवनम्' पा० । २ अयं पाठः क्वचिदपि नोपलभ्यते । ३ श्लोकवार्त्तिकमेतत् ।४ 'वचनप्रयोजनं' पा०। ५ 'म्मिति' इति पा०। ६ 'लाघवं' पा०।

॥*॥ यंकारादौ न दुष्यति ॥*॥ किं यकारो न श्रूयते? ॥ लुप्तनिर्दिष्टो यकारः ॥

॥*॥ अमो मश्च मकारस्य वचनादन्यबाधनम् ।
द्विमकार ईडपृक्ते यकारादौ न दुष्यति ॥१॥ ॥*॥

## आज्जसेरसुक् ॥ ७।१।५० ॥

इह—ये पूर्वासो य उ परासः । 'आज्जसेरसु'गित्यसुकि कृते जसि-ग्रहणेन ग्रहणाच्छीभावः प्राप्नोति ॥ एवं तर्हि जसि पूर्वान्तः करिष्यते ॥ यदि पूर्वान्तः क्रियते का रूपसिद्धिः—ब्राह्मणासः पितरः सोम्यासः? ॥ सवर्णदीर्घत्वेन सिद्धम् ॥ न सिद्ध्यति—'अतो गुण' इति पररूपत्वं प्राप्नोति ॥ अकारोच्चारणसामर्थ्यान्न भविष्यति ॥ यदि तर्हि प्राप्नुवन्विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति ॥ नैष दोषः—"यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते—यस्य तु विधेर्निमित्तमेव नासौ बाध्यते ।" पररूपं च प्रत्यकारोच्चारणमनर्थकं, सवर्णदीर्घत्वस्य पुनर्निमित्तमेव ।

अथ वाऽसुक्करिष्यते । एवमपि-ये पूर्वासो य उ परास इत्यसुटि कृते जसो ग्रहणेन ग्रहणाच्छीभावः प्राप्नोति ॥ नैष दोषः—'निर्दिश्यमानस्यादेशा भवन्ती'त्येवमस्य न भविष्यति ॥ यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?॥

---

प्र.] तीति । ईटि कर्तव्ये संयोगान्तलोपस्याऽसिद्धत्वादपृक्तत्वाऽभावात् । यकारादाविति । 'अमोम्मि'ति सूत्रं कर्तव्यं, तत्र यकारस्य लुप्तनिर्दिष्टत्वादनेकाल्त्वात्सर्वादेशोऽयं मो भविष्यतीति प्रत्याख्यातं शित्त्वम् । [ अमो मश् ] ॥

आज्जसेरसुक् । जसिग्रहणेनेति । 'तद्भक्तस्तद्ग्रहणेन गृह्यते' इति सागमकस्य शीभावप्रसङ्गः । पूर्वान्त इति । 'अस्य जस्यसु'गिति सूत्रन्यासेन पूर्वान्तेऽसुक्यकारान्तात्परो जस् न भवतीति शीभावाऽप्रसङ्गः । अथ वाऽसुडिति । असुकि-अकारोच्चारणं 'दध्यस्यती'त्याद्यर्थमिति पररूपं स्यादिति पक्षान्तरोपन्यासः ।

---

उ.] रुच्चारणार्थ आवश्यकः । अनुनासिकत्वेनेत्संज्ञया च तल्लोपः । संयोगान्तलोप इति । क्वचिदझलोऽपि लोपाङ्गीकारादिति भावः । 'वधी'मित्यत्र 'हनो वध लुङि' । मिपोऽम् । तस्य मश् । अकार उच्चारणार्थ इति—'अस्तिसिच' इतीट् । सिच इट् । 'ईट ईटी'ति सिज्लोपः । सवर्णदीर्घः । लुप्तनिर्दिष्टेति । 'लोपो व्यो'रिति लोपः । तस्य च नाऽसिद्धत्वमित्यपृक्तत्वमस्त्येव । इदं प्रत्याख्यानमेकदेशिन इति केचित् । [अमो मश् ]॥

आज्जसेरसुक् । सागमकस्येति । 'ग्रहणा'दिति शेषः । शीभावस्तु निर्दिश्यमान-परिभाषया प्रत्यया(ऽवयवस्या)ऽस एवेतिबोध्यम् । नन्वत्र न्यासे कथं पूर्वान्तः स्यादत आह—अस्यजसीति । नन्वसुटि पररूपं स्यादत आह—असुटीति । [आज्जसेरसुक् ]॥

---

१ एतद्व्याख्यानभाष्यम्—"एवं तर्हि यकारादिरयं मादेशो विज्ञास्यते ॥ यदि यकारादिरयमादेशो यकारः किं न श्रूयते ?"—इत्येवं रीत्याऽऽसीत्कालेन तु खण्डितं भवेदिति तु गौडा मन्यते । २ 'जसो' पा० । ३ अयं पाठः क्वाचित्कः ।

असुटा व्यवहितत्वात् ॥ सिध्यति सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु । ननु चोक्तं "ये पूर्वासो य उ परासः, असुकि कृते जसिग्रहणेन ग्रहणाच्छीभावः प्राप्नोती"ति ॥ नैष दोषः,—इदमिह संप्रधार्यं—शीभावः क्रियतामसुगिति; किमत्र कर्तव्यम् ॥ परत्वादसुक् ॥ अथेदानीमसुकि कृते पुनः प्रसङ्गविज्ञानाच्छीभावः कस्मान्न भवति ? ॥ 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ॥ [ आज्जसेरसुक् ] ॥

**अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ७।१।५१ ॥**

॥ * ॥ अश्ववृषयोर्मैथुनेच्छायाम् ॥ * ॥ अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् । अश्वस्यति वडवा । वृषस्यति[2] गौः॥ मैथुनेच्छायामिति किमर्थम्?॥ अश्वीयति वृषीयति ॥*॥क्षीरलवणयोर्लालसायाम् ॥*॥ क्षीरलवणयोर्लालसायामिति वक्तव्यम् । क्षीरस्यति माणवकः । लवणस्यत्युष्ट्र इति ॥ अपर आह—॥*॥ [सर्वप्रातिपदिकेभ्यो[3] लालसायाम् ॥*॥] सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यं । दध्यस्यति मध्वस्यतीत्येवमर्थम् ॥ अपर आह [॥*॥ सर्वप्रातिपदिकेभ्यो[3] लालसायां सुक् ॥ * ॥ सर्वप्रातिपदिकेभ्यो लालसायां ] सुग्वक्तव्यो दधिस्यति मधुस्यतीत्येवमर्थम् । [ अश्वक्षीरवृष ] ॥

**आमि सर्वनाम्नः सुट् ॥ ७।१।५२ ॥**

**त्रेस्त्रयः ॥५३॥ ह्रस्वनद्यापो नुट् ॥ ७।१।५४॥**

इमे बहव आम्शब्दाः[4]—'कास्प्रत्ययादाममन्त्रे लिटि' । 'ङसोसाम्' । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' । 'ङेराम्नद्याम्नीभ्य' इति, कस्येदं ग्रहणम्?॥

प्र.]असुटि 'प्रथमयोः पूर्वसवर्ण' इति दीर्घः सिध्यति । परत्वादिति । असुकोऽवकाशः—'ब्राह्मणास' इति । शीभावस्य भाषाविषयोऽवकाशः । [ आज्जसेरसुक् ] ।

अश्वक्षीर । अश्वस्यतीति । मैथुनेच्छाप्रतिपादनपरत्वात्प्रयोगस्याऽश्ववृषोपादानमतन्त्रमिति मनुष्यादावपि कवयः प्रयुञ्जते । लालसा—अतिशयेनाऽभ्यवजिहीर्षा । यस्तु लवणमैश्वर्यार्थमिच्छति तत्र 'लवणीयती'त्येव भवति । [ अश्वक्षीरवृष ] ।

आमि सर्वनाम्नः । कस्येदमिति । किमिदं सर्वेषामामां ग्रहणमथ कस्य

उ.] अश्वक्षीर । कवय इति । 'इति रामो वृषस्यन्ती'मित्यादौ । भाष्यस्वरसस्त्वेषामसाधुत्वे । अतएव 'वडवे'ति 'गौ'रिति च कर्तृपदमुपात्तं । वार्तिके पञ्चमीषष्ठ्यर्थे, 'दध्यस्यति मध्वस्यतीत्येवमर्थ'मिति भाष्यस्वरसात् । द्वावेवागमिनौ । यदि वार्तिकस्थसर्वशब्दस्वारस्यादन्यत्राऽपि इष्यते–तदा 'एवमर्थ'मित्येवंशब्दः स्वार्थं न परिपुष्येदिति सुब्धातुवृत्तौ माधवः । एवंशब्दः प्रकार इत्यन्ये । [ अश्वक्षीर ] ॥

आमि सर्व । ननु यस्येह ग्रहणं संभवति तस्यैवोत्तरत्राऽनुवृत्तिः स्यादत

१ इति क्वाचित्कः । २ 'वृषस्यति वडवा' पा० । ३ इदं वार्त्तिकं लुप्तमिति मन्ये । ४ इतोऽग्रे 'पठ्यन्ते' इत्यधिकः पाठो मुद्रिते ।

षष्ठीबहुवचनस्य ग्रहणम्[१] ॥

अथास्य कस्मान्न भवति—'कास्प्रत्ययादाममन्त्रे लिटी'ति ? ॥ 'अननुबन्धकग्रहणे हि न सानुबन्धकस्ये'ति ॥ स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्य-'इहास्य ग्रहणं मा भू'दिति ? ॥ ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः ॥ नार्थ इत्संज्ञापरित्राणार्थेन, इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ॥ इदमस्तीत्कार्यं–'मिदचोऽन्त्यात्पर' इत्यचामन्त्यात्परो यथा स्यात् ॥ प्रत्ययान्तादयं विधीयते, तत्र नास्ति विशेषो'मिदचोन्त्यात्पर'इति वा परत्वे, 'प्रत्ययः पर' इति वा [ परत्वे[२] ] ॥ यस्तर्हि न प्रत्ययान्तात्–'इजादेश्च गुरुमतोऽनृच्छ' इति ? ॥ अत्रापि आस्कासोराम्वचनं ज्ञापकं—'नायमचामन्त्यात्परो भवती'ति ॥ कथं कृत्वा ज्ञापकम् ? ॥ न ह्यस्ति विशेषः—आम्यचामन्त्यात्परे सत्यसति वा ॥ अयमस्ति विशेषोऽसत्यामि द्विर्वचनेन भवि-

प्र.]चिदेवेति प्रश्नः । ननु च 'सर्वनाम्न' इत्युपादानाद्धादामो लिव्यामश्च ग्रहणशङ्कैव न युक्ता । उच्यते । इह तयोरसंभवेऽपि 'ह्रस्वनद्यापो नु'डित्यत्र ह्रस्वात्परयोः संभवाद्विचारः[३] क्रियते । तत्रेह[४] सामान्यग्रहणे सति यथासंभवं प्रकरणे कार्यप्रतिपत्तिः । अथ वा पूर्वोपात्तसदृशशब्दान्तरानुमानपक्षे उत्तरसूत्रे तयोः संभवादिह विचारः । ननूत्तरसूत्रेऽपि यस्यैवाम्नदीभ्यां परस्य संभवः स एव ह्रस्वादपि परस्तत्साहचर्याद्ग्रहीष्यते । नैतदस्ति । व्याप्तिन्यायाश्रयेण सर्वस्य ग्रहणप्रसङ्गात् । प्रत्ययान्तादिति । ते चाऽजन्ताः । ननु हलन्तेभ्य आचारक्विबन्तेभ्य आमस्त्येव । नैतदस्ति । एकीयमतमेतत् । तत्रापि हलन्तेभ्योऽनभिधानादाचारक्विबभावः । यस्तर्हीति । ईहेरूहेश्च मध्ये आमि कृते यणादेशप्रसङ्गः । आस्कासोरिति ।

उ.]आह—तत्रेहेति । उत्तरसूत्रे इति । अतएव भाष्ये सूत्रत्रयग्रहणं । यस्यैवेति । ङेरामः, षष्ठीबहुवचनस्य चेत्यर्थः । एवञ्चेतरद्वयोपादानं व्यर्थमिति भावः । 'त्रे'-रिति सूत्रे तु षष्ठीबहुवचनातिरिक्तस्याऽसंभव एवेति तात्पर्यम् । भाष्ये—अनुबन्ध इति । अनुनासिकत्वेनेत्संज्ञक इत्यर्थः । उच्चारणार्थानामप्यपगमायेत्त्वस्याऽऽवश्यकत्वादिति भावः । ते चाजन्ता इति । नच जागर्त्तेरामि तस्य मित्त्वादन्त्यादचः परत्वे स्वावयवेन पौर्वापर्याऽभावाद्गुणो न स्यादिति वाच्यम्, अङ्गाधिकारेऽयामन्तेतिण्यन्तस्याम्ययृविधानेन तस्यान्तावयव इत्यस्याम्यसंबन्ध इत्याशयात् । एकीयमतमेतदिति । 'सर्वप्रातिपदिकेभ्यः क्वि'बित्येतत् । तत्रापीति । एकीयमताश्रयणेऽपीत्यर्थः । क्विबभाव इति । अत्र चेदमेव भाष्यं मानम् । नचावगल्भादिभ्यो हलन्तेभ्यः क्विबस्त्येव तत्रत्याकारस्यानुनासिकत्वेनेत्संज्ञकतया लोपादिति वाच्यम्, अकारान्तरप्रश्लेषेण तस्यैवानुबन्धत्वस्वीकारेणाऽदोषादिति भावः। नचाऽऽसादौ सवर्ण-

१ वार्त्तिकमिदमिति गौडाः । २ अयं पाठः क्वाचित्कः । ३ 'सम्भवादिह विचारः' पा० । ४ 'तत्र हि' पा० ।

तव्यं, सति न भवितव्यम् ॥ सत्यपि भवितव्यम् ॥ कथम् ? ॥ आमस्तन्मध्यपतितत्वाद्धातुग्रहणेन ग्रहणात् । तदेतत्कासासोराम्वचनं ज्ञापकमेव—'नायमचामन्त्यात्परो भवती'ति[1] ॥

अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः,–क्रियते न्यास एव–'आमे-अमन्त्रे' इति[2] । यद्येवमामाऽमन्त्र इति प्राप्नोति ॥"शकन्धुन्यायेन निर्देशः" ॥

अथ वाऽस्त्वस्य ग्रहणं को दोषः ? ॥ इह कारयांचकार हारयांचकार चिकीर्षांचकार जिहीर्षांचकार, 'ह्रस्वनद्यापो नु'डिति नुड्प्रसज्येत ॥

लोपाऽयादेशयोः कृतयोर्न भविष्यति ॥ इदमिह संप्रधार्यं–'लोपायादेशौ क्रियेतां[3] नु'डिति; किमत्र कर्तव्यम् ?॥ परत्वान्नुट् ॥ नित्यौ लोपाऽयादेशौ, कृतेऽपि नुटि प्राप्नुतोऽकृतेपि । तत्र नित्यत्वाल्लोपाऽयादेशयोः कृतयोर्विहतनिमित्तत्वान्नुग्न भविष्यति ॥

अथास्य कस्मान्न भवति—'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्ष'इति[4] ? ॥ 'अननुबन्धकग्रहणे हि न सानुबन्धकस्ये'ति ॥ स तर्ह्येवमर्थोऽनुबन्धः कर्तव्यः ? ॥ ननु चावश्यमुगित्कार्यार्थोऽनुबन्धः कर्तव्यः ॥ नार्थ उगित्का-

प्र.]अन्त्यादचः परे आमि सवर्णदीर्घत्वे सति विशेषाऽभावः। **सति न भवितव्यमिति**। रूपान्तराद्धातुत्वाऽभावात् । **आम इति** । अकृत एकादेशे इदमुच्यते, कृते त्वेकादेशे रूपान्तराऽभावः। **अथापीति**। प्रतिधातु भेदादामो यत्रेत्कार्यं न संभवति तत्र मा भूदित्संज्ञा—आसिकासिचकासिषु प्रत्ययान्तेषु च धातुषु ईह्यादौ त्वित्कार्यसंभवात्स्यादेवेत्संज्ञा । अथ वा आसादिषु विधानसामर्थ्यात्सवर्णदीर्घत्वं न स्यादित्संज्ञा तु स्यादेव । व्यञ्जनान्तेषु चाचारक्विबन्तेषु इत्कार्यसंभवादित्संज्ञा प्राप्नोति । न हि व्यञ्जनान्तेभ्य आचारे क्विन्न भवतीत्यत्र किं चित्प्रमाणमस्ति । **कारया-**

उ.]दीर्घे रूपान्तराऽभावाद्धित्वसिद्धेः किं तन्मध्यपतितन्यायाश्रयेणेत्यत आह–**अकृत इति**। वार्णादाङ्गमिति न्यायेन पूर्वं द्वित्वं। द्वित्वं हि प्रत्ययनिमित्तत्वादाङ्गमिति भावः।

भाष्ये—**नायमचामन्त्यात्परो भवतीति** । एवञ्च फलाऽभावान्मस्येत्संज्ञाऽप्रवृत्त्या तत्परित्राणार्थानुबन्धस्यानावश्यकत्वेन अस्यामोऽत्र ग्रहणं स्यादेवेति पूर्वपक्षिण इदं वाक्यम् । स एवाह—**अथापि कथञ्चिदित्कार्यं स्यादिति**। अस्य 'एवमपि सूत्रभेद' इति शेषः । सिद्धान्त्याह—**एवमपि न दोषः क्रियते न्यास एवेति**। किमेत्तिङुपक्रमेण प्रवृत्ते–'अथाऽपि कथञ्चिदित्कार्यं स्या'दिति भाष्ये 'एवमपि गौरव'मिति शेषः। अपूर्वकरणे हि स दोष इत्युत्तराशयः। 'प्रत्ययान्तेषु च धातुषु' इत्यन्तं पूर्वान्वयि।**अथवेति**। उपसञ्जातविरोधन्यायादिति भावः। विधिबाधापेक्षया परार्थेत्संज्ञाबाध एवोचित इत्याशयेन 'कथञ्चि'दिति भाष्ये उक्तम् । **नहि व्यञ्जनान्तेभ्य इति** ।

१ 'नायमन्त्या' 'नायमचामन्त्या' पा० । २ 'आममन्त्रे' पा० ।
३ 'क्रियतां' पा० । ४ 'मिति' पा० ।

यर्थेनाऽनुबन्धेन। लिङ्गविभक्तिप्रकरणे सर्वमुगित्कार्यं, न चामो लिङ्गविभक्ती स्तः। अव्ययमेषः॥ मकारस्य तर्हीत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः॥ इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति॥ इदमस्तीत्कार्यं—'मिदचोन्त्यात्पर' इत्यचामन्त्यात्परो यथा स्यात्॥ नैतदस्ति। घान्तादयं विधीयते तत्र नास्ति विशेषः—'मिदचोन्त्यात्पर' इति वा परत्वे 'प्रत्ययः पर' इति वा परत्वे॥

अथापि कथं चिदित्कार्यं स्यादेवमपि न दोषः—क्रियते न्यास एव॥ अथ वाऽस्त्वस्य ग्रहणं को दोषः?॥ इह-पचतितरां जल्पतितरां,—'ह्रस्वनद्यापो नु'डिति, नुट्प्रसज्येत॥ लोपे कृते न भविष्यति॥ इदमिह संप्रधार्यं 'लोपः क्रियतां नु'डिति, किमत्र कर्तव्यम्?॥ परत्वान्नुट्॥ एवं तर्हि 'ह्रस्वनद्यापो नु'डित्यत्र यस्येति लोपोऽनुवर्तिष्यते॥

अथास्य कस्मान्न भवति 'ङेराम्नद्याम्नीभ्य'इति?॥ किं च स्यात्?॥

---

प्र.] अकारेति। नुटि कृतेऽयादेशप्रसङ्गः। अव्ययमेष इति। अव्ययत्वात्स्त्रीत्वेन योगाऽभावादुगितश्चेति ङीन्नास्ति। तदभावादुगितश्चेति घादिषु ह्रस्वविकल्पोऽपि नास्ति। विभक्तेर्लुकि प्रत्ययलक्षणप्रतिषेधान्नुमागम उगित्कार्यं नास्ति। इत्संज्ञापरित्राणार्थ इति। इत्संज्ञायाः परित्राणमिति 'साधनं कृते'ति पञ्चमीसमासः। समुदायविशेषणं च मकार इति साऽपेक्षत्वात्समासाऽभावो न चोदनीयः। परित्राणं च[1] प्रधानं मकारमपेक्षते। भवति च प्रधानस्य सापेक्षस्याऽपि समासः।

अथापीति। मित्त्वमेव ज्ञापकं स्यादन्यतोऽप्ययं भवतीति। ततश्च स्यादेवेत्संज्ञा।

एवं तर्हीति। उभयोरनित्ययोः परत्वान्नुटि प्राप्ते 'ह्रस्वनद्यापो नु'डित्यत्र यस्य लोपस्तद्धित इति चानुवर्तते, तेन तद्धित आमि ह्रस्वस्य लोपो भवति-'पचतितरा'-

---

उ.] 'प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेष' इति भाष्यस्य, अत्रत्याऽपिशब्दस्य, 'कथञ्चि'त्पदस्य च प्रमाणस्य सत्त्वाच्चिन्त्यमिदम्। अयादेशप्रसङ्ग इति। 'अयामन्ते'त्यनेन। इदमेवाभिप्रेत्य—'अयादेशो नित्य' इति भाष्ये उक्तम्। नच मालाशब्दादाचारक्विपि लोपाऽभावेन तत्राबन्तत्वान्नुट्प्राप्तिर्दु[2]र्वारा, भाष्यप्रामाण्येन आबन्तेभ्य आचारक्विपोऽनभिधानान्न दोषः। विभक्तेर्लुकीति। 'अव्ययादाप्सुप' इत्यनेन। नन्वित्संज्ञाशब्दस्य मकारसापेक्षत्वात्कथं समासोऽत आह— समुदायेति। ततोऽर्थशब्देन चतुर्थीसमासः। न चाऽर्थशब्दार्थतादर्थ्यं प्रति परित्राणस्याऽपि विशेषणतेति वाच्यम्, तस्य विभक्त्यर्थसमानार्थत्वेनाऽदोषात्। लुप्तविभक्तेरेव सोऽर्थः, अर्थशब्दप्रयोगस्तु साधुत्वायैवेत्याशयात्। उभयोरिति। लोपे ह्रस्वाऽभावान्नुडप्राप्तिः। नुटि भत्वाऽभावाल्लोपाऽप्राप्तिरिति भावः। ननु नुड्विधौ 'यस्येतिचे'त्यनुवृत्तौ 'वृक्षाणा'मित्यत्राऽपि लोपः स्यादत आह—तद्धित इति चेति। वस्तुतो नद्याप्साहचर्याद्ध्रस्वादपि परस्य सुबाम एव ग्रहणमित्यत्र तत्त्वं, भाष्यन्तु

---

१ वेति क्वचिन्नास्ति। २ 'वा' पा०।

कुमार्यां किशोर्यां खट्वायां मालायां तस्यां यस्यामिति,—'ह्रस्वनद्याप नु'डिति नुड्प्रसज्येत ॥ आड्याट्स्याटोऽत्र बाधका भविष्यन्ति ॥ इदमिह संप्रधार्यम्–आड्याट्स्याटः क्रियन्तां, नुडिति,–किमत्र कर्तव्यम् ? ॥ परत्वादाड्याट्स्याटः ॥ अथेदानीमाड्याट्स्याट्सु कृतेषु पुनः प्रसङ्गान्नुट्कस्मान्न भवति ? ॥ 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ॥ [ह्रस्वनद्यापो] ॥

## श्रीग्रामण्योश्छन्दसि ॥ ७।१।५६ ॥

"अयं योगः शक्योऽवक्तुम्" ॥ कथं 'श्रीणामुदारो धरुणो रयीणाम्' । 'अपि तत्र सूतग्रामणीनाम्' ? ॥ इह तावच्छ्रीणामुदारो धरुणो रयीणां, विभाषाऽऽमि नदीसंज्ञा, सा छन्दसि व्यवस्थितविभाषा भविष्यति । 'अपि तत्र सूतग्रामणीना'मिति,सूताश्च ग्रामण्यश्च सूतग्रामणि । तत्र 'ह्रस्वनद्यापो नु'डित्येव सिद्धम् ॥ * ॥ इतिश्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य प्रथमपादे प्रथममाह्निकम् ॥ * ॥ ७।१।१। * ॥

## इदितो नुम् धातोः ॥ ७।१।५८ ॥

अथ धातोरिति किमर्थम् ? ॥ अभैत्सीत् । अच्छैत्सीत् [2] ॥*॥ नुम्विधा-

---

प्र.] मिति । अन्यस्य त्वामो नुड्भवति–'वृक्षाणा'मिति । [ ह्रस्वनद्यापो नुट् ] ॥

श्रीग्राम । विभाषेति । 'वामी'त्यनेन । तत्र दृष्टानुविधिश्छन्दसीति 'श्रीणा'-मित्येव छन्दसि भविष्यति न तु 'श्रिया'मिति ।'सूताश्च ग्रामण्यश्च सूतग्रामणी'ति । समाहारद्वन्द्वं कृत्वैकशेषः क्रियत इति बोद्धव्यं, न त्वेकशेषे कृते समाहारद्वन्द्वः क्रियते । एवं हि बहुवचनं न स्यात् ।

'भाष्ये त्वत्रोभयं कार्यमित्येतावत्प्रदर्शितम् ।
क्रमस्तु स्वयमभ्यूह्य [3] इष्टस्यार्थस्य सिद्धये' ॥ १ ॥

* इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे सप्तमस्य प्रथमे पादे प्रथममाह्निकम् ॥ * ॥ ७।१।१। * ॥

इदितो नुम् धातोः । धातोरिति किमर्थमिति । किमधातुनिवृत्त्यर्थं धातुग्रहणमथ धातुसंज्ञाप्रवृत्त्यवस्थायामेव प्राक्प्रत्ययोत्पत्तेर्नुम्विधानार्थमिति प्रश्नः । आचार्यदेशीयस्त्वधातुनिवृत्त्यर्थं धातुग्रहणं मत्वाह–अभैत्सीदिति । सिच इदितो

---

उ.] न्यायव्युत्पादनपरम् । भाष्योक्तप्रयोगातिरिक्तप्रयोगस्तु वेदे नास्त्येवेतिबोध्यम् ॥

॥ * ॥ इतिश्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते सप्तमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ * ॥७।१।१। * ॥

इदितो नुम् धातोः । इति प्रश्न इति । प्रयोजनद्वयसंभवेन सन्देहात्प्रश्न इत्यर्थः । अस्य प्रयोजनस्याऽग्रे दूषयिष्यमाणत्वादाह—आचार्यदेशीय इति । उपदेशो यस्य नकारस्य स उपदेशी, तद्वन्नुमिति वार्तिकार्थ इत्याह—यथेति ।

---

१ वार्त्तिकमेतदिति गौडाः २ 'अरौत्सीत्' पा० । ३ 'व्यूह्यः' इति मुद्रितपाठः ।

वुपदेशिवद्वचनं प्रत्ययविध्यर्थम् ॥*॥ **नुम्विधावुपदेशिवद्भावो वक्तव्यः। 'उपदेशावस्थायां नुम्भवती'ति वक्तव्यम् ॥ किं प्रयोजनम्? ॥ 'प्रत्ययविध्यर्थम्'। उपदेशावस्थायां नुमि कृते इष्टः प्रत्ययविधिर्यथा स्यात्—कुण्डा हुण्डेति** ॥*॥ इतरथा ह्यनकारे प्रत्ययः ॥*॥ **अक्रियमाणे हि उपदेशिवद्भावेऽनकारे यः प्रत्ययः प्राप्नोति स तावत्स्यात्तस्मिन्नवस्थिते नुम् ॥ तत्र को दोषः?** ॥*॥ तत्राऽयथेष्टप्रसङ्गः ॥*॥ **तत्राऽयथेष्टं प्रसज्येत। अनिष्टे प्रत्ययेऽवस्थिते नुम्। अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत** ॥*॥ धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम् ॥*॥ **धातुग्रहणसामर्थ्याद्वा तदुपदेशे—धातूपदेशे—नुम् भविष्यति ॥ ननु च अन्यद्धातुग्रहणस्य प्रयोजनमुक्तम्? ॥ किं (तत्)? ॥ अभैत्सीत्। अच्छैत्सीदिति ॥ नैतदस्ति प्रयोजनम्। प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात्। यच्चाऽत्रेकारेण क्रियतेऽकारेणापि तच्छक्यं कर्तुम्** ॥ [इदितो] ॥

प्र.] नुम्न भवति। **उपदेशिवद्भाव इति**। यथोन्द्यादीनामुपदेशे[3] नकारः प्रत्ययविधिकाले संनिहितस्तथा नुमपीत्यर्थः। **किं प्रयोजनमिति**। 'नन्दिता' 'नन्दक' इत्यादि प्रत्यये परतो नुमि क्रियमाणेऽपि सिध्यतीति मत्वा प्रश्नः। **प्रत्ययविध्यर्थमिति**। इष्टप्रत्ययविध्यर्थमित्यर्थः। **अनकार इति**। असति नकारे यः प्रत्ययः प्राप्नोति स स्यादित्यर्थः। सांप्रतिकेषु शिक्षादिषु गुरुमत्सु संभवत्सु भाविगुरुमत्ताश्रयेण प्रत्ययविधानस्याऽयुक्तत्वात्। **तत्र को दोष इति**। नुमि कृतेऽपवादः प्रवर्त्तमान उत्सर्गं निवर्तयिष्यतीति भावः। **तत्राऽयथेष्टप्रसङ्ग इति**। उत्पन्ने उत्सर्गे नुमि कृते सत्यामपि गुरुसंज्ञायामुत्सर्गेणैव प्रत्ययार्थस्य प्रत्ययोत्पत्तिनिमित्तस्याऽभिधानान्निमित्तवैकल्यादपवादाऽप्रवृत्तावुत्सर्गस्यैव श्रवणप्रसङ्गः। **धातुग्रहणेति**। अधातोरिदितोऽसंभवादधातुनिवृत्त्यर्थं ग्रहणं न भवतीति धातुसंज्ञाप्रवृत्त्यवस्थोपलक्षणार्थं विज्ञायते, तेन सत्यप्यङ्गाधिकारे भाव्यङ्गत्वाश्रयः पूर्वमेव नुम् भवति, ततः प्रत्यय इत्यर्थः संपद्यते। **प्रयोजनं नामेति**। **नियमेन**—अवश्यंभावेन यदन्यथा साधयितुमशक्यं तत्प्रयोजनम्। सिचश्च नुमागमो धातुग्रहणमन्तरेणाऽपि शक्यो निराकर्तुमित्यर्थः। **यच्चात्रेति**। सकारस्योच्चारणार्थ इकारः क्रियते इत्यकारेणापि

उ.] यत्किञ्चित्प्रत्ययस्य सर्वथा प्राप्तेराह—**इष्टेति**। **स स्यादिति**। क्तिन्स्यादित्यर्थः।

ननु भाविगुरुमत्तामाश्रित्य 'कुण्डे'त्यादौ 'गुरोश्च हल' इत्यप्रत्ययः सेत्स्यतीत्यत आह—**सांप्रतिकेष्विति**। **निवर्त्तयिष्यतीति**। लोपवज्जातनिवृत्तिः स्यादिति भावः।

**उत्पन्ने इति**। उत्सर्गापवादविषये जातनिवृत्तेरदर्शनेन प्रवृत्तस्य वचनशतेनाऽपि बाधस्याऽशक्यत्वात् परदेशस्याऽवरुद्धत्वाच्चाऽपवादाप्राप्तिरित्यपि बोध्यम्।

नन्वेवमङ्गाधिकारो विरुध्येतेत्यत आह—**तेन सत्यपीति**। नियोगशब्दार्थमाह—**नियमेनेति**। तस्यापि व्याख्यानं—**यदन्यथेति**। **अकारेणापीति**। प्रथमा-

१ 'अनकाराद्यः' पा०। २ इतिः क्वाचित्कः। ३ 'मुपदेशावस्थायां नकारः' पा०।

## शे मुचादीनाम् ॥ ७।१।५९ ॥

॥*॥ शे तृम्पादीनाम् ॥*॥ **शे तृम्पादीनामुपसङ्ख्यानं कर्तव्यम् । तृम्पति । तृम्फति ॥ किमर्थमिदं, न नुमनुषक्ता एवैते पठ्यन्ते ? ॥**

प्र.]'स'जित्येवं सकारः शक्य उच्चारयितुम् । तदेतदुक्तं भवति—निरनुनासिक उच्चारणार्थः सिच इकार इतीदित्त्वाऽभावान्नुमभावः । 'अमंस्ते'त्यादौ 'हनः सि'जिति नलोपार्थात्कित्त्वविधानाज्ज्ञापकादसत्यपीदित्त्वे नलोपाऽप्रसङ्गः । नन्वन्यत्कित्त्वविधानस्य प्रयोजनमस्ति 'सिजाश्रयो नलोपो यथा स्यात्सार्वधातुकाश्रयो मा भूत्' । सिजाश्रयो हि नलोपोऽतो लोपेऽसिद्धो न सार्वधातुकाश्रयः । समानाश्रयं ह्यसिद्धं नतु व्याश्रयम् । नैतदस्ति । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति सार्वधातुकाश्रयस्य नलोपस्य बहिरङ्गस्याऽन्तरङ्गेऽतो लोपे कर्तव्येऽसिद्धत्वादतो लोपाऽप्रसङ्गात्, उपदेशग्रहणाऽनुवृत्त्या आर्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानाद्वा । तासेरपीकार उच्चारणार्थ इति नुमोऽप्रसङ्गः । 'मन्ता' 'आहन्ते'त्यादौ 'असिद्धवदत्राभा'दिति टिलोपस्याऽसिद्धत्वादनिदित्त्वेपि नलोपाऽप्रसङ्गः । **[ इदितो नुम् ]** ॥

**शे मुचादीनाम् । शे तृम्पादीनामिति** । आदिशब्दः प्रकारे । तेन नोपधा गृह्यन्ते, तेषां नलोपे कृते नुमागमः । तस्य विधानसामर्थ्यादसिद्धवदत्राभादिति वा नलोपस्याऽसिद्धत्वादुपधात्वाऽभावाल्लोपाऽभावः । **किमर्थमिति** । य एवोपदेशे नकारः पठ्यते तस्यैव श्रवणं भविष्यतीति प्रश्नः । **(न) नुमनुषक्ता इति** । नुम्ग्रहणं नकारो-

उ.]तिक्रमे कारणाऽभावादित्यर्थः । **निरनुनासिक इत्यादि** । इदं चिन्त्यं—विधेयविषये उच्चारणार्थानामपीत्संज्ञाप्रवृत्तेः । तस्माद्भाष्योक्तमेव सम्यक् । नन्वमंस्तेत्यादौ 'अनिदिता'मिति नलोपव्यावृत्तये इदित्त्वमत आह—**अमंस्तेति । सिजाश्रय इति** । 'अहसाता'मित्यादावनुदात्तोपदेशेति विहितः । ननु सार्वधातुकाश्रय उपधालोपोऽप्याभीयत्वादसिद्धः स्यादेवेत्यत आह—**समानाश्रयं हीति । बहिरङ्गस्येति** । बहिर्भूततङपेक्षत्वात् । ननु तासेरिदित्त्वाऽभावे 'मन्ते'त्यादौ टिलोपे तशब्दस्थानिकत्वेन ङितामकारमाश्रित्य उपधानलोपः स्यादत आह—**मन्तेत्यादाविति** । लुटः प्रथमस्य डादेशः । वस्तुत उक्तरीत्या तासिरिदिदेव, सिचीव भाष्योक्तरीत्याऽत्र नुमभावः साध्यः । तदेवं धातुग्रहणं धातूपदेशावस्थायां नुमर्थमिति स्थितम् । **[इदितो नुम्]** ॥

**शे मुचादीनाम्** । ननु तृपादयस्तुदादौ पठ्यन्ते तत्र व्यवस्थावाच्यादिशब्दाश्रयणे निरनुषङ्गानामपि नुम्स्यादत आह—**प्रकारे इति** । प्रकारः-सादृश्यं । ननु तेषां नुमि परस्य मस्यानुस्वारपरसवर्णयोः पूर्वनस्य श्रवणप्रसङ्गोऽत आह—**तेषां नलोप इति** । 'अनिदिता'मित्यनेन । अस्य नुमोऽपि लोपः कुतो नेत्यत आह—**तस्येति । विधानेति** । अत एव मुचादिष्वपि लोपाऽभावः । **असिद्धत्वादिति** ।

१ 'तृम्फादीनां' 'त्रुम्पादीनाम्' पा० । २ 'त्रुम्फति' । 'तृम्फति दृम्फति' पा० ।

॥*॥ लुप्तनकारत्वात् ॥ * ॥ लुप्यतेऽत्र नकारः—'अनिदितां हल उपधायाः क्ङिती'ति ॥ यदि पुनरिमे इदितः पठ्येरन् ? ॥ नैवं शक्यम्, इह हि लोपो न स्यात्–तृपितो दृपित इति ॥ यदि पुनरिमे मुचादिष्वेवं पठ्येरन् ? ॥ न दोषः स्यात् । अथवा नैवं विज्ञायते—'इदितो नुम्धातो'रिति ॥ कथं तर्हि ? ॥ 'इदितो नुम्' । ततो 'धातो'रिति ॥ [ शे मुचादीनाम् ] ॥

**नेट्यलिटि रधेः ॥ ७।१।६२ ॥**

इमौ द्वौ प्रतिषेधावुच्येते–'उभौ शक्याववक्तुम्' ॥ कथम् ? ॥ एवं वक्ष्यामि 'इटि लिटि रधेर्नुम्' । [इटि लिटि रधेर्नुम्—] भवतीति । तन्नियम–

प्र.] पलक्षणार्थम् । यदीति । 'इदित्त्वे तु नुमः सिद्धिर्न च लोपः प्रसज्यते' । यदि पुनरिति । नोपधानां मुचादिषु पाठेन्नुमः सिद्धिरित्यर्थः । अथवेति । मुचादिषु तावन्न पठिताः, गौरवप्रसङ्गश्च, नोपधानां मुचादिषु पाठेऽर्थनिर्देशः कर्तव्यः । अनोपधानामन्यत्र पाठेऽर्थो निर्देष्टव्य इति मत्वा परिहारान्तरोपन्यासः । इदितो नुमिति । नन्वेवं धातूपदेशावस्थायां नुम्न लभ्यते । नैष दोषः । 'धिन्विकृण्व्योर-चे'ति ज्ञापकाद्धातूपदेशावस्थायां नुम्भविष्यति । अत्र ह्यागन्तुरिकार उच्चार-णार्थ इत्यङ्गत्वाऽभावेऽपि नुमनुषक्तपाठस्येदमेव प्रयोजनं–'धातूपदेशावस्थाया-मेव नुम् यथा स्यादिति । यदि 'धातो'रिति योगविभागः क्रियते तदा सर्वस्य सर्वत्र नुम्प्रसङ्गः । नैष दोषः । 'शे मुचादीना'मिति शग्रहणस्य 'धातो'रित्यत्र सिंहावलोकित-न्यायेनापेक्षणाद्योगविभागस्येष्टसिद्ध्यर्थत्वाद्वा । अन्ये तु भाष्ये योगविभागदिक्-प्रदर्शितेत्याहुः । तेन 'शे मुचादीना'मित्यत्र 'शे' इति योगविभागः क्रियते । तत्र च 'धातो'रिति वर्तते । ततो 'मुचादीना'मिति,–पूर्वयोगस्याऽसर्वविषयत्वज्ञापनार्थम् । तेनेष्टविषये नुमः सिद्धिः । [ शे मुचादीनाम् ] ॥

उ.]चिणो लुङ्न्यायेन । भाष्ये–तृपित इति । अनिट्कारिकासु श्यना निर्देशात्तौदादि-कयोः सेट्त्वादिट् । इदित्पाठे हि सर्वत्र नुम्स्याल्लोपश्च न स्यादिति भावः । न पठिता इति । अनेन न्यासभेदे दोष उक्तः । दोषान्तरमाह—गौरवेति । द्विरर्थनिर्देशा-दिति भावः । अर्थो निर्देष्टव्य इति । अधुना तु तृपँ तृंप तृप्तावित्यादिक्रमेण पठ्यते । ननु धिन्वीति इका निर्देशादिक्प्रत्ययेऽङ्गस्य धातोर्नुमुपपन्न इति कथं ज्ञापकमत आह—अत्र हीति । अत्र चेदमेव भाष्यं मानं । वस्तुतो विभक्तं धातो-रिति सूत्रं पूर्वत्राप्यपकृष्य तत्सामर्थ्यात्तदर्थलाभ इति बोध्यम् । ननु तर्हि शे सर्व-धातोः प्रसङ्गोऽत आह—योगविभागस्येति । अत एवेदितो नुमिति चरिता-र्थम् । दिक्प्रदर्शितेति । अत्राऽरुचिबीजन्तु–भाष्यस्वारस्यभङ्गः । इष्टविषये–सनकारविषये ॥ [ शे मुचादीनाम् ] ॥

१ 'तृफितः' 'दृफितः' । २ एवः क्वाचित्कः । ३ वार्तिकमेतदिति गौडाः । ४ 'पाठे नुमः' पा० । ५ 'भागो दिक्प्रदर्शनं' पा० । ६ 'तुपतुंप' पा० ।

**मार्थं भविष्यति—'लिड्येवेडादौ नान्यस्मिन्निडादा'विति ॥ [ नेट्यलिटि ]**

**आङो यि ॥ ७।१।६५ ॥**

**इह कस्मान्न भवति–आलभ्यते ॥ अस्तु, 'अनिदितां हल उपधायाः क्ङिती'ति लोपो भविष्यति ॥ इह तर्हि–आलम्भ्या गौः[1]। 'पोरदुपधा'दिति यत्यवस्थिते नुम् ॥ तत्र को दोषः ?॥ आलम्भ्येत्येष[2] स्वरः प्रसज्येत। आलम्भ्येति चेष्यते ॥ नैष दोषः । उक्तमेतत् ॥*॥धातुग्रहणसामर्थ्यादुपदेशे नुम्विधानम्॥*॥ इति ॥ [ आङो यि ]**

**न सुदुर्भ्यां केवलाभ्याम् ॥ ७।१।६८ ॥**

प्र.] **नेट्यलिटि रधेः । लिट्येवेति ।** 'इटयेव लिटी'त्येव तु नियमो न भवति, शास्त्रस्येष्टसिद्ध्यर्थत्वात् । क्वसौ 'रेधिवा'निति भवति । द्विर्वचने सति एत्त्वाभ्यासलोपयोः कृतयोरिटि नुमागमः, तस्यौपदेशिककित्त्वाश्रयो लोपः । ये तु क्वसुं छान्दसमेव मन्यन्ते तेषां विचार एवायं नास्ति, छन्दसि दृष्टानुविधानात् ॥[**नेट्यलिटि**]॥

**आङो यि । यत्यवस्थित इति ।** यकारादेः प्रत्ययस्य निमित्तत्वेनोपादानात् पूर्वमेव तेनोत्पत्तव्यमिति भावः । **एष स्वर इति ।** कृदुत्तरपदप्रकृतिस्वरेण 'यतोऽनाव' इत्याद्युदात्तत्वप्रसङ्गः । अन्तस्वरितत्वं चेष्यत इत्यर्थः । **धातुग्रहणसामर्थ्यादिति ।** 'यी'ति विषयसप्तमी, तेन धातूपदेशावस्थायामेव यकारादौ प्रत्यये विषयभूते नुमागमस्ततोऽदुपधत्वस्य विघातात् ण्यत्प्रत्यये सतीष्टस्वरसिद्धिः ॥ [**आङोयि**]।

**न सुदुर्भ्यां केवलाभ्याम्।** 'उपसर्गात् खल्घञो'रिति प्राप्तो नुम् प्रतिषिध्यते ।

उ.] **नेट्यलिटि । इट्येवेति ।** एवंनियमे 'ररन्धे'त्यत्र न स्यात्, 'रधिते'त्यत्रच स्यादिति–नञ्द्वयोपादानं सार्थकं स्यादिति भावः । ननु 'रेधिवा'नित्यत्र नुमि एत्वाभ्यासलोपौ न स्यातामत आह—**क्वसाविति ।** एत्वाभ्यासलोपोत्तरं 'वस्वेकाजा'दितीट् । कृतद्वित्वानामेकाचां तत्र ग्रहात् । **औपदेशिकेति ।** संयोगात्परत्वेनातिदेशिककित्त्वाऽभावादिति भावः । **येऽत्विति ।** 'पपुष आगतं पपिवद्रूप्य'मिति 'विभाषा पूर्वाह्ण'ेति सूत्रस्थभाष्यप्रयोगविरोधोऽत्राऽरुचिः । यत्तु भाष्येऽपि 'च्छान्दसः क्वसु'रित्युच्यते तस्य–'अयं क्वसुप्रयोगश्छान्दस' इत्यर्थ इति न विरोधः ॥

**आङो यि । यकारादेरिति ।** 'यी'त्यस्य परसप्तमीत्वात्पूर्वमदुपधत्वाद्यदेव स्यान्न तु ण्यदित्यर्थः । **कृदुत्तरेति ।** यद्यपि ण्यत्यपि नुमा विहतनिमित्ततया वृद्धेरभावाद्रूपे न विशेषस्तथापि स्वरे विशेष इत्यर्थः। **अन्तस्वरित(त्व)मिति ।** कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः । ण्यति ह्यनुबन्धकत्वाद्यतोऽनाव इत्यस्याऽप्रवृत्तेः । ननु उपदेशे नुमि 'यी'ति सप्तम्यनुपन्नेत्यत आह—**विषयेति । [ आङो यि ] ॥**

**न सुदुर्भ्यां ।** अनेकस्य नुमः प्रक्रान्तत्वात्कस्याऽयं प्रतिषेध इत्यत्राह—

१ 'आलभ्यो गौः' पा० । २ इतिः क्वचिन्न । 'इत्येवम्' 'एवम्' पा० । ३ 'इदितो नु'मित्यत्र । ४ 'भविष्यति' पा० ।

**अथ केवलग्रहणं किमर्थं न 'न सुदुर्भ्या'मित्येवोच्येत ?** ॥*॥ सुदुरोः केवल-ग्रहणमन्योपसर्गप्रतिषेधार्थम् ॥*॥ **सुदुरोः केवलग्रहणं क्रियते** ॥ [ किमर्थम् ?॥ 'अन्योपसर्गप्रतिषेधार्थम्' ]। **अन्योपसृष्टान्मा भूदिति,-प्रसुलम्भम्॥ नैषोऽस्ति प्रयोगः ॥ इदं तर्हि-सुप्रलम्भम्॥ प्रेण व्यवहितत्वान्न भविष्यति ॥ इदं तर्हि अतिसुलम्भम् ॥ कर्मप्रवचनीयसंज्ञाऽत्र बाधिका भविष्यति'—सुः पूजायाम-तिरतिक्रमणे चे'ति ॥ यदा तर्हि नातिक्रमणं न पूजा ।**

**इदं चाप्युदाहरणं-सुप्रलम्भम् । ननु चोक्तं 'प्रेण व्यवहितत्वान्न भवि-**

---

प्र.] **केवलग्रहणमिति** । इह केवलग्रहणेन समानजातीय उपसर्ग एव निवर्त-यितव्य इष्यते। स च सुदुर्भ्यां पूर्वो नास्ति, अनभिधानात्प्रत्ययाऽभावात् । सुदुर्भ्यां परे तु तस्मिन्पञ्चमीनिर्देशादेव व्यवधाने प्रतिषेधो न भविष्यतीति प्रश्नः ।

**नैषोऽस्ति प्रयोग इति** । प्रयुक्तानामिदमन्वाख्यानं न त्वनेनाऽपूर्वः शब्दोपजनः क्रियते । अपि च प्रारम्भादिविशिष्टायाः क्रियायाः सुकरत्वं दुष्करत्वं च प्रतिपाद्य-मिति पूर्वं प्रेण धातोः संबन्धः, पश्चात्तद्विशिष्टस्य सुदुर्भ्याम् । **अतिसुलम्भमिति** । सौकर्यादिविशिष्टधात्वर्थस्य अतिर्विशेषणमिति पूर्वं सुदुर्भ्यां सम्बन्धः, पश्चादतिना । इतरस्तु पूजाया अतिक्रमणस्य वा द्योतकोऽतिशब्द इति मत्वाह—**कर्मप्रवचनीय-संज्ञेति** । ततश्चोपसर्गत्वाऽभावादतेः केवलावेवाऽत्र सुदुराविति नुम्प्रतिषेधेन भाव्यम् । न हि विजातीयः केवलत्वं विहन्ति । यथा 'देवदत्तयज्ञदत्ताभ्यां केवलाभ्यां प्रवेष्टव्य'-मित्युक्ते पुरुषान्तरस्य प्रतिषिध्यते प्रवेशो न तु शुकादेः, एवं सुदुरौ परस्परसहितौ विजातीयसहितावेकाकिनौ च केवलावेव भवतः । सुदुर्लभमतिसुलभं सुलभं दुर्लभ-मिति । कृच्छ्राऽकृच्छ्रार्थौ च सुदुरौ क्रियाया विशेषकत्वादुपसर्गावेव खल्निमित्ततां प्रति-

---

उ.] **उपसर्गादिति** । अनन्तरत्वात्खल्घञोरित्यनुवर्तनाच्चेति भावः । **समानजातीय इति** । केवलशब्दस्य सजातीयान्तराऽभाववचनत्वात् । **उपसर्ग इति** । पूर्व-सूत्रादुपसर्गपदानुवृत्तेः । **अनभिधानादिति** । तादृशस्थलेऽनभिधानेन खलादि-प्रत्ययाऽभावादित्यर्थः । ननु शास्त्रेण प्रयोगः स्यादत आह—**प्रयुक्तानामिति** । अप्रयुक्ते शास्त्राऽप्रवृत्तेरिति भावः । **अपिचेति** । इदं चिन्त्यं, सुकरत्वेन निर्णीतस्य प्रारंभदर्शनात् । तस्मादनभिधानमित्येव युक्तं । तदेव ध्वनयन्नाह—**सौकर्यादि-विशिष्टस्येति । उपसर्गत्वाभावादिति** । अत्रोपसर्गादित्यस्यानुवृत्तेरिति भावः ।

नन्वतिशब्दसत्त्वे कथं केवलत्वमत आह—**न हीति । परस्परेति** । सजातीय-स्योभयाऽन्यस्याऽभावात् । अत्र वदन्ति—किमत्र सुदुरोः परस्परसाहित्येन निमि-त्तता, उत निरपेक्षतया ?। नाद्यः-'सुलभ'मित्यसिद्ध्यापत्तेः । नान्त्यः,-'सु'घटित-वाक्ये केवलपदेनान्योपसर्गव्यावृत्तेरिवैतद्व्यावृत्तेरपि वक्तुं युक्तत्वादिति चिन्त्यमे-तत् । नन्वतिसुलभमित्यत्र नुम्कथं, सोरपि कर्मप्रवचनीयत्वेनोपसर्गत्वाऽभावात् ।

---

१ अयं क्वचिन्न । २ 'भविष्यतीति' पा० । ३ 'ग्रहणात्' पा० ।

ष्यती'ति ?॥ नैष दोषः। 'सुदुर्भ्या'मिति नैषा पञ्चमी ॥ का तर्हि ?॥ तृतीया। सुदुर्भ्यामुपसृष्टस्येति । व्यवहितश्चाप्युपसृष्टो भवति ॥ [ न सुदुर्भ्यां ] ॥

**विभाषा चिण्णमुलोः ॥ ७।१।६९ ॥**

॥ * ॥ चिण्णमुलोरनुपसर्गस्य ॥ * ॥ **चिण्णमुलोरनुपसर्गस्येति वक्तव्यम्** । इह मा भूत्-प्रालम्भि । प्रलम्भं-प्रलम्भम् ॥ तत्तर्हि वक्तव्यम् ?॥ न वक्तव्यम् । इहोपसर्गादित्यपि प्रकृतं, नेत्यपि । तत्राऽभिसंबन्धमात्रं कर्तव्यं 'विभाषा चिण्णमुलोः-उपसर्गान्ने'ति ॥ [ विभाषा चिण्णमुलोः ] ॥

**उगिदचां सर्वनामस्थानेऽधातोः ॥ ७।१।७० ॥**

---

प्र.] पद्येते । **यदा तर्हीति** । पूजातिक्रमणयोरतेः कर्मप्रवचनीयसंज्ञाविधानादन्यत्रोपसर्गत्वात्तत्सहितयोः सुदुरोः केवलत्वाऽभावान्नुम्भवत्येव । **का तर्हीति** । पञ्चमीपक्षेऽपि केवलग्रहणमतिसुलभमित्येवमर्थं कर्तव्यमिति क्रमानुल्लङ्घनाय तृतीयैवाश्रयितव्येति भावः । वाक्यकारेण पठितं 'सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वे'ष्विति, अतस्तन्मतेनाऽतिसुलभमिति सोरुपसर्गत्वाऽभावान्नुम्न प्राप्नोति। भाष्यकारेण च अत्र नुमागमोऽभ्युपगतस्तस्माद्वाक्यकारस्यापि केवलसुदुःशब्दविषय एव नुम्विधावुपसर्गसंज्ञानिषेधोऽभिमतः, षत्वेऽपि पूजायामेव । तथा च 'सुषिक्तं नाम किं तवात्रे'ति षत्वं च क्षेपे भवत्येव । **[ न सुदुर्भ्यां केवलाभ्याम् ]** ॥

**विभाषा चिमुण्णलोः** । 'लभेश्चे'ति नित्ये नुमि प्राप्ते विभाषा आरभ्यते-'चिण्णमुलो'रिति । सोपसर्गस्य तु नित्यमेव नुम्भवति । **उपसर्गान्नेति** । वाक्यभेदेन विकल्प एव प्रतिषिध्यत इति नित्यमेव नुम्भवति ॥**[ विभाषा चिण्णमुलोः ]**॥

---

उ.] अकृच्छ्रार्थे हि खल् । अकृच्छ्रत्वं पूजैव । अतएव भाष्ये 'सुःपूजाया'मित्यस्यापि ग्रहणमत आह-**कृच्छ्राऽकृच्छ्रार्थौ चेति** । एवञ्चोपसर्गत्वाऽभावे खलेव न स्यात् । भाष्ये त्वनुवृत्तिप्रदर्शनार्थमेव तदुपादानम् , अकृच्छ्रत्वमात्रेण च न पूजेति भावः । एतेन सुदुरोरुपपदयोः खला घञो बाधात्सूत्रे घञ्ग्रहणं व्यर्थमित्यपि शङ्का समाहिता । कृच्छ्राऽकृच्छ्रातिरिक्तार्थयोस्तत्संभवात् । किञ्चाऽस्मात्खल्कर्मण्येवेति भावेऽपि घञः संभवो बोध्यः ।

ननु सर्वथा केवलग्रहणस्य कर्तव्यत्वे भाष्ये तृतीयाश्रयणे को हेतुरत आह— **क्रमेति** । पञ्चमी हि परशब्दयोगे उपपदविभक्तिः । तृतीया तु कारकविभक्तिरिति तृतीयैवोचितेति बोध्यम् । **तस्मादिति** । भाष्यकारेणाऽत्र नुमभ्युपगमादित्यर्थः ।

प्रसङ्गादाह-**षत्वेऽपीति** । इदञ्च प्रथमाध्यायशेषभाष्ये ध्वनितम् । 'षत्वञ्चे'ति चेन'सुलभं नाम किन्तवाऽत्रे'त्यादौ क्षेपे नुमित्येके । **[ न सुदुर्भ्याम् ]** ॥

**विभाषा चि** । प्राप्तविभाषेयमित्याह-**लभेश्चेति** । **नित्यमेवेति** । 'अनुपसर्गस्ये'-ति विकल्पस्यैव प्रतिषेधादिति भावः । **विकल्प एवेति** । अनन्तरत्वादिति भावः ।

---

१ इदं क्वाचित्कम् ।

**अधातोरिति किमर्थम्?॥ उखास्रत्। पर्णध्वत्॥** ॥*॥ अधातोरिति शक्यमवक्तुम् ॥*॥ **कस्मान्न भवति—उखास्रत् पर्णध्वदिति** ॥*॥ उगित्यञ्चतिग्रहणात्सिद्धमधातोः ॥*॥ **उगित्यञ्चतिग्रहणादधातोः सिद्धम्। अञ्चतिग्रहणं नियमार्थं भविष्यति—'अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातो'रिति॥ इदं तर्हि प्रयोजनम्—अधातुभूतपूर्वस्यापि यथा स्यात्—गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः—गोमानिति** ॥ [ उगिदचां ] ॥

## नपुंसकस्य झलचः ॥ ७।१।७२ ॥

॥*॥ झलचो नुम्विधावुगित्प्रतिषेधः ॥*॥ **झलचो नुम्विधावुगिल्लक्षणस्य प्रतिषेधो वक्तव्यः। गोमन्ति ब्राह्मणकुलानि, श्रेयांसि, भूयांसि। ननु च झलक्षण**

---

**प्र.] उगिदचाम्। अधातोरिति किमर्थमिति।** अञ्चतिग्रहणान्नियमार्थाद्धातोर्निवृत्तिः सिद्धेति भावः। **गोमानिति।** 'क्विबन्ता धातुत्वं न जहती'ति धातुरयमित्यञ्चतिग्रहणान्नियमार्थान्न स्यात्। अधातुग्रहणात्तु भवति। तस्य ह्येतत्प्रयोजनम्—'अवस्थान्तरेऽपि यस्याऽधातुत्वं दृष्टं तस्य संप्रति धातुत्वेऽपि नुम्यथा स्या'दिति। अथाऽत्र कथं दीर्घत्वं यावताऽत्वसन्तस्य चाधातोरित्यधातोस्तद्विधीयते?। उच्यते। 'अधातो'रिति तत्र योगविभागः क्रियते। तत्र चाऽसन्तस्येत्यनुवृत्त्याऽत्वन्तस्य पर्युदासाऽभावः। **[ उगिदचां सर्वनामस्थानेऽधातोः ]** ॥

**नपुंसकस्य। गोमन्तीति।** परत्वाज्झल्लक्षणे नुमि कृते पुनःप्रसङ्गविज्ञानादुगिल्लक्षणः प्राप्नोतीति तस्य प्रतिषेधो वक्तव्यः। **ननु चेति।** व्यक्तौ पदार्थे सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति भावः। इतर आकृतिपक्षमा-

---

**उ.] उगिदचां। नियमार्थादिति।** नचाऽचामिति लुप्तनकारनिर्देशेन नलोपिन एव यथा स्यान्न तु पूजार्थस्येत्येतदर्थमचामित्यस्य चारितार्थ्यात्कथं त्वदुक्तनियमार्थत्वं?। भाष्यप्रामाण्येनाऽचामित्यस्यावृत्त्या तस्याऽपि सुलभत्वात्। अत एवाऽस्य परनिपातः। अतएव च नलोपेन निर्देशोऽकारलोपाऽकरणञ्चेति बोध्यम्। ननु क्विबन्तस्य प्रातिपदिकत्वं न धातुत्वमत आह—**क्विबन्ता इति।** अत एवाऽत्वसन्तस्येत्यत्र धातुग्रहणं चरितार्थं। नचौपदेशिकस्योगितो धातोश्चेदञ्चतेरेवेति नियमेन सिद्धेऽधातुग्रहणं व्यर्थमेवेति वाच्यं, सामान्यापेक्षनियमार्थत्वात्, तत्फलं नामधातावुगितश्चेति क्लीबभाव इत्याहुः। **तत्र चाऽसन्तस्येति।** योगविभागसामर्थ्यादेकदेशानुवृत्तिः। तेन 'पिण्डग्रः' इत्यादौ दीर्घाऽभावः। **[ उगिदचाम् ]** ॥

**नपुंसकस्य। परत्वादिति।** झलन्तलक्षणावकाशः—सर्पींषि। उगिल्लक्षणस्य गोमानिति। पुंसि यौगपद्याऽसंभवरूपो विरोधोऽत्र, उभयोरन्त्यादचः परत्वाऽसंभवात्सावकाशत्वेनाऽपवादत्वाऽसंभवाद्वाऽऽह—**व्यक्ताविति।** इदमुपलक्षणं, विप्रतिषेध-

---

१ भाष्यमिदमित्यन्ये। २ इतिः क्वचिन्न। ३ 'नान्यस्मादुगितो' पा०। ४ 'पूर्वस्यापि' 'पूर्वमात्रादपि' पा०। ५ 'झलचोर्नुम्विधौ'।

**उगिल्लक्षणं बाधिष्यते ॥ कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ? ॥ असति खल्वपि संभवे बाधनं भवति,अस्ति च संभवो यदुभयं स्यात् ॥ किं च स्याद्यद्यत्रोगिल्लक्षणोऽपि स्यात् ? ॥ द्वयोर्नकारयोः श्रवणं प्रसज्येत ॥ न व्यञ्जनपरस्यैकस्य वाऽनेकस्य वा श्रवणं प्रति विशेषोऽस्ति ॥ ननु च प्रतिज्ञाभेदो भवति ॥ श्रुतिभेदेऽसति किं प्रतिज्ञाभेदः करिष्यति ॥ ननु च श्रुतिकृतोऽपि भेदोऽस्ति । इह तावत्-श्रेयांसि भूयांसीति । परस्यानुस्वारे कृते पूर्वस्य श्रवणं प्राप्नोति । तथा कुर्वन्ति कृषन्तीति, परस्या-**

प्र.] श्रित्याह-**कथमन्यस्येति**। उभयोर्नुमोः प्रसङ्गे परस्परप्रतिबन्धादप्रतिपत्तौ प्राप्तायां 'विप्रतिषेधे परं कार्य'मिति वचनेन परो नुम्विधीयमान उत्तरकालप्राप्तं निमित्तवन्तं पूर्वं नुमं नैव शक्नोति बाधितुम् । तथा चोच्यते-'पुनःप्रसङ्गविज्ञानात्सिद्ध'-मिति । **अन्यस्येति**। अनुमः। **अन्यस्येति**। सनुम इत्यर्थः । स्यादेतत्-अन्यस्याप्युच्यमानं कार्यमन्यस्य बाधकं भवति, यथोक्तम्—'अग्नेरीत्त्वाद्वरुणस्य वृद्धिर्विप्रतिषेधेने'त्यत आह—**असति खल्वपीति** । क्रमेण च नुमो विधानादन्त्यादचः परत्वं संभवति; यथा 'पचती'ति धात्वपेक्षं लट्शपोः। **प्रतिज्ञाभेद इति** । एकस्य प्रतिज्ञा 'एको नकार' इति, अपरस्य-'द्वौ नकारा'विति । **श्रुतिभेदेऽसतीति** । कथं पुनः श्रुतिभेदाऽभावो यावताऽनेकहलुच्चारणेनाऽधिकः कालो व्याप्यते एकहलुच्चारणे त्वल्पः । उच्यते—'अच्कालव्यतिरेकेण व्यञ्जनानि कालान्तरं नाक्षिपन्ती'ति दर्शनाश्रयेणैतदुक्तम् । यत्तु शास्त्रे व्यञ्जनानां कालः परिगण्यते तद्गुरुलाघवनिरूपणाय। अनेकोच्चारणे हि प्रयत्नस्य गौरवं भवति। लौकिके तु प्रयोगे गुरुलाघवानादराच्छ्रुत्यभेद उच्यते । अन्ये तु-व्यञ्जनानां कालभेदमिच्छन्त्येव । **परस्यानुस्वार इति** । अयोगवाहानामट्सूपदेशाज्झल्त्वाऽभावात्पूर्वस्य नकारस्याऽनुस्वारो नास्ति । ननु च वर्णग्रहणे जातिग्रहणाद्द्वयोर्नकारयोरेकोऽनुस्वार आदेशो

उ.] सूत्रभाष्योक्तस्य तन्न्यायमूलभूतस्य दृष्टान्तस्याऽपि। नन्वङ्गस्यैकत्वादन्यस्येत्ययुक्तमत आह—**अनुम इति**।**अग्नेरिति**।तत्र वृद्धौ नास्ति संभव ईत्त्वस्य, 'इद्वृद्धा'वित्यनेन बाधादिति भावः । नन्वेकस्मादन्त्यादचः परत्वं द्वयोर्नुमोर्नसंभवतीति, 'अस्ति च सम्भव' इत्ययुक्तमत आह-**क्रमेण चेति** । यद्यपि प्रयोगे न संभवति विधानकाले तु संभवतीति भावः । भाष्ये-**व्यञ्जनपरस्येति** । व्यञ्जनं परमस्येति बहुव्रीहिः । **अधिकः काल इति** । द्वयोर्व्यञ्जनयोर्मात्राकाल, एकस्य त्वर्धमात्राकाल इति भावः । **दर्शनाश्रयेणेति** । 'व्यञ्जनानामकालत्व'मिति यच्छिक्षाकृतां मतं तन्मतेनेदमुक्तमिति भावः। **यत्तु शास्त्रे इति** । 'ऐ औच्' 'हयवरट्' सूत्रादौ । **गुरुलाघवनिरूपणायेति** । प्रयत्नगौरवेण कल्पितकालभेदेनेत्यर्थः । **अन्ये त्विति** ।

१ 'स्यानेकस्यैकस्य वा' पा० । २ 'करिष्यते' पा० । ३ 'ननु चेति' क्वचिन्नास्ति । ४ इतिः क्वाचित्कः । ५ वर्षन्तीति पा० ।

ऽनुस्वारपरसवर्णयोः कृतयोः पूर्वस्य णत्वं प्राप्नोति ॥ अथैकस्मिन्नपि नुमि णत्वं कस्मान्न भवति ?॥ "अनुस्वारीभूतो णत्वमतिक्रामति" ॥ कृते तर्हि परसवर्णे कस्मान्न भवति ?॥ असिद्धे च परसवर्णः ॥

॥ * ॥ विप्रतिषेधात्सिद्धम् ॥ * ॥ विप्रतिषेधात्सिद्धमेतत् । झल्लक्षणः क्रियतामुगिल्लक्षण इति झल्लक्षणो भविष्यति विप्रतिषेधेन । झल्लक्षणस्यावकाशः–सर्पींषि धनूंषि । उगिल्लक्षणस्यावकाशः–गोमान् यवमान् । इहोभयं प्राप्नोति–गोमन्ति ब्राह्मणकुलानि, यवमन्ति ब्राह्मणकुलानि, श्रेयांसि भूयांसीति ? ॥ झल्लक्षणो भविष्यति विप्रतिषेधेन ॥

ननु च पुनःप्रसङ्गविज्ञानादुगिल्लक्षणः प्राप्नोति ॥*॥ पुनःप्रसङ्ग इति चेदमादिभिस्तुल्यम् ॥ * ॥ पुनः प्रसङ्गइति चेदमादिभिस्तुल्यमेतद्भवति । तद्यथा–युष्मदस्मदोरमादिषु कृतेषु पुनः प्रसङ्गाच्छिशीलुङ्नुमो न भवन्ति । एवं झल्लक्षणे कृते पुनः प्रसङ्गादुगिल्लक्षणो न भविष्यति । यदप्युच्यते"असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्या"दिति । सत्यपि संभवे बाधनं भवति । तद्यथा–'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याये'ति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपिसंभवे झल्लक्षण उगिल्लक्षणं बाधिष्यते । अथवाऽस्त्वत्र उगिल्लक्षणोपि ॥ ननु-चोक्तं"द्वयोर्नकारयोःश्रवणं प्रसज्येते"ति॥ परिहृतमेतत् "न व्यञ्जनपरस्यैकस्य वाऽनेकस्य वा श्रवणं प्रति विशेषोस्ती"ति ? ॥ ननु चोक्तं "प्रतिज्ञाभेदो

---

प्र.] विधास्यते। नैतदस्ति। स्थानिभेदादनुस्वारादेशद्वयप्रसङ्गात्। 'न' इति वा गुणत्वादेकत्वसङ्ख्याया विवक्षितत्वादेकस्यैव नकारस्याऽनुस्वारः स्यान्न तु द्वयोः । **णत्वमतिक्रामतीति** । न प्राप्नोतीत्यर्थः । अनुस्वारे कर्तव्ये 'पूर्वत्रासिद्ध'मिति णत्वस्यासिद्धत्वादनुस्वारो नकारस्य भवति न तु णत्वं, णत्वे च कर्तव्ये सिद्ध एवानुस्वार इति णत्वाऽभावः । **असिद्धे च परसवर्ण इति** । असिद्धप्रकरणे परसवर्णस्य विधानाण्णत्वे कर्तव्ये तस्याऽसिद्धत्वाण्णत्वाऽभावः । **विप्रतिषेधादिति** । व्यक्तिपदार्थाश्रयसहितात् । **तद्यथा दधीति** । यद्यपि दृष्टान्ते सामान्यविशेषभावो बाधहेतुर्दार्ष्टान्तिके तु विप्रतिषेधे परमेवेति नियमस्तथापि विनापि विरोधेन दृष्टं बाधक-

---

उ.] अत एव 'हलो यमा'मित्यादि चरितार्थं । ननु परस्याऽनुस्वारे कृते तमेव झलमाश्रित्य पूर्वस्याऽपि भवत्वित्यत आह—**अयोगेति** । शर्षु पाठमनाश्रित्येदं । **स्थानिभेदादिति** । नस्योच्चारणप्रसङ्गे इत्यर्थेन जातेस्तत्प्रसङ्गाऽभावाज्जातिग्रहणमशक्यमिति भावः । **न इति वेति** । इदं चिन्त्यम् , अनुवादे सङ्ख्याया अविवक्षणात् । अन्यथा नकारान्तरे न स्यात् । ननु विप्रतिषेधाश्रयपूर्वपक्षे तेनैव सिद्धान्तोऽयुक्तोऽत आह—**व्यक्तीति** । सकृद्गतिन्यायाश्रयणादित्यर्थः । **विनाऽपि विरोधेनेति** ।

---

१ 'परसवर्णे' पा० । २ इतिः क्वचिन्न । ३ 'प्रसङ्गादिति' पा० ।

भवती"ति ॥ श्रुतिभेदेऽसति प्रतिज्ञाभेदः किं करिष्यति[1] ? ॥ ननु च श्रुतिकृतोपि भेद उक्तः,–"इह तावच्छ्रेयांसि भूयांसीति, परस्यानुस्वारे कृते पूर्वस्य श्रवणं प्रसज्येत। कुर्वन्ति कृषन्तीति[2]–परस्यानुस्वारपरसवर्णयोः कृतयोः पूर्वस्य णत्वं प्राप्नोती"ति ॥ नैष दोषः। अयोगवाहानामविशेषेणोपदेशश्चोदितः। तत्रेह तावत्–श्रेयांसि भूयांसीति। परस्यानुस्वारे कृते तस्य झल्ग्रहणेन[3] ग्रहणात्पूर्वस्यानुस्वारो भविष्यति। कुर्वन्ति कृषन्तीति[2]। परस्यानुस्वारपरसवर्णयोः[4] कृतयोस्तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारपरसवर्णौ भविष्यतः ॥

नैव वा पुनरत्रोगिल्लक्षणः प्राप्नोति ॥ किं कारणम्? ॥ 'मिदचोन्त्यात्पर' इत्युच्यते न च द्वयोर्मितोरचामन्त्यात्परत्वे संभवोऽस्ति ॥ कथं तर्हीमौ द्वौ मितावचामन्त्यात्परौ स्तो–'बहून्र्झांहि ब्राह्मणकुलानी'ति ? ॥ विनिमित्तावेतौ ॥॥*॥ तत्र बहूर्जि प्रतिषेधः ॥*॥ तत्र बहूर्जि प्रतिषेधो वक्तव्यः। बहूर्जि ब्राह्मणकुलानीति ॥*॥ अन्त्यात्पूर्वं नुममेके ॥*॥ अन्त्यात्पूर्वं नुममेके इच्छन्ति ॥ किमविशेषेण आहो स्विद्बहूर्जावेव ? ॥ किं चातः ? ॥

प्र.] त्वमिति प्रदर्शनाय दृष्टान्तोपन्यासः। परस्येति। अयोगवाहानामविशेषेणोपदेशाश्रयणादनुस्वारस्य झल्त्वात्पूर्वस्याप्यनुस्वारो भवति। ततो द्वयोरनुस्वारयोः श्रुतिं प्रति विशेषाऽभावः। 'कुर्वन्ती'त्यत्रापि पूर्वस्य नकारस्य अनुस्वारपरसवर्णयोः कृतयोः परसवर्णस्याऽसिद्धत्वाण्णत्वस्याऽतिक्रमः। न च द्वयोरिति। ननु च यद्यपि प्रयोगे पूर्वेण नुमा परस्य नुमोऽन्त्याजपेक्षमानन्तर्यं विहन्यते तथापि क्रमेण विधाने द्वयोः संभवत्येव परत्वमित्युक्तम्। नैष दोषः। प्रयोगाश्रयेणैतदुक्तम्। प्राधान्यात्प्रयोगस्याऽन्त्यादचः परो मित्प्रयोक्तव्य इत्यानन्तर्यमेवात्र संश्रितम्। न च द्वयोर्नुमोरेकाजपेक्षमानन्तर्यं भवतीति। पचतीत्यत्र तु सार्वधातुके परतः शब्विधानाद्विकरणव्यवधानमाश्रितमेव। विनिमित्तौ [इति][5]। भिन्ननिमित्तावित्यर्थः। उकारात्पर आम्, आमः परो नुम्। तत्रेति। 'झलच' इति द्वन्द्वाश्रयणे दोषः। बहव ऊर्जो येषामिति

उ.] असंभवरूपेणेत्यर्थः। भाष्ये–परस्यानुस्वारपरसवर्णयोः कृतयोरिति। कृतयोरपीत्यर्थः। इदं पराभ्युपगमरीत्या। वस्तुतः परसवर्णस्याऽसिद्धत्वात्ततः पूर्वमेवानुस्वारः। विनाऽपि विरोधेनेति। प्रयोगेऽसंभवरूपविरोधेन विनाऽपीत्यर्थः। विधानकाले यौगपद्याऽसंभवरूपो विरोधस्त्वस्त्येवेति बोध्यम्। णत्वस्यातिक्रम इति। अप्राप्तिरित्यर्थः। आनन्तर्यमेवात्रेति। प्रयोगकालिकमेवाश्रितं, नतु विधानकालिकमित्यर्थः। उकारात्पर इति। आम्नुमोः प्राप्तयोः पूर्वं परत्वादुकारात्पर आम्, ततः पुनःप्रसङ्गविज्ञानादामः परो नुमित्यर्थः। 'अचः परस्य झल'-

१ 'करिष्यते' पा०। २ 'कर्षन्ति' पा०। ३ 'झल्लक्षणेन' पा०। ४ 'अनुस्वारे परसवर्णे च कृते' पा०। ५ इतिः क्वचिन्न। 'संभवति' पा०।

यद्यविशेषेण, 'काष्ठतक्ंषी'ति भवितव्यम् । अथ बहूर्जाविव, 'काष्ठतक्ष्ङी'ति भवितव्यम् ॥ एवं तर्हि बहूर्जाविव । बहूर्ञ्जि[1] ॥

स तर्हि प्रतिषेधो वक्तव्यः ? ॥ न वक्तव्यः । 'अच' इत्येषा पञ्चमी । अच उत्तरो यो झल् तदन्तस्य नपुंसकस्य नुमा भवितव्यम् । यश्चाऽत्र अच उत्तरो नाऽसौ झल्, नाऽपि तदन्तं नपुंसकम् । यदन्तं च[2] नपुंसकं नासावच उत्तरः ॥ इहापि तर्हि न प्राप्नोति–'काष्ठतक्ष्ङी'ति । अत्र योऽच उत्तरो झल् न[3] तदन्तं नपुंसकं, यदन्तं च नपुंसकं नासावच उत्तरः ॥ नैतदस्ति,–झल्जातिः प्रतिनिर्दिश्यते,–'अच उत्तरा या झल्जाति'रिति ॥ यदि पञ्चमी, 'कुण्डानि' 'वनानी' त्यत्र न प्राप्नोति ॥ एवंतर्हि 'इकोऽचि विभक्ता'वित्यत्रा'ऽचः सर्व[4]-नामस्थाने'इत्येतदनुवर्तिष्यते । एवमपि षष्ठ्यभावान्न प्राप्नोति ॥ 'सर्वनाम-स्थाने' इत्येषा सप्तमी 'अच' इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति–'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति ॥ [ नपुंसकस्य झलचः ] ॥

## इकोऽचि विभक्तौ ॥ ७। १। ७३ ॥

अज्ग्रहणं किमर्थम् ? ॥*॥ इकोचि व्यञ्जने माभूत् ॥*॥[5] 'इकोऽची'त्युच्यते व्यञ्जनादौ मा भूत्–त्रपुभ्यां त्रपुभिः ॥*॥ अस्तु, लोपः ॥*॥ अस्त्वत्र नुम् 'न लोपः प्रातिपदिकान्तस्ये'ति नलोपो भविष्यति ॥*॥ स्वरः कथम् ॥*॥ [ कथं स्वरः ? ]॥ पञ्चत्रपुभ्याम् पञ्चत्रपुभ्यः । 'इगन्ते द्विगा'वित्येष स्वरो न प्राप्नोति ॥*॥ स्वरो वै श्रूयमाणेऽपि ॥*॥ श्रूयमाणेऽपि नुमि स्वरो भवति–पञ्चत्रपुणा पञ्चत्रपुणे इति ॥*॥ लुप्ते किं न भविष्यति ॥*॥ लुप्ते इदानीं

प्र.] बहुव्रीहिः । यद्यविशेषेणेति । काष्ठंतक्ष्णुवन्तीति क्विपि कृते जसः शिभावे च ककारषकारयोर्मध्ये नुम्प्राप्नोति, तस्य झल्परत्वादनुस्वारप्रसङ्गः । अच इत्येषेति । 'झलच' इति न द्वन्द्वः, किं तर्हि 'झ'लिति लुप्तषष्ठीकं पदम् । 'अच' इति तु पञ्चम्यन्तम् । कुण्डानीति । इगन्तस्योत्तरसूत्रेण सिध्यतीत्यकारान्तस्यैव नुमोऽप्राप्तिरुच्यते । एवं तर्हीति । वाक्यभेदेनाऽजन्तस्य सर्वनामस्थाने नुम् विधीयते । सर्वनामस्थाने इत्येषेति । ननु पञ्चमीसप्तम्योर्द्वयोरपि सावकाशत्वात्परत्वात्पञ्चम्यैव प्रकल्पिकया भाव्यम् । एवं तर्हीष्टवाची परशब्दः, अतः सप्तम्यपि क्वचित्प्रकल्पिका भवतीत्यदोषः[6]॥

इकोऽचि । अज्ग्रहणमिति । हलादौ नुमो लोपविधानात्तन्निवृत्त्यर्थमज्ग्रहणं नोपयुज्यते इति प्रश्नः । स्वरो न प्राप्नोतीति । नुमेगन्तताया विघातात् । लुप्ते किन्नेति । स्वरे कर्तव्ये नलोपस्य शास्त्रेणैवाऽसिद्धत्वं प्रतिपाद्यते न तु प्रयोगे नका-

उ.] इत्यर्थे दोषाऽभावादाह–द्वन्द्वेति । ककारषकारयोरिति । ककारात्पूर्वस्त्विष्यते' इति भावः । एवन्तर्हीति । अनुवृत्तिसामर्थ्यादिक इति साहचर्याच्चेति भावः ॥

१ 'बहूर्जि' पा० । २ 'चः क्वाचित्कः । ३ 'न' क्वचिन्न। ४ 'असर्वनाम' पा० । ५ श्लोकवार्त्तिकमेतत्खण्डशोव्याख्यायते। ६ 'वाचित्वात्परशब्दस्य सप्तम्यपि' पाठः ।

**किं न भविष्यति ? ॥ किं पुनः कारणं श्रूयमाणेऽपि नुमि स्वरो भवति ? ॥ सङ्घातभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा ततः श्रूयमाणेऽपि नुमि स्वरो भवति ॥**

**इदं तर्हि–अतिराभ्याम् अतिराभिः । नुमि कृते 'रायो हली'त्यात्वं न प्राप्नोति ॥ इदमिह संप्रधार्यं–'नुम् क्रियतामात्व'मिति, किमत्र कर्तव्यम् ? ॥ परत्वादात्वम् ॥ इह तर्हि प्रियतिसृभ्याम् प्रियतिसृभिः । नुमि कृते तिसृभावो न प्राप्नोति ॥ इदमिह संप्रधार्यं–'नुम्क्रियतां तिसृभाव' इति, किमत्र कर्तव्यम् ? ॥ परत्वात्तिसृभावः ॥**

**अथेदानीं तिसृभावे कृते पुनःप्रसङ्गान्नुम् कस्मान्न भवति ? ॥ 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ॥**

**अत उत्तरं पठति–**॥*॥ इकोऽचिविभक्तावज्ग्रहणं नुम्नुटोर्विप्रतिषेधार्थम् ॥*॥ **इकोऽचिविभक्तावज्ग्रहणं क्रियते ॥[किं प्रयोजनं ?॥'नुम्नुटोर्विप्रतिषेधार्थम्'।]**

---

प्र.]रस्य सद्भावः । ततश्च नुमः सद्भावेपि यत्र स्वरो भवति तत्राऽसद्भावे कथं न स्यादित्यर्थः । **सङ्घातभक्त इति** । अङ्गस्य विधानाद्बहिरङ्गत्वाच्च नुमोऽन्तरङ्गः स्वरः पूर्वमेव प्रवर्त्तते । **अतिराभ्यामिति** । अतिरि-भ्यामिति स्थिते नुमि कृते तेन व्यवधानाद्रैशब्दस्यात्वं न प्राप्नोति । सुब्विधौ नलोपस्याऽसिद्धत्वाच्च । अथापि 'पदाङ्गाधिकारे तस्य च ग्रहणं भवति तदुत्तरपदस्य चे'ति रैशब्दान्तस्याङ्गस्यात्वं विधीयत इति नास्ति नुमाऽङ्गस्य व्यवधानं तथापि नकारस्यात्वं प्राप्नोति तस्मिन्पूर्वस्य यणि सति अतिर्याभ्यामिति प्राप्नोति । **परत्वादात्वमिति** । आत्वमनित्यं, नुमि कृते तेन व्यवधानादप्रसङ्गात् । अथ वा शब्दान्तरप्राप्त्या नुमि कृते नकारस्य प्रसङ्गात् , अकृते त्विकारस्य । नुमप्यनित्यः, कृते आत्वे प्राप्त्यभावात् । **परत्वात्तिसृभाव इति** । शब्दान्तरप्राप्त्या नुमनित्यः । तिसृभावस्तु नुमि कृते तेन व्यधानान्न प्राप्नोतीत्यनित्यः । स हि यद्यपि त्रिशब्दान्तस्याङ्गस्य विधीयते तद्भक्तत्वाच्च नुमव्यवधायकस्तथापि 'निर्दिश्यमानस्यादेशा भवन्ती'ति त्रेरेव तिसृभावेन भाव्यं, स च नुमा व्यवहित इति

---

उ.] इकोऽचि वि । लुप्ते किन्नेत्यनेन कैमुतिकन्यायः प्रदर्श्यत इत्याह–**स्वरे इति** । हेत्वन्तरमप्याह—**बहिरङ्गत्वाच्चेति** । विभक्तिनिमित्तकत्वादिति भावः । विभक्तिविषये नुमिति भाष्याशय इत्यन्ये । **तेन व्यवधानादिति** । समुदायभक्तस्यावयवत्वं प्रति व्यवधायकत्वादिति भावः । नलोपे कृतेऽपि दोष एवेत्याह—**नलोपस्येति** । **तथापि नकारस्येति** । वस्तुतो नुमि कृते रैशब्दान्ताङ्गाऽभावादात्वं न स्यादित्येव वक्तुं युक्तम् । भाष्ये–**परत्वादात्वमिति** । नचाऽऽकारस्य वृद्धितया 'वृद्ध्यौत्वे'ति पूर्वविप्रतिषेधान्नुमेव स्यात् ; तत्र वृद्धिशब्दविहितवृद्धेरेव ग्रहणात् । अत्र चेदमेव भाष्यं मानम् । रैशब्दान्तस्यात्वमिति पक्षेऽप्याह—**अथवा शब्दान्तरेति** । इदम-

---

१ 'एवं तर्हि' पा० । २ अयं पाठो लुप्तः सम्प्रतीति मन्ये ।

**नुमो नुड्विप्रतिषेधेन यथा स्यात्–त्रपूणां जतूनाम्** ॥*॥ इतरथा हि नुमो नित्यनिमित्तत्वान्नुडभावः ॥*॥ अक्रियमाणे ह्यज्ग्रहणे नित्यनिमित्तो नुम्, कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि। नित्यनिमित्तत्वान्नुमि कृते नुटोऽभावः स्यात् ॥

एतदपि नास्ति प्रयोजनम् । क्रियमाणेऽपि वै अज्ग्रहणेऽवश्यमत्र नुडर्थो यत्नः कर्तव्यः । पूर्वविप्रतिषेधो वक्तव्यः ॥ इदं तर्हि प्रयोजनं—'नुटि कृते नुम्मा भू'दिति ॥ किं च स्यात् ? ॥ त्रपूणां जतूनां,–'नामी'ति दीर्घत्वं न स्यात् ॥ मा भूदेवं 'नोपधाया' इत्येवं भविष्यति ॥ इह तर्हि–शुचीनाम् 'इन्हन्पूषार्यम्णां शौ' 'सौ चे'त्यस्मान्नियमान्न प्राप्नोति दीर्घत्वम् । 'अर्थवद्ग्रहणे नानर्थकस्ये'त्येवं न भविष्यति ॥ नैषा परिभाषेह शक्या विज्ञातुम्, इह हि दोषः स्यात्–'वाग्ग्मी'ति ॥ एवं तर्हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ ॥*॥ उत्तरार्थं च ॥*॥ उत्तरार्थं तर्ह्यज्ग्रहणं कर्तव्यम् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः'–अजादौ यथा स्यादिह मा भूत्–अस्थिभ्याम्, अस्थिभिरिति ॥ यद्युत्तरार्थं स्यात्तत्रैवायमज्ग्रहणं कुर्वीत,इह हि क्रियमाणे यदि किं चित्प्रयोजन-

---

**प्र.]** तिसृभावस्याऽप्राप्तिः। तदेवमुभयोरनित्ययोः परत्वात्तिसृभावः । **त्रपूणामिति** । सत्यज्ग्रहणे द्वयोरपि नुम्नुटोरनित्यत्वाद्विप्रतिषेधे सति 'नुमचिरतृज्वद्भावेभ्यो नु'डिति पूर्वविप्रतिषेधान्नुड्भवति । तस्मिंश्च 'नामी'ति दीर्घत्वम् । असति त्वज्ग्रहणे कृताऽकृतप्रसङ्गित्वान्नित्यत्वान्नुमेव स्यात् ॥

**नुडर्थो यत्न इति** । अज्ग्रहणं च कर्त्तव्यं, पूर्वविप्रतिषेधश्च वक्तव्य इति यत्र[3] द्वयमाश्रयणीयं, तत्राऽज्ग्रहणमकृत्वैव एक एव नुडर्थे यत्नः कर्तव्य इत्यर्थः । **नुटि कृते इति** । यत्नान्तरेण नुटि कृते नुम्प्राप्नोतीत्यर्थः । **किं च स्यादिति** । नलोपे कृते दोषाऽभावं मन्यते । **नामीति** । नलोपस्य सुब्विधावसिद्धत्वादजन्तत्वाऽभावात् । **इह तर्हीति** । 'इन्ह'न्निति नियमः सर्वस्योपधालक्षणस्य दीर्घत्वस्येति व्याख्यातम् । **नैषेति** । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेने'ति

---

**उ.]** प्युक्तरीत्या चिन्त्यं । **स च नुमेति** । विभक्तावित्यस्याऽङ्गविशेषणत्वमेव न्याय्यमितीदं चिन्त्यम् । त्रिशब्दान्ताङ्गाऽभावात्तिसृप्राप्तिरिति वक्तुं युक्तम् । विप्रतिषेधस्याऽज्ग्रहणसाध्यत्वं दर्शयति–**सत्यज्ग्रहण इति** । **पूर्वविप्रतिषेधादिति** । नुटोऽवकाशोऽग्नीनां, नुमोऽवकाशस्त्रपुणे । नुम्नुटोर्विशेषं दर्शयति–**तस्मिंश्चेति** ।

**यत्नः कर्तव्य इति** । नित्यमपि बाधित्वा पूर्वविप्रतिषेधवचनसामर्थ्यान्नुडित्यर्थः । **यत्नान्तरेणेति** । पूर्वविप्रतिषेधरूपेणेत्यर्थः । सकृद्गतिन्यायमनाश्रित्येदम् ।

ननु 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपे कृते 'नामी'ति दीर्घः सिध्यतीत्यत्राह–**नलोपस्येति** । ननु स नियमोऽनन्तरत्वात्सर्वनामस्थाने चेति दीर्घस्यैवेत्यत आह–**सर्वस्येति** । अत एवानुनासिकस्य क्वीति दीर्घस्याऽपि नियमः । तत्राऽत्र वा करणे

---

१ इतिः क्वचिन्न । २ 'यत्न' पा० । ३ 'दीर्घस्य' पा० ।

मस्ति तदुच्यताम्? ॥ इहापि क्रियमाणे प्रयोजनमस्ति ॥ किम्? ॥ अजादौ यथा स्यादिह मा भूत्—त्रपु जतु ॥ एतदपि नास्ति प्रयोजनं, 'विभक्ता'वित्युच्यते न चाऽत्र विभक्तिं पश्यामः ॥ प्रत्ययलक्षणेन ॥ 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणस्य प्रतिषेधः ॥ एवं तर्हि सिद्धे सति यदज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो'भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामे'ति ॥ किमेतस्य ज्ञापने प्रयोजनम्? ॥ हे त्रपु हे त्रपो । अत्र गुणः सिद्धो भवति ॥

॥*॥ इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्? ।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति? ॥ १ ॥
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड्वाच्य उत्तरार्थं तु इह किंचित्त्रपो इति ॥ २ ॥*॥ [ इकोचिविभक्तौ ]

## तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥ ७।१।७४ ॥

किमिह पुंवद्भावेनातिदिश्यते?॥*॥ नुम्प्रतिषेधः ॥*॥ कथं पुनः 'पुंव'-

---

प्र.]वचनात्। तथा च 'वाग्मिन' इत्यादावपि नियमाद्दीर्घाऽभावः। तत्रैवायमिति। एवं (हि) स्वरितत्वं न प्रतिज्ञेयं भवति । प्रत्यक्षश्रुतिसंभवे चाऽनुमानं नाश्रयितव्यं भवति। हे त्रपु हे त्रपो इति। 'हे त्रपु' इति प्राप्ते 'हे त्रपो' इति भवतीत्यर्थः। केचित्तु रूपद्वयमिष्यत इत्याहुः। 'क्वचित्प्रत्ययलक्षणं लुमता लुप्तायामपि संबुद्धौ भवती'त्येतदज्ग्रहणेन ज्ञाप्यते न तु सर्वत्रेति ते वदन्ति ॥ [इकोऽचि विभक्तौ]॥

तृतीयादिषु। किमिहेति। अन्यत्र पराश्रयाणि कार्याण्यतिदिश्यन्ते न तु स्वाश्रयकार्याऽभावः, इह तु विपर्ययो दृश्यत इति मत्वा प्रश्नः। कथं पुनरिति।

---

उ.]विशेषं दर्शयति—एवं हीति। अनुमानमिति। स्वरितत्वाद्धि उत्तरत्र शब्दोऽनुमीयते। सूक्ष्मं शब्दोच्चारणमेवात्राऽनुमानम्। ननु प्रत्ययलक्षणप्रतिषेधाऽभावस्य ज्ञापितत्वाद्धे त्रपु इत्ययुक्तमत आह—इति प्राप्ते इति। केचित्त्विति। अत्र चेड्ह्रस्वादिति सूत्रस्थं भाष्यं मानं। प्रकृतभाष्ये 'कश्चिदन्योऽपि प्रकार' इत्यपिशब्दश्च। अपिर्हि प्रत्ययलक्षणाऽभावं समुच्चिनोति। तदुपपत्तिं दर्शयति—क्वचिदिति। प्रत्ययलक्षणप्रतिषेधस्याऽनित्यत्वमात्रमनेन ज्ञाप्यत इति तदाशयः। 'सर्वत्रे'त्यस्य 'काले' इति शेषः। भाष्ये—श्लोके—व्यवधानादिति। नुमा व्यवधानाद्रायात्वं तिसृभावश्च न प्राप्नुत इत्यपि न, 'परत्वात्सिद्धे'रिति शेषः। संहिताया अविवक्षणान्नुमा-अपीति दीर्घाऽभावः। 'पूर्वविप्रतिषेधसिद्ध्यर्थमज्ग्रहण'मित्यस्योत्तरं 'नुड्वाच्य' इति। 'तु-इहे'त्यत्रेकोऽसवर्ण इति प्रकृतिभावः। 'त्रपो-इती'त्यत्र 'संबुद्धौ शाकल्यस्ये'ति प्रगृह्यत्वम् ॥ [ इकोऽचि विभक्तौ ] ॥

तृतीयादिषु भा। अन्यत्रेति। 'गोतो णि'दित्यादौ। तत्र हि णिदाश्रयवृद्ध्या-

---

१ 'भवतीति' पा०। २ भाष्यवार्त्तिकं, कात्यायनवार्त्तिकमन्यस्य वा वार्त्तिकमिदमिति केचित्। भाष्यमिदमित्यन्ये।

**दित्यनेन नुम्प्रतिषेधः शक्यो विज्ञातुम् ? ॥ वतिनिर्देशोऽयं, कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा 'उशीनरवन्मद्रेषु यवाः' । 'सन्ति' 'न सन्ती'ति । 'मातृवदस्याः कलाः' । 'सन्ति' 'न सन्ती'ति । एवमिहापि पुंवत्–'भवति,' पुंवत्'न भवती'ति वाक्यशेषं समर्थयिष्यामहे । यथा पुंसो न नुम्भवत्येवं तृतीयादिषु भाषितपुंस्कस्यापि न भवतीति ॥**

**किमुच्यते 'नुम्प्रतिषेध' इति, न पुनरन्यदपि पुंसः प्रतिपदं कार्यमुच्यते यत्तृतीयादिष्वजादिषु विभक्तिषु भाषितपुंस्कस्यातिदिश्येत ? ॥**
॥ * ॥ अनारम्भात्पुंसि ॥ * ॥ **न हि किं चित्पुंसि प्रतिपदं कार्यमुच्यते यत्तृतीयादिष्वजादिषु विभक्तिषु भाषितपुंस्कस्यातिदिश्येत । नुम्प्रकृतस्तत्र किमन्यच्छक्यं विज्ञातुमन्यदतो नुम्प्रतिषेधात् ?** ॥*॥ पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्त्वप्रतिषेधः ॥*॥ **'पुंव'दिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्त्वानां प्रतिषेधो वक्तव्यः । गुणः–ग्रामण्ये ब्राह्मणकुलाय । गुणः ॥** नाभावः–**ग्रामण्या ब्राह्मणकुलेन । नाभावः ॥ नुट्–ग्रामण्यां ब्राह्मणकुलानाम् । नुट् ॥**

---

**प्र.]** 'पुंव'दित्यनेन नुम्प्रतिषेधोऽशक्योऽतिदेष्टुं, न हि पुंसि नुम्प्रतिषेधो विहितः । **कामचारश्चेति** । यत्र क्रिया शब्देन नोपात्ता तत्र कामचारः, न तु 'ब्राह्मणवत्क्षत्रिये वर्त्तितव्य'मित्यादावुपात्तक्रियेऽतिदेशे। प्रतिपत्ता चोपमाने भावाऽभावयोरन्यतरमवगत्य वाक्यशेषं कल्पयति । तत्र पुंसि नुमभावदर्शनान्नपुंसके पुंवदतिदेशान्नुमभावः प्रतीयते । तत्रेह शास्त्रे यथालक्ष्यं क्वचित्-'भवती'त्यस्याध्याहारः , क्वचित् 'न भवती'त्यस्य , क्वचिदुभयस्य । यथा स्थानिवदतिदेशे । तथा 'वाय्वो'रित्यादौ स्वाश्रययलोपाऽभावः । **नहि किंचिदिति** । 'तस्माच्छसो नः पुंसी'ति नत्वातिदेशस्तृतीयादिषु पुंवद्भावातिदेशात् , पूर्वसवर्णदीर्घाऽभावाच्चेह न संभवति । **नुम्प्रकृत इति** । अनेन प्रत्यासत्तिमाश्रयति ।

---

**उ.]** यतिदिश्यते। स्वाश्रयाऽभावस्तु नातिदिश्यते। नैवमिह । यतः स्वाश्रययोर्नुम्ह्रस्वयोरभावो दृश्यते, पुंस्त्वाश्रयनत्वादिकं तु न दृश्यते इत्यर्थः । **न हि पुंसीति** । 'पुंसि यद्विहितं तन्नपुंसकेऽपि भवती'ति हि पुंवदित्यस्यार्थ इति भावः । ननु क्वचिन्नियमदर्शनात्कथं कामचारत्वोक्तिरत आह—**यत्र क्रियेति** । कथं पुनः कदाचिद्भावस्य प्रतीतिः कदाचिदभावस्येति विभागोऽत आह–**प्रतिपत्ता चेति**। शास्त्रे च लक्ष्यानुसाराद्व्यवस्थेत्याह—**यथालक्ष्यमिति । यथा स्थानिवदिति** । 'अचः परस्मि'न्नित्यत्र तन्त्रादिन्यायेन वाक्यभेदाश्रयणादिति भावः । **न संभवतीति** । एवञ्च नत्वस्येह विषयेऽसंभवात् 'न हि किञ्चि'दित्युक्तमिति भावः । भाष्ये–

---

१ 'पुंवत्प्रतिपदं' पा० । २ इदं क्वचिन्न । 'विभक्तिष्वजादिषु' ।
३ इदं भाष्यकृतो वार्त्तिकमन्यस्य वेति गौडाः । भाष्यमिदमित्यन्ये बभ्रमुः ।
४ 'पुंसः' पा० । ५ 'गुण' पा० । एवमग्रेऽपि निर्विभक्तिकं पाठान्तरमूह्यम् ।

औत्वं–ग्रामण्यां ब्राह्मणकुले । ह्रस्वत्वमप्रतिषिद्धं ह्रस्वाश्रयाश्चैते विधयः प्राप्नुवन्ति ॥*॥ ह्रस्वाऽभावार्थञ्च ॥*॥ [ ह्रस्वाभावार्थञ्च ] ॥ किं च ? ॥ नुम्प्रतिषेधार्थं [च] । कथं पुनरत्राऽप्रकृतस्याऽसंशब्दितस्य ह्रस्वत्वस्य प्रतिषेधः शक्यो विज्ञातुम् ? ॥*॥ अर्थातिदेशात्सिद्धम् ॥*॥ [ अर्थातिदेशात्सिद्धमेतत् ] ॥ नैवं विज्ञायते–'भाष्यते पुमाननेन शब्देन सोऽयं भाषितपुंस्कः, भाषितपुंस्कस्य शब्दस्य पुंशब्दो भवती'ति ॥ कथं तर्हि ? ॥ भाष्यते पुमानस्मिन्नर्थे सोऽयं भाषितपुंस्कः, भाषितपुंस्कस्याऽर्थस्य पुंवदर्थो

प्र.] ह्रस्वत्वमप्रतिषिद्धमिति । तस्याऽप्रकृतत्वात् । अर्थातिदेशात्सिद्धमिति । यद्यपि प्रकरणमनपेक्ष्य व्याप्त्याश्रयेणापि ह्रस्वाऽभावः सिध्यति तथापि संभवात्परिहारान्तरमाश्रितम् । यदि कार्याऽतिदेशः स्यात्तदा प्रकृतत्वाऽप्रकृतत्वलक्षणो भेदः स्यात् ,अर्थे त्वतिदिश्यमाने नास्त्ययं भेदः । नैवं विज्ञायत इति । यदा शब्देऽन्यपदार्थे कार्यातिदेशः स्यात्तदा प्रकृतत्वात्तस्यैव नुमः प्रतिषेधः स्यान्न ह्रस्वस्य। भाष्यते पुमानस्मिन्नर्थे इति।अर्थोऽन्यपदार्थ आश्रीयते, स चार्थो नपुंसकलक्षणो विरोधान्नाश्रीयते । न हि नपुंसकेऽर्थे पुंसो भाषणमुपपद्यते । तस्माच्छब्दप्रवृत्तिनिमित्तलक्षणोऽर्थोऽन्यपदार्थत्वेनाश्रीयते। तद्योगाच्चाऽभिधेयं नपुंसकं तदपि भाषितपुंस्कमुच्यते । तस्याऽर्थस्य पुंस्त्वातिदेशाद्द्वावपि नुम्ह्रस्वौ न भवतः, पुंसि द्वयोरप्यभावात्। अर्थस्य चाऽपौरुषेयत्वादतिदेशाऽसंभवात्तदतिदेशद्वारेणाऽनेककार्यातिदेश एवायं संपद्यते । तत्र यद्यप्यन्तरङ्गो ह्रस्वस्तथाप्यपवादविषयं प्रकल्प्यो-

उ.] ग्रामण्यां कुले इति । पुंवत्त्वाऽभावे तु नुमि 'ग्रामणिनी'त्येव। संभवादिति। व्यापित्वाच्चेत्यपि द्रष्टव्यम् । भाष्ये 'पुंशब्दो भवती'त्यस्य पुंशब्दवत्कार्यं भवतीत्यर्थः। भाष्ये–अस्मिन्नर्थे इति । यत्रार्थे प्रवृत्तिनिमित्तलक्षणे बुद्धिस्थे सतीत्यर्थः । नपुंसकलक्षण इति । व्यक्तिरूप इत्यर्थः । प्रवृत्तिनिमित्तेति । यथा ग्रामण्यादिशब्दानां ग्रामनयनादि ।

ननु प्रवृत्तिनिमित्तस्य पुंवत्त्वेऽपि तदाश्रयस्य क्लीबत्वसत्त्वेन नुम्ह्रस्वौ दुर्वारावत आह—तद्योगाच्चेति । यदभिधेयं नपुंसकं तदपि भाषितपुंस्कमुच्यत इत्यन्वयः । अत्राऽपि पक्षे फलतः कार्यातिदेशः संपद्यत इत्याह–तस्यार्थस्येति । अभिधेयस्य क्लीबरूपार्थस्येत्यर्थः । नन्विदमसङ्गतम्, अर्थस्याऽजादितृतीयादिविभक्तिपरत्वाऽसंभवात् । तदुक्तं–स्त्रियाः पुंवदिति सूत्रे भाष्ये–'नह्यर्थेन पौर्वापर्यं संभवती'ति इति चेन्न; 'अर्थातिदेशा'दित्यस्याऽर्थविशिष्टशब्दरूपातिदेशात्सिद्धमित्यर्थेनाऽदोषात् । भाषितपुंस्कक्लीबत्वविशिष्टाऽर्थवाचकशब्दस्य पुंस्त्वविशिष्टाऽर्थवाचकशब्दरूपाऽतिदेशात्क्लीबत्वस्य निवृत्त्या तत्प्रयुक्तकार्याऽप्राप्तिरित्याशयात्। अर्थातिदेशद्वारा कार्यातिदेशाश्र-

१ इदं व्याख्याभाष्यं लुप्तमिति गौडाः । २ 'पुनरप्रकृतस्य' पा० । ३ इदं व्याख्याभाष्यं सादृश्याल्लुप्तं भवेत् । ४ 'प्रकृतस्यैव' पा० । ५ 'यदप्यभि' पा०

भवती'ति ॥*॥ तद्धितलुक्प्रतिषेधश्च ॥*॥ तद्धितलुकश्च प्रतिषेधो वक्तव्यः । पीलुर्वृक्षः । पीलु फलम् । पीलुना पीलुने इति ॥*॥ न वा समानायामाकृतौ भाषितपुंस्कविज्ञानात् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ॥ ? 'समानाया-माकृतौ भाषितपुंस्कविज्ञानात्' । समानायामाकृतौ यद्भाषितपुंस्कम् [ इति विज्ञायते ] । आकृत्यन्तरे चैतद्भाषितपुंस्कम् ॥ किं वक्तव्यमेतत् ? ॥ नहि ॥ कथमनुच्यमानं गंस्यते ? ॥ एतदपि "अर्थनिर्देशात्सिद्धम्" ॥ [तृतीयादिषु]

**ई च द्विवचने ॥ ७।१।७७ ॥**

किमुदाहरणम् ? ॥ अक्षी ते इन्द्र पिङ्गले ॥ नैतदस्ति, पूर्वसवर्णेनाप्येत-त्सिद्धम् ॥ इदं तर्हि—अक्षीभ्यां ते नासिकाभ्याम् ॥ इदं चाप्युदाहरणम्—'अ-क्षी ते इन्द्र पिङ्गले' ॥ ननु चोक्तं "पूर्वसवर्णेनाप्येतत्सिद्ध"मिति ॥ न सिध्यति । नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति ॥*॥ छन्दसि नपुंसकस्य

---

प्र.] त्सर्गाणां प्रवर्तनान्नाऽत्र प्रवर्तते । ह्रस्वाऽभावाच्च गुणादीनां निमित्ताऽभावाद-प्रवृत्तिः सिद्धा । **तद्धितलुगिति** । अर्थातिदेशस्यैव प्रयोजनान्तरं चोद्यमुखेनोपन्य-स्यते । 'फले लु'गित्योरत्नो लुकि कृते पीलुशब्दो वृक्षाकृतौ पुँल्लिङ्गः । फलाकृतौ नपुंसकलिङ्ग इति पुंवद्भावान्नुमोऽप्रसङ्गः ।

**न वेति** । नन्वाकृतिरेवान्यपदार्थत्वेनाश्रिता । भाषितपुंस्कशब्दस्य तु भाषित-पुंस्कशब्दव्यपदेशो नैवाश्रितः । सत्यम् । साक्षाच्छब्दस्य भाषितपुंस्कव्यपदेशो नास्ति,अभिधेयद्वारकस्तु केन निवार्यते ? । तत्र पीलुशब्दो वृक्षाकृतौ पुँल्लिङ्गः फलाकृतौ नपुंसकलिङ्ग इति पुंवद्भावाऽप्रसङ्गः ॥ [ तृतीयादिषु ] ॥

**ई च द्विवचने** । **पूर्वसवर्णेनेति** । 'अक्षि–औ'इति स्थिते छान्दसात् पुंव-द्भावाच्छीभावे नुमि चाऽसति'प्रथमयोः पूर्वसवर्ण' इत्यनेन । **नुमा व्यहितत्वादिति** ।

---

उ.] यणे फलन्दर्शयति–**अनेककार्येति** । **प्रकल्प्येति** । अपवादशास्त्रवैयर्थ्यमेतन्मू-लम् । अत्राप्यर्थघटितातिदेशाश्रयवैयर्थ्यम् । नन्वर्थस्याऽन्यपदार्थत्वात्तद्धितलुक्या-कृतिभेदात् प्रतिषेधोऽनर्थक इत्यत आह–**अर्थातिदेशस्यैवेति** । वार्तिके 'तद्धितलुकः प्रतिषेध' इति समासः । तद्धितलुगन्तस्येत्यर्थः । ननु 'समानायामाकृतौ भाषित-पुंस्के'त्युक्त्या शब्दस्याऽन्यपदार्थत्वं भाति,तदयुक्तमिति शङ्कते–**नन्विति**। **साक्षादिति**। अनेन पूर्वभाष्यस्य मदुक्तरीत्या व्याख्यानं सूचितं । **वृक्षाकृतौ**—वृक्षत्वव्याप्य-जातौ । एवं फलाकृतावित्यपि । पीलोः फलमिति व्युत्पत्तावपि फलत्वावान्तरजाति-रेव प्रवृत्तिनिमित्तमिति भावः । [ **तृतीयादिषु भाषितपुंस्कं** ] ।

**ई च द्वि**। ननु परत्वान्नुमि तेन व्यवधानात्पूर्वसवर्णदीर्घेण न भाव्यं । न च पुंवद्भावः, अभाषितपुंस्कत्वादत आह—**छान्दसादिति** । ननु नुमः पूर्वं दीर्घोऽ-

---

१ 'तन्न वा' पा० । २ 'निर्देशादेव सिद्धम्' पा० । 'अर्थातिदेशादेवे'ति गौडाः । ३ इतिः क्वाचित्कः । ४ अयंपाठः क्वाचित्कः । ५ इदं वार्तिकं लुप्तं भवेदिति गौडाः ।

पुंवद्भावः(मधोर्गृम्णामि मधोस्तृप्ता इवासते) ॥*॥ **छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः ॥ [ किं प्रयोजनम् ? ॥ ] 'मधोर्गृभ्णामि' 'मधोस्तृप्ता इवासते' इत्येवमर्थम् ॥ पुंवद्भावेन नुमो निवृत्तिर्नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम् ॥** [ ॥*॥ स्वरार्थ ईकारः ॥*॥ ] **स्वरार्थस्तर्हीकारो वक्तव्यः । उदात्तस्वरो यथा स्यान्नपुंसकस्वरो मा भूदिति ॥ ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति ॥ अशक्यः पुंवद्भावातिदेशः स्वरे तन्त्रं श्रयितुम् । इह हि दोषः स्यात्–मध्वस्मिन्नस्ति 'मधुर्मास' इति ॥ स तर्हि पुंवद्भावो वक्तव्यः ? ॥ न वक्तव्यः । प्रकृतं 'पुंव'दिति वर्तते ॥** [ ई च द्विवचने ] ॥

---

**प्र.]** 'प्रथमयोः पूर्वसवर्ण' इत्यत्राऽक इति वर्तते । तेनाऽगचोः स्थाने पूर्वसवर्णदीर्घ उच्यमानो नुम्व्यवधाने नास्तीत्यक्षिणी इति प्राप्नोति । परत्वाच्च नुम्प्राप्नोति । ईकारस्तु विधीयमानः परत्वान्नुमं बाधते, तेन शीभावे कृते पूर्वसवर्णेनाऽक्षी इति सिध्यति । **नुमि निवृत्ते इति ।** अप्रवृत्तिरेव निवृत्तिः । शीभावोऽपि पुंवद्भावान्न भवति । **स्वरार्थ इति ।** उदात्तग्रहणानुवर्तनादीकार उदात्तः । **नपुंसकस्वर इति ।** 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्तत्वम् । **ननु चेति ।**—अव्युत्पत्तिपक्षे चोद्यते । व्युत्पत्तिपक्षे त्वशेर्निदिति नित्त्वादाद्युदात्तत्वेन भाव्यम् । **मधुर्मास इति ।** 'मत्वर्थे मासतन्वोर्मधोर्ञ च'ेति यत उत्पन्नस्य 'लुगकारेकाररेफाश्च वक्तव्या' इति लुकि कृते मासे पुंसि मधुशब्दो वर्तते इत्याद्युदात्तत्वं न स्यात् । तस्माद्यस्याऽन्यत्र नपुंसकत्वं दृष्टं तस्याऽसत्यपि नपुंसकत्व आद्युदात्तत्वमिष्यत इति पुंवद्भावेऽपि स्वरानिवर्तनात्स्वरार्थ ईकारो विधेयः । **स तर्हीति ।** मधोर्गृभ्णातीत्येवमाद्यर्थः । **प्रकृतमिति ।** वाक्यभेदेन संबन्धः क्रियते । 'छन्दसि नपुंसकं पुंव'दित्येकं वाक्यम् ।

---

**उ.]**स्त्वत आह–**परत्वाच्चेति** । एतत्सूत्रसत्त्वे यथा सिध्यति तथा दर्शयति–**ईकारस्त्विति** । इतरः प्रकारान्तरेणैतत्सूत्रं विनाऽपि नुमो निवृत्तिं दर्शयति—**छन्दसि नपुंसकस्येति** भाष्ये । 'मधोस्तृप्ता'इत्यादौ क्षीरवाची नित्यनपुंसको मधुशब्दः ।

नन्वीकारविधावपि कथं तस्योदात्तत्वमत आह—**उदात्तेति । नब्विषयस्येति ।** नपुंसकविषयस्येत्यर्थः । **अव्युत्पत्तीति ।** अत्र पक्षे पुंवत्त्वेन नपुंसकाऽभावान्नब्विषयस्येत्यस्याऽप्रवृत्तौ प्रातिपदिकस्वरेणाऽन्तोदात्तत्वमिति भावः । **व्युत्पत्तीति ।** अत्र पक्षे सत्यपि पुंवत्त्वे आद्युदात्तत्वमेवेति ईकारो वक्तव्य एवेति भावः । **तस्माद्यस्यान्यत्रेति ।** 'नब्विषयस्ये'त्यत्र विषयशब्दो न नित्यनपुंसकपरः, मधुशब्दस्य माक्षिकमद्यमकरन्दान्यतमवाचकस्य शाश्वतकोशसंमतोभयलिङ्गस्य भाष्यसंमतस्वराऽनापत्तेः । **'मकरन्दस्य मद्यस्य माक्षिकस्याऽपि वाचकः । अर्द्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधु'**रिति हि शाश्वतः । अत्र सूत्रेऽनुवृत्तावक्ष्यादीनामेव

---

१ अयं पाठः क्वचिदपि नास्ति । २ इदं कात्यायनवार्तिकं विलुप्तमिति मन्महे इति गौडाः । ३ 'उदात्तः स्वरो' पा० । ४ 'तिदेशः तत्राश्रयितुं' पा० ।

## नाभ्यस्ताच्छतुः ॥ ७।१।७८ ॥

कस्याऽयं प्रतिषेधः ? ॥ 'नुम' इत्याह[1] ॥ तन्नुमो ग्रहणं कर्तव्यम् ? ॥ न कर्तव्यं, प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'इदितो नुम्धातो'रिति ॥ तद्वै अनेकग्रहणेन[2] व्यवच्छिन्नमशक्यमनुवर्तयितुम् ॥ एवं तर्हि 'सर्वनामस्थान' इति वर्तते, सर्वनामस्थाने यत्प्राप्नोति तस्य प्रतिषेधः ॥ तद्वै बहुतरकेण[3] ग्रहणेन व्यवच्छिन्नमशक्यमनुवर्तयितुम् । अथेदानीं व्यवहितमपि शक्यते-ऽनुवर्तयितुं,–नुमेवानुवर्त्यः–इहार्थमुत्तरार्थं च । इहं[4] चैव प्रतिषेधः सिद्धो भवति, इह च 'आच्छीनद्योर्नु'मिति नुम्ग्रहणं न कर्त्तव्यं भवति ॥ [नाभ्यस्ता]।

## आच्छीनद्योर्नुम् ॥ ७।१।८० ॥

इह कस्मान्न भवति–'अदती घ्नती लुनती पुनती'ति[5] ॥*॥ लोपे कृते-

---

प्र.] 'अक्ष्यादीनां छन्दसि द्विवचन ईकारो भवती'ति द्वितीयं वाक्यम् ॥ [ई च द्विवचने] ॥

**नाभ्यस्ताच्छतुः** । **कस्यायमिति** । 'आच्छीनद्योर्नु'मिति नुम्ग्रहणाद्व्यवहित-स्यानुवृत्तिर्नाश्रिता, न चानन्तरः प्रतिषेधार्ह इति प्रश्नः । **एवं तर्हीति** । 'उगिदचां सर्वनामस्थानेऽधातो'रित्यतः सर्वनामस्थानं निषेध्यलक्षणार्थं विज्ञायते—'सर्वनाम-स्थाने यत्प्राप्नोति तदभ्यस्ताच्छतुर्न भवती'ति नुम एव प्रतिषेधः संपद्यते । **बहु-तरकेणेति** । नुमागमश्चतुर्भिर्योगैर्विच्छिन्नः । सर्वनामस्थानं तु पञ्चभिरिति प्रकर्ष-प्रत्ययनिर्देशः ॥ [ **नाभ्यस्ताच्छतुः** ] ॥

**आच्छीनद्योर्नुम्** । **इह कस्मादिति** । सर्वत्रैवाऽवर्णस्य निवृत्त्या भाव्यं, क्व चिल्लुका, क्व चित् श्लुना, क्व चिदेकादेशेन, क्वचित् 'श्नाभ्यस्तयोरात' इति लोपेन । तत्रावश्यं भूतपूर्वगतिराश्रयितव्या । अवर्णनिवृत्तिशास्त्रस्य वा नुमागमविधाना-त्पूर्वविप्रतिषेधादप्रवृत्तिः । ततश्चात्रापि प्रसङ्ग इति भावः । **लोपे कृते इति** । नित्य-

---

उ.] द्विवचन एव पुंवत्त्वं स्यान्न तु मधोरित्यादावत आह–**वाक्यभेदेनेति** । [ई च द्वि] ॥

**नाभ्य** । नन्वनन्तरस्याऽयोग्यत्वाद्व्यवहितस्यैव प्रतिषेधो भविष्यतीति प्रश्नानु-पपत्तिरत आह—**आच्छीति** । यद्यत्र नुमोऽनुवृत्तिस्तर्हि तत्र तदुपादानं व्यर्थमिति स्पष्टमेवेत्यर्थः । **न चानन्तर इति** । शत्रन्तात्तद्विधानाऽभावादित्यर्थः । **निषेध्य-लक्षणार्थमिति** । निषेध्योपलक्षणार्थमित्यर्थः । [ **नाभ्यस्ताच्छतुः** ] ॥

**आच्छीनद्योः** । **क्वचिदित्यादि** । 'अदती'त्यादौ लुका, जुह्वतीत्यादौ श्लुना, 'तुद-ती'त्यादावेकादेशेन, 'लुनती'त्यायौ 'श्नाभ्यस्तयो'रिति । **तत्रावश्यमिति** । सांप्रति-काऽवर्णान्तादुत्तरस्य शतुरसंभवात् । **पूर्वविप्रतिषेधादिति** । परत्वान्नुम एव प्रवृत्त्या ततः पूर्वं लुगादीनामप्रवृत्तिरित्यभिमानः । क्वचित्तु पाठः–**प्रतिबन्धा-**

---

१ 'नुमः प्रतिषेधः' इति,' 'नुम' इति वाऽत्र वार्त्तिकं लुप्तम् । २ 'अनेकेन ग्रहणेन' पा० । ३ बहुतरेण' पा० ४ 'इहैव' पा० । ५ इतिः क्वचिन्न । ६ 'पूर्वं प्रतिबन्धाद' इति लिखितपुस्तकस्थः पाठः ।

ऽवर्णाऽभावात् ॥*॥ **किं तर्ह्यस्मिन्योगे उदाहरणम् ? ॥ याती–यान्ती ॥** ॥ * ॥ एकादेशे व्यपवर्गाऽभावात् ॥ * ॥ **अत्राप्येकादेशे व्यपवर्गाऽभावान्न प्राप्नोति । अन्तादिवद्भावेन व्यपवर्गः** ॥ * ॥ उभयत आश्रये नाऽन्तादिवत् [भावः] ॥ * ॥ **नोभयत आश्रयः करिष्यते । नैवं विज्ञायते–'अवर्णान्ताच्छतुर्नुम्भवती'ति ॥ कथं तर्हि ? ॥ अवर्णान्नुम्भवति तच्चेदवर्णं शतुरनन्तरमिति** ॥ [ आच्छीनद्योर्नुम् ] ॥

## शप्श्यनोर्नित्यम् ॥ ७।१।८१ ॥

**नित्यग्रहणं किमर्थम् ? ॥ विभाषा माभूत् ॥ नैतदस्ति प्रयोजनं सिद्धोऽत्र पूर्वेणैव, तत्रारम्भसामर्थ्यान्नित्यो विधिर्भविष्यति ॥ तदेतन्नित्यग्रहणं सांन्यासिकं–तिष्ठतु तावत्** ॥ [ शप्श्यनोर्नित्यम् ] ॥

## सावनडुहः ॥ ७।१।८२ ॥

॥*॥ अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वात् ॥*॥ **अनडुहः सावा-**

---

प्र.]त्वादन्तरङ्गत्वाच्च। पूर्वोक्तेनैवाभिप्रायेण चोदयति–**किं तर्हीति** । इतरः सांप्रतिकमवर्णान्तं दर्शयितुमाह–**यान्तीति । नैवं विज्ञायत इति** । एवं विज्ञायमानेऽवर्णं शता चोभयमाश्रितं स्यात् । **अवर्णान्नुम्भवतीति** । अवर्णात्पर इत्यर्थः । शत्रवयवव्यतिरिक्तश्चाऽवर्णो गृह्यते,'आ'दित्युपादानसामर्थ्यात् । **तच्चेदवर्णमिति** । शत्रवयवस्तकारः शतृशब्देनोच्यते । न ह्यन्यथा एकादेशे कृते शतुरनन्तरमवर्णं भवति, 'उभयत आश्रये च नान्तादिव'दित्युक्तम् , तस्माच्छत्रवयवस्तकारः 'शतृ'-शब्देनोच्यते, शत्रवयवाऽकारव्यतिरिक्तं चाऽवर्णमेकादेशात्मकमाश्रीयते इति न कश्चिद्दोषः । **[ आच्छीनद्योर्नुम् ]** ॥

**सावनडुहः** । आमागमः सर्वनामस्थानमात्रे विधीयमानः सोरन्यत्र सावकाशो निरवकाशेन नुमा बाध्येतेति मत्वाह–**अनडुहः साविति। अवर्णोपधस्येति** । नचाऽऽमा विनाऽवर्णोपधत्वसंभव इति निमित्तमेव नुम आमिति बाध्यबाधकभावा-

---

उ.] **दिति** । नुम्विधेरनवकाशत्वप्रसङ्गेन प्रतिबन्धात्पूर्वमप्रवृत्तिरित्यर्थः । अयमेव युक्तः पाठः । ननु विप्रतिषेधान्निरवकाशत्वाद्वा पूर्वं नुमि लोपलुकोरप्रवृत्तिरत आह–**नित्यत्वादिति । पूर्वोक्तेनेति** । निरवकाशत्वरूपेणेत्यर्थः । **व्यतिरिक्तश्चेति** । तदवयवग्रहणे तु व्यभिचाराऽभाव इति भावः । एकादेशेऽवर्णे शत्रनन्तरत्वं न संभवतीत्यत आह—**शत्रवयव इति** [ आच्छीनद्योः ] ॥

**शप्श्यनोः**। [भाष्ये]**सांन्यासिकमिति** । पूर्वसूत्रे वाग्रहणानुवृत्तौ तात्पर्यग्रहार्थं तदावश्यकमिति भावः ।अन्यथा सामर्थ्येनाऽस्यैव वैकल्पिकत्वं स्यादिति बोध्यम् ॥

**सावनडुहः** । वार्तिके प्रतिषेधशब्देनाऽभाव उच्यते । **निमित्तमेवेति** ।

---

१ इमानि वार्त्तिकानि लुप्तानीति मन्ये । भाष्यमेवेत्येके । २ इदं क्वचिन्न । ३ 'सान्यासिकं' पा०॥*॥नित्यग्रहणं सांन्यासिकम्॥*॥ इतिवार्त्तिकमिति गौडाः।

**म्प्रतिषेधः प्राप्नोति ॥ किं कारणम् ? ॥ 'नुमोऽनवकाशत्वात्' । अनवकाशो नुमामं बाधते** ॥*॥ न वाऽवर्णोपधस्य नुम्वचनात् ॥*॥ **न वैष दोषः ॥ किं कारणम् ? ॥ 'अवर्णोपधस्य नुम्वचनात्' ॥ अवर्णोपधस्य नुमं वक्ष्यामि ॥ तदवर्णग्रहणं कर्तव्यम् ? ॥ न कर्तव्यं, प्रकृतमनुवर्तते ॥ क प्रकृतम् ? ॥ 'आच्छीनद्योर्नु'मिति ॥ यदि तदनुवर्ततेऽनडुहि यावन्त्यवर्णानि सर्वेभ्यः परो नुम्प्राप्नोति ॥ नैष दोषः 'मिदचोऽन्त्यात्पर' इत्यनेन यत्सर्वान्त्यमवर्णं तस्मात्परो भविष्यति ॥** ॥*॥ पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ॥*॥ **अथ वा पुनःप्रसङ्गान्नुमि कृते आम्भविष्यति** ॥*॥ यथाऽऽत्त्वादिषु द्विर्वचनम् ॥*॥ **तद्यथा–जग्ले मम्ले ईजतुरीजुरित्यात्त्वादिषु कृतेषु पुनः प्रसङ्गाद्द्विर्वचनं भवत्येवमत्रापि नुमि कृते आम्भविष्यति ॥ नैष युक्तः परिहारः । विप्रतिषेधे पुनःप्रसङ्गो, विप्रतिषेधश्च द्वयोः सावकाशयोर्भवति, इह पुनरनवकाशो**

उ०] ऽभावः। **अनडुहि यावन्तीति**। अनडुहोऽकारान्तत्वाऽसंभवादनडुहाऽवर्णं विशेष्यते न त्ववर्णेनाऽनडुच्छब्दः, ततः सर्वाऽवर्णानां नुम्प्रसङ्गः। यद्येवं सत्यामप्यादित्यस्यानुवृत्तौ यदेव सन्निहितमवर्णं तस्यैव नुम्स्यात्तथा च नुमा आम्बाध्येत । नैष दोषः-आगमिभेदात् । आमनडुहो, नुम् त्ववर्णस्य । तस्मात्सर्वाऽवर्णान्नुम्प्रसङ्ग एव दोषः । **मिदचोन्त्यादिति** । मित्त्वलिङ्गाच्च मित्परिभाषोपतिष्ठते । तदुपस्थानादुकारात्परो नुम्प्रसक्त 'आ'दित्यधिकारादवर्णादन्त्यात्परः क्रियते । न चाऽऽम्यकृतेऽवर्णोऽन्त्यो भवतीति सामर्थ्यादामि कृते नुम्विधीयते । अथ वोकारात्पर एव विधीयते । तत्राऽऽदित्यधिकारादयमर्थो भवति—'यथाऽवर्णात्परो नुम्भवति तथा कर्तव्यम्' । एवं चावर्णात्परो भवति यदि कृते नुम्याम् क्रियते । एवं च सत्यादित्यधिकारोऽनुगृहीतो भवति, परिभाषा च न त्यक्ता भवति। **पुनः प्रसङ्गविज्ञानाद्वेति** । चाऽर्थे वाशब्दः । बह्वनड्वांहीति–परत्वादामि कृते पुनःप्रसङ्गविज्ञानान्नपुंसकस्य

प्र०]तथा चोपजीव्यविरोधान्न नुम्बाधक इत्यर्थः।**यद्येवमिति**। तावतैवाऽऽदित्यनुवृत्तिः कृतार्थेति भावः । **आगमिभेदादिति** । तद्भेदेऽपि नुम्नुटोर्बाध्यबाधकभावस्य दृष्टत्वात्संभवेऽपि बाधाच्चेदं चिन्त्यम् । तस्मान्नमाऽऽम्बाध्येतेति पूर्वपक्ष एव भाष्यतात्पर्यमुचितम् । ननु परिभाषाऽधिकारयोः परस्परप्रतिबन्धादुभयोरप्यप्रवृत्तिः स्यादत आह—**मित्त्वलिङ्गेति** । **अथवेति** । अत्र पक्षे वाक्यभेदः क्रियते,–'अनुडुहोऽन्त्यादचः परो नु'मित्येकं, 'स चाऽवर्णात्परो यथा भवती'त्यादि द्वितीयं । तेनाऽऽमः प्रवृत्तिरनुज्ञाता भवति, तदाह–**एवञ्चेति। न त्यक्ता भवतीति** । आमश्च बाधो न भवतीत्यपि बोध्यम् । **चार्थे इति** । प्रकृतदोषस्य नेदं परिहारान्तरं, किन्तु दोषान्तरस्यैव परिहार इत्यर्थः । **परत्वादिति**। आम्-अनड्वानित्यत्र सावकाशः। नुम्-

१ 'क्व प्रकृतमनुवर्त्तते' पा० । २ इदं क्वाचित्कम् ।
३ 'भविष्यति' पा० । ४ 'वर्णो' पा० ।

नुमामं बाधते ॥ एवं तर्हि वृन्तान्तादेषं परिहारः प्रस्थितः ॥ कस्माद्वृत्तान्तात् ? ॥ इदमयं चोद्यो भवति–'अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वा'दिति, तस्य परिहारो 'न वाऽवर्णोपधस्य नुम्वचना'दिति । ततोऽयं चोद्यो भवति–'यत्र तर्ह्यवर्णप्रकरणं नास्ति तत्र ते आमा नुमो बाधनं प्राप्नोति बह्वनड्वांहि ब्राह्मणकुलानी'ति ॥ तत॑ उत्तरकालमिदं पठितं–'पुनःप्रसङ्गविज्ञानाद्वा सिद्ध'मिति ॥ [ सावनडुहः ] ॥

## दिव औत् ॥ ७।१।८४ ॥

॥*॥ दिव औत्त्वे धातु॑प्रतिषेधः ॥*॥ दिव औत्त्वे धातोः प्रतिषेधो वक्तव्यः, अक्षद्यूरिति ॥*॥ अधात्वधिकारात्सिद्धम् ॥*॥ 'अधातो'रिति वर्तते ॥ क्व प्रकृतम् ? ॥ 'उगिदचां सर्वनामस्थानेऽधातो'रिति ॥*॥ अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषः ॥*॥ अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषो भवति । काष्ठतक्षि कूटतक्षि । 'नपुंसकस्य झलचः–अधातो'रिति, प्रतिषेधः प्राप्नोति ॥*॥ उक्तं वा ॥*॥ किमुक्तम् ?॥ "अननुबन्धकग्रहणे हि न सानुबन्धकस्ये"ति । अथ वा "संबन्धमनुवर्तिष्यते"[इ॑ति] ॥ [दिवऔत् ]॥

## इतोऽत्सर्वनामस्थाने ॥ ७।१।८५॥

॥*॥ इतोऽद्वचनमनर्थकमाकारप्रकरणात् ॥*॥ इतोऽद्वचनमनर्थकम् ॥

---

प्र.] झलच इति नुम् क्रियते इति वाक्यार्थः । भाष्यकारस्तु न्यायव्युत्पादनार्थं विकल्पार्थं वाशब्दं व्याख्याय दूषयित्वा समुच्चयार्थमेव व्याचष्टे । वृत्तान्तादिति । प्रसङ्गो वृत्तान्तः । चोद्यप्रसङ्गादित्यर्थः । अथ वा वृत्तोऽतिक्रान्तोऽयं प्र॑बन्धश्चोद्यसमाधानलक्षणः,तदन्ते व्यवस्थितं यच्चोद्यं,तदुपचाराद्वृत्तान्तशब्दवाच्यं,तस्मादित्यर्थः॥

**दिव औत् । दिव औत्त्व इति ।** विशेषानुपादानाद्धातोरपि प्राप्नोति । **अक्षद्यूरिति ।** ऊठि कृते एकदेशविकृतस्याऽनन्यत्वादौत्त्वप्रसङ्गः । **अननुबन्धकग्रहण इति ।** अव्युत्पन्नं दिविति प्रातिपदिकमननुबन्धकम् । व्युत्पत्तिपक्षेऽप्यवयवानां प्रत्ययादीनां सानुबन्धकत्वं न प्रातिपादिकस्य । **सम्बन्धमिति ।** 'उगिदचा'मित्यनेन । 'दिव औ'दित्यत्र त्वधातोरिति वर्तते, 'उगिदचा'मिति निवृत्तम् ॥ [ दिव औत् ] ॥

**इतोऽत्सर्वनामस्थाने । इतोऽद्वचनमिति ।** क्वचिदेकादेशविधानात्क्वचिद्दीर्घ-

---

उ.] 'श्रेयांसी'त्यादौ । **न्यायेति ।** प्रकृतदोषपरिहारत्वाऽसंभवरूपेत्यर्थः । **तदन्ते इति ।** प्रकृतचोद्यपरिहारे कृते 'बह्वनड्वांहीत्यत्र कथ'मिति यच्चोद्यं तस्माद्धेतोरयं परिहार इत्यर्थः । [ सावनडुहः ] ॥

**दिव औत् ।** ननूठि दिव्रूपाऽभावोऽत आह—**ऊठीति । व्युत्पत्तीति ।** दिवेर्डिविरिति भावः । दिव आचारक्विप्रास्त्येवेति न तत्र पक्षयोः फलभेदः ।

---

१ 'देव' पा० । २ इतिः क्वचित्कः । ३ 'तत्रोत्तर' पा० । ४ 'धातोः प्रतिषेधः पा० । ५ इदं क्वचिदपि नास्ति । ६ 'यः प्रबन्धः' पा० ।

किं कारणम् ? ॥ 'आकारप्रकरणात्' । 'आ'दिति वर्तते । ॥*॥ षपूर्वार्थं तु[1] ॥*॥ षपूर्वार्थं तर्ह्यद्वक्तव्यः । ऋभुक्षाणमिन्द्रम् । ऋभुक्षणमिन्द्रम् ॥

## पुंसोऽसुङ् ॥ ७।१।८९ ॥

॥*॥ असुङ्व्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात् ॥*॥ असुङ्व्यपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामेवासुङ्भवतीति वक्तव्यम् ॥ किं प्रयोजनम् ?॥ 'स्वरसिद्ध्यर्थम्' । उपदेशावस्थायामसुङि कृते इष्टः स्वरो यथा स्यात्–परमपुमानिति । अक्रियमाणे ह्युपदेशिवद्भावे समासान्तोदात्तत्वेऽसुङ् आन्तर्यतोऽस्वरकस्याऽस्वरकः स्यात् ॥ किं पुनः कारणं समासान्तोदात्तत्वं तावद्भवति न पुनरसुङ् । न परत्वादसुङा भवितव्यम् ?॥ 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गलक्षणोऽसुङ्, अन्तरङ्गः स्वरः । 'असिद्धं बहिरङ्गमन्तरङ्गे'॥ स तर्हि उपदेशिवद्भावो वक्तव्यः ? ॥ न वक्तव्यः । असुङ[3] आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः समासस्वरस्य बाधको भविष्यति ॥ एवमप्युपदेशिवद्भावो वक्तव्यः, स यथैव हि निपातनस्वरः समासस्वरं बाधते

---

प्र.] विधानाच्च ह्रस्वस्य श्रवणेन न भाव्यमित्याकार एव प्रकृत इतो विधेय इत्यर्थः ।

**षपूर्वार्थमिति** । 'वा षपूर्वस्य निगमे' इति दीर्घविकल्पेन रूपद्वयसिद्धिः, आकारविधौ त्वेकमेव रूपं स्यात् । दीर्घविकल्पस्तु 'तक्षणं' 'तक्षाण'मित्याद्यर्थं स्यात् ।

**पुंसोऽसुङ । असुङीति** । 'पातेर्डुम्सु'न्नित्याद्युदात्तस्य पुंसः सकारस्याऽविद्यमानोदात्तत्वादनुदात्तस्य स्थानेऽसुङि क्रियमाणे आन्तरतम्यादनुदात्तं पदमेकवर्जमिति वचनाद्वाऽनुदात्त एव भवतीति 'पुमा'नित्यादौ दोषाऽभावः । 'परमपुमा'नित्यत्र त्वन्तरङ्गत्वात्समासाऽन्तोदात्तत्वे कृते सर्वनामस्थाने उत्पन्नेऽसुङ्क्रियमाणोऽनुदात्तः प्राप्नोति, उदात्तश्चेष्यते । ननु चोकारस्य कृतमपि समासान्तोदात्तत्वमसुङि कृतेऽनन्त्यत्वान्न व्यवतिष्ठते । नैतदस्ति । अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्याऽसुङोऽसिद्धत्वान्निर्वृत्तस्य चाऽनिवर्तनात् । उपदेशिवद्वचनात्तु पूर्वमसुङ्भवति, पश्चात्समासान्तोदात्तत्वम् । **अस्वरकः स्यादिति** । प्रवृत्तिकाले स्वरविशेषस्याऽनुपादानादनभिमतानुदात्तत्वप्रसङ्गाच्चाऽस्वरक इत्युच्यते, न त्वस्वरकस्याऽच उच्चारणं सम्भवति ।

---

उ.] **इतोत्स** । क्वचित्–पन्था इत्यादौ । क्वचित्–पन्थानावित्यादौ । [इतोत्] ।

**पुंसोऽसु** । समस्तोदाहरणदाने बीजमाह–**पातेरिति** । डुम्सुन उगित्त्वं 'बहुपुंसी'त्यादौ ङीबर्थं । सूतेः सस्य पोऽन्त्यस्य ह्रस्वो डुम्सुन्प्रत्यय इति 'स्त्रिया'मिति सूत्रे स्पष्टम् । भाष्ये–**दोषाऽभाव इति** । सर्वथाप्यनुदात्तस्यैवेष्टत्वादिति भावः । **अन्तरङ्गत्वादिति** । विभक्त्यनपेक्षत्वेनेति भावः । **अनन्त्यत्वादिति** । असुङ्स्त्वन्त्यत्वात्प्रवर्तयिष्यत इत्यर्थः । **अन्तरङ्गे इति** । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । **अनभिमतेति** । एवञ्चाऽस्वरक इत्यस्याऽनभिमतस्वरक इत्यर्थ इति भावः । **अथवेति** ।

---

१ तुः क्वाचित्कः । २ 'असुङः' पा० । ३ इदं क्वचिन्न ।

**एवं प्रकृतिस्वरमपि बाधेत,-पुमान् । तस्मात्सुष्ठूच्यते—'असुङ्व्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वा'दिति ॥** [ पुंसोऽसुङ् ] ॥

## गोतो णित् ॥ ७।१।९० ॥

**किमिदं गोतः परस्य सर्वनामस्थानस्य णित्त्वमुच्यते, आहो स्वित्सर्वनामस्थाने परतो णित्कार्यमतिदिश्यते?॥ कश्चात्र विशेषः ?** ॥*॥ गोतः सर्वनामस्थाने णित्कार्यातिदेशः ॥*॥ **गोतः सर्वनामस्थाने णित्कार्यमतिदिश्यते ।** ॥*॥सर्वनामस्थाने णिद्वचने[2] ह्यसंप्रत्ययः षष्ठ्यनिर्देशात् ॥*॥ **सर्वनामस्थानस्य णिद्वचने ह्यसंप्रत्ययः स्यात् ॥ किं कारणम् ? ॥ 'षष्ठ्यनिर्देशात्'[3]।षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते, न चात्र षष्ठीं पश्यामः ॥**

प्र.] अथ वोदात्तत्वाऽभावादस्वरक इत्युच्यते । **एवमपीति** । यस्मादुदात्तनिपातने दोषस्तस्मात्तत्परित्यागेनेत्यर्थः । **प्रकृतिस्वरमिति** । 'पुमा'नित्यादावाद्युदात्तत्वमित्यर्थः। प्रकृतिस्वरस्य कोऽवकाश इति चेत्पर्यायः स्यात् ॥ [ पुंसोऽसुङ् ] ॥

**गोतो णित्** । गाङ्कुटादिसूत्रे यावन्तः पक्षा उक्तास्ते सर्वे इह संभवन्ति । तत्र णकारस्येतः सर्वनामस्थानेऽभावाद्भावे वा तदनुवादे प्रयोजनाऽभावाण्णित्त्वव्यपदेशाऽभावः । संज्ञाकरणेऽपि ञ्णिद्ग्रहणे संज्ञिनोऽसंप्रत्ययः, शब्दभेदात्, भावनापक्षे णकार आदेशः प्राप्नोति । ण्वुलादि वा प्रसिद्धणित्त्वं प्राप्नोति । तद्वदतिदेशस्तु निर्दोषत्वादिहाश्रीयते। भाष्ये तु भावनापक्ष एवाशङ्क्य निराकृतः, परस्तात् स्थापितश्च। **किमिदमिति**।ण् इद्यस्य तत् णित्, तस्य भावो णित्त्वम् । तेनायमर्थः-

उ.] अत्र पक्षे इष्टमुदात्तत्वं स्वरशब्देन विवक्षितमिति भावः । उभयं कर्त्तव्यमिति भाष्यार्थो न ग्राह्य इत्याह-**कस्मादिति** ।**प्रकृतिस्वरस्य**-नित्त्वप्रयुक्ताद्युदात्तत्वस्य । **पर्याय इति**। कदाचिदाद्युदात्तत्वं कदाचिदन्तोदात्तत्वमित्यर्थः । यत्तूपदेशिवद्वचनेन सर्वनामस्थान इति विषयसप्तमी व्याख्येयेति बोध्यते इति, तन्न ; एवमप्यन्तरङ्गत्वेन पूर्वस्वरस्य दुर्वारत्वात्। [ पुंसोऽसुङ ] ॥

**गोतो णित्** । **यावन्त इति** । ङित्त्वादिसंबन्धप्रतिपादनं, भावनं, संज्ञाकरणमतिदेशश्चेति चत्वार इत्यर्थः । तत्राद्यः संभवन्नपि दोषसत्त्वान्नाश्रित इत्याह—**तत्र णकारस्येति** । अत्र पक्षे 'गोतः परं सर्वनामस्थानमित्संज्ञकणकारसंबन्धव'-दित्यर्थः । तत्राऽसतः संबन्धप्रतिपादनं न युक्तं । सत्त्वेऽपि दोष एवेत्याह—**भावे वेति** । तृतीयोऽपि नेत्याह-**संज्ञाकरणेऽपीति** । **शब्दभेदादिति** । 'णि'दिति हि संज्ञा, न तु 'ञ्णिदि'तीति भावः । कृत्रिमाऽकृत्रिमन्यायेनाऽणादीनां ग्रहणं न स्यादिति तु तत्त्वदूषणं । द्वितीये भाष्याभिसंहितं दोषमाह-**भावनेति** । अत्र पक्षे 'गोतः परस्य सर्वनामस्थानस्य णि'दित्यर्थः। तत्र कर्मधारयाश्रयणे आह—**णकार इति** । बहुव्रीहावाह-**ण्वुलादि चेति** । सूत्रे णिच्छब्देन णित्त्वयुक्तसर्वनामस्थानं

१ इतिः क्वचिन्न । २ 'णित्त्ववचने' पा० । ३ 'षष्ठ्यभावात्' पा० ।

एवं तर्हि वतिनिर्देशोऽयं 'गोतो णिद्वद्भवती' ति ॥ स तर्हि वतिनिर्देशः कर्तव्यो, न ह्यन्तरेण वतिमतिदेशो गम्यते ॥

अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा–एषं ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते मन्यामहे 'ब्रह्मदत्तवदयं भवती'ति । एवमिहाऽप्यणितं णिदित्याह । 'णिद्व' दिति गम्यते ॥ अथवा पुनरस्तु गोतः परस्य सर्वनामस्थानस्य णित्त्वम् ॥ ननु चोक्तं 'सर्वनामस्थाने णिद्वचने ह्यसंप्रत्ययः षष्ठ्यनिर्देशा'दिति ॥ नैष दोषः । 'गोत' इत्येषा पञ्चमी 'सर्वनामस्थान' इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति–'तस्मादित्युत्तरस्ये'ति ॥

अथ तपरकरणं किमर्थम् ? ॥ इह मा भूत्–चित्रगुः शबलगुरिति ॥ नैतदस्ति । ह्रस्वत्वे कृते न भविष्यति ॥ स्थानिवद्भावात्प्राप्नोति ॥

अत उत्तरं पठति ॥*॥ तपरकरणमनर्थकं स्थानिवत्प्रतिषेधात् ॥*॥ तपरकरणमनर्थकम् ॥ किं कारणम् ? ॥ 'स्थानिवत्प्रतिषेधात्' । प्रतिषिध्यतेऽत्र स्थानिवद्भावो–'गोः पूर्वणित्वात्त्वस्वरेषु स्थानिद्भावो न भवती'ति । स चावश्यं प्रतिषेधः आश्रयितव्यः ॥*॥ इतरथा हि संबुद्धिजसोः प्रतिषेधः ॥*॥ यो हि मन्यते तपरकरणसामर्थ्यादत्र न भविष्यतीति संबुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात्,–हे चित्रगो (हे) चित्रगव इति ॥

अथेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे गुणे कृते कस्मादेवात्र

प्र.] 'अणितः सर्वनामस्थानस्य स्थाने णित्सर्वनामस्थानमादेशो भवति', ण्वुलादयस्तु तदर्थाभिधानेऽसमर्थत्वान्न भवन्ति । एतन्न्यायाश्रयेण गाङ्कुटादिसूत्रेऽपि भावनापक्षे तु न कश्चिद्दोषः । **गोतइत्येषेति** । भावनापक्षे 'गोत' इति पञ्चमी । तद्वदतिदेशपक्षे तु षष्ठी । **तपरकरणमिति** । स्थानिवत्त्वनिषेधादानर्थक्यमिति प्रश्नः । **चित्रगुरिति** । 'तपरस्तत्कालस्ये' त्यत्राऽणिति नानुवर्तते इत्यनणोऽपि तत्कालस्य ग्रहणम् ।

**इतरथा हीति** । यदि स्थानिवत्त्वनिषेधो नाश्रीयते तदा सत्यपि तपरकरणे

उ.] लक्ष्यत इत्याशयेनाह–**तेनायमिति** । **णित्सर्वनामस्थानमिति** । अर्थत आन्तर्यादिति भावः । भाष्येऽपि–'णित्त्व'मित्यस्यैतत्संज्ञकणकारसंबन्ध इत्यर्थः ।

भाष्ये–अन्त्ये विशेषमाह–**गोत इति** । कार्यातिदेश इत्येतावद्वक्तव्यमत्र पक्षे इत्यर्थः। आद्ये विशेषमाह–**सर्वनामस्थाने णिद्वचने हीति** । तथाच सर्वनामस्थानस्येति वक्तव्यमित्यर्थः । **तद्वदतिदेशपक्षे त्विति** । 'गोशब्दस्य सर्वनामस्थाने णितीव कार्यं भवती'त्यर्थादिति भावः । ननु 'चित्रगु'रित्यत्र ह्रस्वत्वेऽङ्गाधिकारे तदन्तविधिसत्त्वेन स्थानिवत्त्वाद्गोशब्दान्तत्वेन प्राप्तणिद्वत्त्वस्य निवृत्तये तपरत्वमावश्यकमत आह–**स्थानिवत्त्वेति** । 'गोः पूर्वणित्वात्त्वे'त्यादिनेति भावः । ननु गोशब्दस्या-

१ 'एष' इति क्वचिन्न । २ 'तेन' । ३ 'णित्त्वव' । ४ 'स्थानिवद्भावप्रतिषेधात्' । ५ 'पूर्वत्व' । ६ 'स्थानिवन्न भवतीति' । ७ 'स्थानिवत्प्रतिषेधे' पा० ।

**न भवति ? ॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ ननु चेदानीमसत्यपि स्थानिवद्भावप्रतिषेधे एतया परिभाषया शक्यमुपस्थातुम् ? ॥ 'ने'त्याह । न हीदानीं क्व चिदपि स्थानिवत्स्यात् ॥** [ गोतो णित् ] ॥

**तृज्वत्क्रोष्टुः ॥ ७।१।९५ ॥ स्त्रियां च ॥ ७।१।९६ ॥**

**अथात्र विभक्तावित्यनुवर्तते उताहो न ? ॥ किं चातः ? ॥** ॥*॥ तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिर्न सिध्यति ॥*॥ **तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिरिति न सिध्यति ॥एवं तर्हि ईकार एव तृज्वद्भावं वक्ष्यामि॥ तदीकार-**

---

प्र.] संबुद्धौ जसि च गुणे कृते स्थानिवत्त्वात्तत्कालत्वाच्च णित्त्वं स्यादित्यर्थः। प्रतिषिद्धे तु स्थानिवत्त्वे गुणे कृते गोरूपस्य लाक्षणिकत्वाण्णित्त्वाऽप्रसङ्गः। अव्युत्पत्तिपक्षाश्रयेणैतदुच्यते। व्युत्पत्तिपक्षे तु सर्व्व एव लाक्षणिकः। **न हीदानीमिति।** स्वाश्रया या प्राप्तिः सा लक्षणप्रतिपदोक्तपरिभाषावशान्मा भूत्, स्थानिवत्त्वनिमित्ता तु स्यादेव प्राप्तिः। न हि सा पूर्वोक्तया परिभाषया निवार्यते, स्थानिवत्त्वस्य निर्विषयत्वप्रसङ्गात्। **[ गोतो णित् ] ॥**

**तृज्वत्क्रोष्टुः। अथात्र विभक्ताविति।** 'तृज्वत्क्रोष्टु'रित्यत्र सर्व्वनामस्थानाधिकाराद्विभक्त्यधिकारस्य न दोषो न प्रयोजनम्। 'विभाषा तृतीयादिष्वची'त्यत्राप्यादिशब्दस्य व्यवस्थावाचित्वाद्विभक्तय एव गृह्यन्त इति तत्रापि न विचार इति 'स्त्रियां चे'त्यत्रैवायं विचारः क्रियते। इष्टतोऽधिकाराणां प्रवृत्तिनिवृत्तिभावात्। **क्रोष्ट्रीभक्तिरिति।** क्रोष्ट्री भक्तिरस्येति बहुव्रीहिः। भक्तिशब्दस्य प्रियादिषु पाठात्पुंवद्भावाऽभावः। अत्रान्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति लुकि कृते विभक्त्यभावान्न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाच्च तृज्वद्भावो न प्राप्नोति, तदभावादृकारान्तत्वनिमित्तो ङीबपि न प्राप्नोति। **एवं तर्हीति।**

---

उ.] नण्वात्कथं तत्कालग्रहणमत आह—**पर इति। व्युत्पत्तीति।** तत्पक्षेऽपि तदपेक्षयाऽस्य विलम्बोपस्थितिकत्वाच्चिन्त्यमिदम्। **[ गोतो णित् ] ॥**

तृज्वत्क्रोष्टुः। भाष्ये सूत्रद्वयोपादानात्सूत्रद्वयविषयोऽयं विचार इति भ्रमं निवर्त्तयति—**तृज्वदिति। विभक्त्यधिकारस्येति।** 'इकोऽची'त्यतः। **न प्रयोजनमिति।** सर्वनामस्थानस्य विभक्तित्वाऽव्यभिचारादिति भावः। **तत्राऽपीति।** अत एव तदत्र नोपात्तं। यद्यपि बहुयोगव्यवच्छिन्नत्वादननुवृत्तिरेवोचिता, तथापि कृत्वा चिन्तयाऽयं विचार इत्याह—**इष्टत इति। बहुव्रीहिरिति।** क्रोष्ट्री सेव्याऽस्येत्यर्थः। **प्रियादिष्विति।** 'जातेश्चे'त्यस्याऽप्युपलक्षणमिदं, पूर्वनिपातप्रकरणाऽनित्यत्वादाहिताग्न्यादित्वाद्वा, राजदन्तादित्वाद्वा भक्तिशब्दस्य पूर्वनिपातः। केचित्तु "क्रोष्टुशब्दस्य तस्येयमिति पुंयोगात्स्त्रियां वृत्तिः। एतेन भक्तिशब्दस्य पूर्वनिपाताऽपत्तिः। किञ्च जातिवाचकत्वाज्जातेश्चेत्येव निषेधः सिद्ध इत्यपास्त"मिति, तन्न,

---

१ 'भविष्यति'। २ 'सत्यपि स्थानिवद्भावे'। ३ श्लोकवार्त्तिकद्वयमिदम् पा०।

ग्रहणं कर्तव्यं ? ॥ न कर्तव्यम् । क्रियते न्यासे एव । प्रश्लिष्टनिर्देशोऽयं–स्त्री ई–स्त्री, 'स्त्रिया'मिति । ॥*॥ ईकारे तन्निमित्तः सः ॥*॥ ईकारे चेत् । तन्न ॥ किं कारणम् ? ॥ 'तन्निमित्तः सः' । तृज्वद्भावनिमित्तः स ईकारः, नाऽकृते तृज्वद्भावे ईकारः प्राप्नोति ॥ किं कारणम् ? ॥ 'ऋन्नेभ्यो ङी'बित्युच्यते । ईकारे च तृज्वद्भावस्तदिदमितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ॥ एवं तर्हि गौरादिषु पाठादीकारो भविष्यति । ॥*॥ गौरादिषु न पठ्यते ॥*॥ नहि किं चित्तुन्नन्तं गौरादिषु पठ्यते ! ॥ एवं तर्हि एतज्ज्ञापयत्याचार्यो—'भवत्यत्र ईकार' इति यदयमीकारे तृज्वद्भावं शास्ति ॥ ॥*॥तेनैव भावनं चेत्स्यादनिष्टोपि प्रसज्यते ॥*॥ यद्यपि नास्ति विशेषो ङीपो

प्र.] विभक्तिर्निमित्तत्वेन नाश्रीयते किं तर्हि ईकारः । स्त्री ई स्त्रीति । स्त्रिया ई । स्त्रीत्वस्य द्योतक ईकार इत्यर्थः । षष्ठीसमासः । अर्थगतं च स्त्रीत्वमीकारे आरोप्य नदीसंज्ञानिमित्तावामाटौ क्रियेते । गौरादिपाठादिति । 'पृथिवी, क्रोष्टु, पिप्पल्यादयश्चे'ति च्छेदाध्यायिनः पठन्ति । न हि किं चिदिति । संहिताध्यायिनो न पठन्ति । सर्वात्मनाऽपाठं प्रतिपादयितुमेतदुच्यते । ङीपो ङीषो वेति । 'उदात्तयणो हल्पूर्वा'दिति ङीप उदात्तत्वविधानात् । ङीनपीति । ततश्चाद्युदात्तत्वप्रसङ्गः । ननु ईकारे तृज्वद्भावविधानात्सति शिष्टश्चित्स्वरो नित्स्वरं बाधिष्यते, ततश्चोदात्तयणो हल्पूर्वादित्युदात्तविधानान्नास्ति विशेषः । नैतदस्ति । क्रोष्टुशब्द आद्युदात्त एव । तत्र ङीनि कृते प्रयोजनाऽभावादकृते तृज्वद्भावे नित्स्वरो न प्रवर्तेत इति पूर्वं तृज्वद्भावः, परत्वाद्वा, तत्र कृते नित्स्वरः सतिशिष्टश्चित्स्वरं बाधेत । यदि तु ज्ञापकेन पिप्पल्याद्यन्तर्भावः क्रोष्टुशब्दस्यानुमीयते तदा न

उ.] दाम्पत्यरूपपुंयोग एव तत्प्रवृत्तेः । त्वदुक्तपुंयोगे 'तस्येद'मित्यणापत्तेस्तत्रैव भाष्ये उक्तत्वाच्च । 'ईकार एवे'त्येवकारार्थं दर्शयति–न विभक्तिरिति । स्त्रीशब्देन 'स्त्रीत्व'मुच्यते । द्योतकत्वं संबन्धः षष्ठ्यर्थ इत्याह–स्त्रीत्वस्येति । ननु स्त्र्याख्यत्वाऽभावान्नदीत्वाऽभावे कथमामाटावत आह—अर्थगतञ्चेति । स्त्रीत्वरूपार्थगतमित्यर्थः । तस्याऽपि स्त्रीशब्देनाऽभिधाने स्त्रीत्वात् । आचार्याणां मतभेदेन क्रोष्टुशब्दपाठाऽपाठावुक्ताविल्याह–छेदाध्यायिन इति । 'सर्वात्मना–अपाठ'मिति च्छेदः । गौरादिषु पठ्यते ईदृशन्तुन्नन्तं न किंचिदिति भाष्याक्षरार्थ इति भावः। सर्वथा पाठोऽप्रामाणिक इति तात्पर्यम् । ननु ङीम्ङीषोरनुदात्तत्वोदात्तत्वकृतो विशेषोऽस्तीत्यत आह–उदात्तयण इति । आद्युदात्त एवेति । तुन्नन्तत्वादिति भावः । उक्तयुक्ते'र्नहिप्रयोजनाऽनुवर्त्ति प्रमाण'मिति न्यायविरुद्धत्वादाह–परत्वादिति । तृज्वत्त्वनित्स्वरयोर्युगपत्प्राप्तावाद्युदात्तत्वान्तोदात्तत्वयोर्यौगपद्याऽसंभवेन परत्वात्तृज्वद्भावः । सतिशिष्ट इति । तृज्वदतिदेशेन स्वरविशिष्टस्यैव रूपस्यातिदेशान्नित्स्वरः पश्चात्प्रवर्त-

१ 'तदितरेतरा' पा० ।

वा[1] ङीषो वा, ङीनपि तु प्राप्नोति। इह च न प्राप्नोति–पञ्चभिः क्रोष्ट्रीभिः क्रीतै रथैः–पञ्चक्रोष्टृभी रथैरिति॥ एवं तर्हि —

॥*॥ नचाऽपरं[2] निमित्तं संज्ञा च प्रत्ययलक्षणेन[3] ॥*॥ **न चापरं निमित्तमाश्रीयते, 'अस्मिन्परतः क्रोष्टुस्तृज्वद्भवती'ति ॥ [ किं तर्हि ? ] ॥ अङ्गस्य क्रोष्टुस्तृज्वद्भवत्यङ्गसंज्ञा च भवति प्रत्ययलक्षणेन ॥**

प्र.] कश्चिद्दोषः। अपूर्वस्य त्वीकारस्यानुमानमाश्रित्य श्लोकवार्तिककारेण दोष उपात्तः। शार्ङ्गरवाद्यन्तर्भावानुमानमपि स्यादिति तदाशयः॥

**पञ्चभिरिति**। 'तद्धितार्थे'ति समासः। 'आर्हा'ति ठक उत्पन्नस्याध्यर्द्धपूर्वेति लुक्। 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुकि कृते 'न लुमताङ्गस्ये' ति प्रत्ययलक्षणप्रतिषेधादीकारनिमित्तस्तृज्वद्भावो न प्राप्नोति, अन्तरङ्गाणां च विधीनां लुका बाधनात्पूर्व्वमेव तृज्वद्भावो न लभ्यते, तत्राद्येन सर्वनामस्थाने तृज्वद्भावोऽन्त्येन त्वजादिषु तृतीयादिषु विकल्पेनेति हलादौ मध्यमेनाऽप्राप्तिरुच्यते। **पञ्चक्रोष्टृभिरिति**। केचिदाहुः–'भस्याऽढे' इति, 'ठक्छसोश्चे'ति वा प्राप्तः पुंवद्भावो 'जातेश्चे'ति प्रतिषिध्यते। तदयुक्तम्। भत्वाऽभावाच्छस्सहचरितस्य ठको ग्रहणात्प्राप्तिरेव पुंवद्भावस्य नास्ति। 'जातेश्चे'ति प्रतिषेध औपसङ्ख्यानिकस्य पुंवद्भावस्य नास्त्येव। यथा हस्तिनीनां समूहो हास्तिकमिति। **अङ्गसंज्ञा चेति**। लब्धाङ्गसंज्ञकस्य यत्कार्यं प्रत्ययलक्षणं तन्न लुमताङ्गस्येत्यनेन निषिध्यते। न चाऽङ्गसंज्ञा अङ्गस्य कार्यमिति प्रत्ययलक्षणेन भवत्येव। तत्र स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य लब्धाङ्गसंज्ञकस्य तृज्वद्भावे सति ङीप्प्रत्ययः कार्यः, कार्यकालत्वे तु संज्ञापरिभाषस्याङ्ग आश्रिते प्रत्ययोऽप्याश्रितो भवति, यथा 'वव्रश्चे'ति, तदाऽङ्गस्येत्येतदत्र नापे-

उ.] मानः सतिशिष्ट इति भावः। वस्तुतोऽस्त्येव दोष इत्याह–**शार्ङ्गरवाद्यन्तरिति**।

भाष्ये दोषान्तरमाह–**पञ्चभिरिति। बाधनादिति**। 'अन्तरङ्गानपी'ति परिभाषणादिति भावः। नन्वत्र पुंवद्भावेन सिद्धान्तेऽपि तृज्वद्भावो दुर्लभोऽत आह—**केचिदित्यादि**। आद्याऽप्राप्तौ हेतुः–**भत्वाभावादिति**। लुकि प्रत्ययलक्षणाभावेन इकादेशात्पूर्वमेव ठको लुका च तत्त्वाऽभाव इति भावः। अन्त्याऽप्राप्तौ हेत्वन्तरमप्याह— **छस्सहचरितस्येति**। एवन्तदुक्ताम्पुंवद्भावप्राप्तिं दूषयित्वा तदुक्तसमाधानाऽसङ्गतिमप्याह–**जातेश्चेतीति। यथेति**। 'यस्येति'लोपे तु तस्य स्थानिवत्त्वान्नस्तद्धित इति टिलोपाऽनापत्तिरिति भावः। भाष्ये–**नचाऽपरमिति**। 'विभक्ता'वित्यस्य विच्छिन्नत्वाल्लक्ष्यानुरोधाच्च 'सर्वनामस्थान' इत्यस्य नाऽनुवृत्तिरितिभावः। **प्रत्ययलक्षणं**–प्रत्ययनिमित्तं। नन्वीकारे परतो विधानान्न चाऽपरमित्यनुपपन्नमत आह–**तत्र स्त्रियां वर्तमानस्येति**। प्रश्लेषो नाश्रीयत इति भावः। इदञ्च यथोद्देशपक्षाश्रयणेनेत्याह— **कार्यकालत्वे त्विति**। अत्राऽपि गतिमाह–**तदाङ्गस्येति**। अपेक्षालक्षणत्वादधि-

१ 'वे' ति क्वचिन्न। २ 'नवापरं' पा०। ३ 'लक्षणा' पा०।

**किं पुनरयं शास्त्रातिदेशः-'तृचो यच्छास्त्रं तददतिदिश्यते', आहो स्विद्रूपातिदेशः, 'तृचो यद्रूपं तददतिदिश्यते' इति? ॥ कश्चात्र विशेषः ? ॥**

॥*॥ तृज्वदिति शास्त्राऽतिदेशश्चेद्यथा चिणि तद्वत् ॥*॥ **'तृज्व'दिति शास्त्रातिदेशश्चेद्यथा चिणि तद्वत्प्राप्नोति ॥ कथं च चिणि ? ॥ उक्तम्[1]–'अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्ध'मिति । आङ्गं यत्कार्यं तददतिदिश्यते ॥ एवमिहाप्यनङ्गुणदीर्घत्वान्यतिदिष्टानि रपरत्वमनतिदिष्टम् ॥ तत्र को दोषः ?॥**

॥*॥ तत्र रपरवचनम्[2] ॥*॥ **तत्र रपरत्वं न सिध्यति, तद्वक्तव्यम् ॥ नैष-दोषः । गुणेऽतिदिष्टे रपरत्वमप्यतिदिष्टं भवति ॥ कथम् ? ॥ 'कार्यकालं संज्ञापरिभाषं' यत्र कार्यं तत्र द्रष्टव्यम्, 'ऋतो ङिसर्वनामस्थानयोर्गुणो भवति' उपस्थितमिदं भवति-'उरण्रपर' इति ॥ एवं तर्हि अयमन्यो दोषो जायते-आहत्य तृचो यच्छास्त्रं तददतिदिश्येतां[3]ऽनाहत्य वेति ? ॥ किं चातः ? ॥**

---

**प्र.]** क्ष्यम्[4] । **किं पुनरिति ।** शास्त्रस्य शास्त्रं प्रत्यासन्नमिति प्रत्यासत्या शास्त्रातिदेशः प्राप्नोति । प्राधान्यात्तु रूपातिदेशप्रसङ्गः, रूपार्थत्वाच्छास्त्रप्रवृत्तेः । कार्यातिदेशस्तु शास्त्रातिदेशादभिन्नत्वात् पृथङ्नोपन्यस्तः । 'तृज्व'दित्यादौ[5] रूपेऽतिदिश्यमाने सूत्रसन्निवेशस्यानपेक्षणात् प्रकरणकृतव्यवस्थाऽभावः । शास्त्रातिदेशे तु प्रत्यासत्त्या-ऽङ्गप्रकरण[6]सन्निकृष्टस्यैव शास्त्रस्यातिदेशः स्यान्न विप्रकृष्टस्य, यथा चिण्वद्भावेन वृद्ध्यादीन्येव भवन्ति न हन्-इण्-इङादेशाः ।

**रपरत्वमिति ।** यथोद्देशपक्षे प्रकरणान्तरे संनिवेशादिति भावः । **कार्यकाल-मिति ।** प्रधानदेशत्वाद्गुणानामङ्गाधिकार एव रपर[7]परिभाषायाः सन्निधान-मित्यर्थः । **आहत्येति ।** उच्चार्य । उद्धोष्येत्यर्थः । शास्त्रशब्दे या शासनक्रिया

---

**उ.]** कारस्येत्यर्थः । वस्तुतस्तु कार्यकालपक्षेऽपि 'क्रोष्टुशब्दः प्रत्ययेऽङ्गसंज्ञो भवति, अङ्गसंज्ञकस्य च तृज्वाद्भव' इत्यर्थात्तृज्वत्त्वमनैमित्तिकमेव । 'उर'ङित्यादौ तु अङ्ग-संज्ञाद्वारा परनिमित्तत्वमादाय स्थानिवत्त्वप्रवृत्तिः । 'न लुमते'त्यस्य चाऽनित्यत्वादङ्ग-संज्ञाविषयेऽप्राप्तिः । अतएव 'न लुमता तस्मि'न्निति न्यासे न दोष इति भाष्याशयः । अत एव 'गुणो यङ्लुको'रित्यादीनामङ्गाधिकारे पाठः सङ्गच्छते । **कार्यातिदेशस्त्विति ।** शास्त्रातिदेशस्य कार्यफलकत्वादिति भावः । रूपातिदेशे तु नाऽयं दोष इत्याह-**रूपे इति ।** शास्त्रातिदेशे कार्यातिदेशे च शास्त्रकार्ययोरष्टाध्यायीस्थत्वात्सूत्रसन्निवेशरूप-तदपेक्षणेन प्रत्यासत्तिन्यायावसर इति भावः । **प्रधानदेशत्वादिति ।** 'उरण्रपर' इति परिभाषा कार्यकालपक्ष एव च युज्यत इति भावः । तत्तद्विध्येकवाक्यता-ऽऽपन्ने आङ्गत्वबुद्धिरप्यस्तीति तात्पर्यम् । नन्वमूर्तशब्दरूपशास्त्रस्याऽऽहननमयुक्त-मत आह—**उच्चार्येति ।** तृच्छब्दमुच्चार्येति भावः । ननूत्तरकालक्रियाया अश्रवणात्

---

१ 'उक्तमत्रेति पा० । २ 'परवचनं' पा० । ३ 'दिश्यते' । ४ 'पेक्षम्' पा०
५ 'त्यादिरूपे' । ६ 'रणात्संनि' पा० । ७ 'रपरे'ति क्वचिन्न । ८ 'मित्तमा' पा० ।

**यद्याहत्य,—दीर्घत्वमतिदिष्टम्, अनङ्गुणरपरत्वान्यनतिदिष्टानि ॥ अथानाहत्य, अनङ्गुणरपरत्वान्यतिदिष्टानि, दीर्घत्वमनतिदिष्टम् ॥ अस्त्वाहत्य ॥ ननु चोक्तं "दीर्घत्वमतिदिष्टमनङ्गुणरपरत्वान्यनतिदिष्टानी"ति । नैष दोषः–दीर्घत्वेऽतिदिष्टेऽनङ्गुणरपरत्वान्यप्यतिदिष्टानि भवन्ति ॥ कथम् ? ॥ 'उपधाया' इति वर्तते, न चाऽकृतेष्वेतेषु दीर्घत्वभाविन्युपधा[1] भवति ॥ कुतो नु खल्वेतदेतेषु विधिषु कृतेषु या उपधा तस्या उपधायाः[2] दीर्घत्वं भविष्यति न पुनः क्रोष्टोर्यो[3]ऽन्तरतमो गुणस्तस्मिन्कृतेऽवादेशे च योपधा तस्या दीर्घत्वं भविष्यति ? ॥ नैकमुदाहरणं योगारम्भं प्रयोजयतीति[4] । तत्र तृज्वद्वचनसामर्थ्यादेतेषु**

प्र.] शास्त्रकरणिका तदपेक्ष[5]पौर्वकाल्याश्रयः क्त्वाप्रत्ययः। तत्र यदि तृच्छब्दवच्छास्त्रमतिदिश्यते तदाहत्य यच्छास्त्रमिति पक्षः। अथ तु ऋकार एव तृच्छब्दे विवक्ष्यते, चकारःस्वरार्थस्तकारस्त्वप्रसिद्धाशङ्कानिवृत्त्यर्थः।'ऋज्व'दित्युच्यमानेऽप्रसिद्धातिदेशः संभाव्येत, ऋच्छब्दनिबन्धनसमासान्तशास्त्रातिदेशविषयः सन्देहो वा स्यात् । तस्मादृकारमात्रप्रतिबद्धशास्त्रातिदेशेनाहत्येत्येष पक्ष उद्भवति । **अनङ्गुणरपरत्वानीति** । 'ऋदुशनस्पुरुदंसोऽनेहसांचे' त्यनङ् । 'ऋतो ङिसर्व्वनामस्थानयो' रिति गुणः। 'उर'णिति रपरत्वम् । **दीर्घत्वमनतिदिष्टमिति** । नहि तद्वत इत्युच्यते, किं तर्हि 'अप्तृन्तृ'जिति तृच्छब्दोच्चारणेन । न चाऽवयवसमुदाययोर्युगपद्विवक्षा यतस्तृच्प्रतिबद्धमृकारप्रतिबद्धं च शास्त्रमतिदिश्येत । **न चाकृतेष्विति** । अचो दीर्घेण भाव्यम्, न च क्रोष्टुशब्दस्योकारान्तस्याऽजुपधा संभवति । तत्र 'क्रोष्टे'-त्यत्राऽनङि कृतेऽजुपधा भवति,'क्रोष्टारौ' इत्यादौ तु गुणरपरत्वयोः कृतयोः ।

**न पुनरिति** । क्रोष्टुशब्दस्य 'जसिचे'त्युकारस्य गुणोऽस्त्येव,तस्याऽवादेशे कृतेऽकारस्य दीर्घः स्यात् । ततश्च 'क्रोष्टाव' इति स्यात् । **नैकमिति** । अन्यथा दीर्घ-

उ.] त्वानुपपत्तिरत आह–**शास्त्रशब्दे इति**। शास्यतेऽनेनेति शास्त्रमिति व्युत्पादनादिति भावः । शासनमत्र–विधानं । भाष्ये 'तृच' इति शेषे षष्ठी बोध्या । **अप्रसिद्धाशङ्केति** । अप्रसिद्धत्वाशङ्केत्यर्थः । **ऋज्वदिति** । कुत्वन्तु सौत्रत्वान्न ।

**अप्रसिद्धातिदेश इति**। अप्रसिद्धप्रतियोगिकातिदेशसंभावनया किमत्रातिदिश्यत इत्यप्रतिपत्तिः स्यादित्यर्थः । **समासान्तशास्त्रेति** । 'ऋक्पूरब्धू'रितीत्यर्थः । **सन्देह इति** । तद्वा, ऋकारमात्रप्रतिबद्धं शास्त्रं वेति सन्देहः स्यादित्यर्थः ।

ननु 'तृज्व'दिति समुदायनिबन्धनशास्त्रस्याप्यतिदेशोऽस्त्वत आह—**नचेति** । वाक्यभेदप्रसङ्गादिति भावः । नन्वेकोदाहरणफलकमपि 'मुद्राद'णित्यादि शास्त्रं दृश्यतेऽत आह–**अन्यथेति** । यदि 'क्रोष्टाव' इत्येव फलं स्यात्तर्हि 'अप्तृ'न्नित्यत्रैव क्रोष्टुग्रहणं कुर्यात् । अतोऽतिदेशसामर्थ्यात्कृतेष्वनङादिषु या उपधा तस्या दीर्घत्व-

१ 'दीर्घभाविन्युपधा' पा० । २ 'उपधाया' इति क्वचिन्न । ३ 'क्रोष्टुः' पा० । ४ 'प्रयोजयतीति' पा० ५ 'तदपेक्ष्य' पा० ।

**विधिषु कृतेषु योपधा तस्या दीर्घत्वं भविष्यति ॥ अथ वा किं न एतेन— 'आहत्याऽनाहत्य वे'ति । आहत्याऽनाहत्य च तृचो यच्छास्त्रं तददतिदिश्यते ॥**

**अथ वा पुनरस्तु रूपातिदेशः ॥ अथैतस्मिन्रूपातिदेशे सति किं प्रागा-**

**प्र.]** विधावेव क्रोष्टुशब्दं निर्दिशेत् । ननु दीर्घविधौ क्रोष्टुशब्दे उपादीयमाने 'स्त्रियां च' 'विभाषा तृतीयादिष्वची'त्येवमर्थं 'तृज्वत्क्रोष्टु'रिति वक्तव्यमिति गौरवं स्यात् । नैष दोषः । 'अचि र ऋत' इति रादेशे प्रकृते 'क्रोष्टोः स्त्रियां च' 'विभाषा तृतीयादिष्वची'त्येवं रादेशविधानाद्गौरवाऽभावात् । ननु रादेशे 'क्रोष्टुः' 'क्रोष्टरी'ति न सिध्यति, नाप्युदात्तयणो हल्पूर्वादिति स्वरः । एवं तर्हि द्विःक्रोष्टुग्रहणं योगविभागाल्लघु । तदुक्तम्—'अक्षराधिक्यादपि योगविभागो गरीया'निति । तदेवं तृज्वद्भावविधानसामर्थ्याद्यादृशी तृच उपधा यादृशान्यनिमित्ता तादृश्या एव तादृशान्यनिमित्तायाः क्रोष्टुशब्दस्योपधाया दीर्घो भवतीत्यनङ्गुणरपरत्वेषु कृतेषु दीर्घो भवति ।

अस्मिन् परिहारे पूर्वोक्तगौरवप्रसङ्गादसमाश्वसन्परिहारान्तरमाह—**अथ वेति ।** 'तृज्व'दिति समुदाय एवाश्रीयते, तत्र व्याप्तिन्यायाश्रयाद्यत्किञ्चित्तृचो दृष्टं शास्त्रं तत्सर्वमतिदिश्यते । एवं भूयो लक्ष्यं लक्षणं चानुगृहीतं भवति । नन्वङ्गप्रकरणोपात्त एव शास्त्रेऽतिदिश्यमाने 'क्रोष्ट्री'ति यणादेशशास्त्रस्याऽनाङ्गत्वादतिदेशो न स्यात् । एवं तर्हि स्त्रियामाङ्गशास्त्रातिदेशाऽसंभवादनाङ्गस्याऽप्यतिदेशः । 'विभाषातृतीयादिष्वची'त्यत्र तर्हि 'क्रोष्टरी' त्यत्र गुणविधावतिदेशस्य चरितार्थत्वात् 'क्रोष्ट्रा' 'क्रोष्ट्रो'रिति यणादेशाऽप्रसङ्गः, 'क्रोष्टु'रित्यत्र 'ऋत उ'दिति शास्त्रं न प्रवर्तेत । तत्रापि तृतीयादिग्रहणसामर्थ्यादनाङ्गस्याप्यतिदेशोऽन्यथा विभाषा ङावित्येव ब्रूयात् । स्यादेतत् । अभावातिदेशार्थं तृतीयादिग्रहणं स्यात् । ततश्च विलक्षणौ गुणनाभावौ न स्यातां—'क्रोष्टवे क्रोष्टुने'ति । तत्र वक्ष्यधीने वाक्यशेषे भावातिदेशस्यैवाश्रयणात् । एवं तर्हि 'क्रोष्ट्री'ति स्त्रियामीकारो न प्राप्नोति । अनाङ्गमपि इकारशास्त्रमतिदेशसामर्थ्यादतिदेक्ष्यत इति एषोऽप्यदोषः । अथ वोत्तरयोर्योगयोरारम्भसामर्थ्याद्रूपातिदेश एव आश्रीयते, पूर्वसूत्रे तु पक्षभेदविचारः । **अथ वेति ।** सूत्रत्रये

**उ.]** मिति भावः । **मिति गौरवमिति** । तत्र तु सामर्थ्याद्रूपातिदेश एवेति भावः ।

**नापीति ।** क्रोष्ट्रेत्यादौ । क्रोष्टुशब्दस्य तुन्नन्तत्वेनाद्युदात्तत्वात्, तृज्वत्त्वे तु चित्त्वादन्तोदात्तत्वेन स्वरसिद्धिरिति भावः । **गौरवप्रसङ्गादिति** । योगविभागादक्षराधिक्यं गुर्वेवेति भावः । कथं पुनरेकेन वाक्येन पक्षद्वयलाभोऽत आह—**समुदाय एवेति । भूय इति ।** अनङ्गुणयणादिसंबन्धि भूयो लक्षणं, तद्विषयं भूयो लक्ष्यञ्चेत्यर्थः । **आङ्गशास्त्रातिदेशादिति ।** नच पञ्चभिः कर्त्रीभिः क्रीतो रथः पञ्चकर्त्ता रथः, हे पञ्चकर्तः, पञ्चकर्तरीति स्त्रीलिङ्गदृष्टस्य ङिसंबुद्ध्योर्गुणस्याऽतिदेशेन तच्चरितार्थं, 'स्त्रिया'मित्युक्त्या प्रत्यासत्तिन्यायेन स्त्रीत्वनिमित्तकस्य तन्निमित्तनिमित्तकस्य वाऽतिदेशेन तादृशस्याऽङ्गस्याऽसंभवादिति भावः । **न स्यातामिति** । तृजन्ते तयो-

**देशेभ्यो यद्रूपं तदतिश्यते, आहो स्वित्कृतेष्वादेशेषु ? ॥ किं चातः ? ॥ यदि प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते, ऋकार एकोऽतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानि । अथ कृतेष्वादेशेषु,–ऋकारोऽनतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यतिदिष्टानि । ॥*॥ उभयथा च स्वरोऽनतिदिष्टो न हि स्वरो रूपवान् ॥*॥**

प्र.] एकाकारप्रवृत्तिर्भवति, सर्वरूपसङ्ग्रहश्चेति भावः । **प्रागादेशेभ्य इति** । 'क्रोष्टृ'-इत्येतदृकारान्तम् । **कृतेष्विति** । 'क्रोष्टारा'विति रेफाद्यन्तम् । तत्र प्रागादेशेभ्यो यद्रूपं तत्प्रत्यक्षं, 'तृज्व'दित्युच्चारणात् । व्यापकं, लघु च, तस्मिन्नतिदिष्टे तन्निमित्तानामनङादीनां सर्वेषां स्वशास्त्रेण प्रवर्त्तनात् । कृतेषु चादेशेषु यद्रूपं लौकिकं तत्प्रधानं, तदर्थत्वादितरस्य । प्रक्रियालाघवं च भवतीति पक्षद्वयसंभवः । **ऋकार एक इति** । तदतिदेशसामर्थ्याच्च कार्यान्तराणामप्रसङ्गः स्यादिति मन्यते । **ऋकारोऽनतिदिष्ट इति** । किं पुनरृकारातिदेशप्रयोजनं, प्रयोगसमवायिरूपातिदेशेन गतत्वात् ; अत्र केचिदाहुः—यत्र ऋकारस्य विकाराऽभावः 'पञ्चकोष्टृभी रथै'रिति तत्र ऋकारोऽनतिदिष्टः स्यादिति । तदयुक्तम् । न हीदं वचनं कृतेष्वादेशेष्विति, लौकिकप्रयोगरूपोपलक्षणं त्वेतत् । यथा च क्वचित्कृतेष्वादेशेषु लौकिकं रूपं तथा क्वचिदकृतेष्विति नास्ति विशेषः । अत्रोच्यते–यदि ऋकारमनतिदिश्य कृतेष्वादेशेषु यद्रूपं तदतिदिश्यते तदा 'क्रोष्ट्रे'त्यादावुदात्तयणो हल्पूर्व्वादिति स्वरो न स्यात्, उदात्तयणोऽभावात् । सति त्वृकारातिदेशे तत्स्थानिकस्य यण उदात्तत्वात्स्वरः सिद्ध्यति । ननु स्वरदोषमनन्तरमेव वक्ष्यति तत्किमर्थमत्राभिधीयते, अत्रैकतरपक्षाश्रयेण स्वरदोष उच्यते, परस्तात्तु पक्षद्वयेऽपि वक्ष्यते । **नहि स्वरो रूपवानिति** । ननु शब्दस्य श्रोत्रेन्द्रियग्राह्यस्वभावो रूपम् । स्वरोपि श्रोत्रेन्द्रिय-

उ.] रभावदर्शनेन तुन्नन्तेऽप्यभावातिदेशादित्यर्थः । **रूपातिदेश एवेति** । अत एव 'पञ्चक्रोष्टृभि'रिति सिध्यति । तदेव ध्वनयन्नाह भाष्ये–**अथवेति** । उत्तरसाहचर्यादित्यादिर्भावः । तत्राद्ये उपपत्तिमाह–**तत्रेति** । प्रत्यक्षत्वे हेतुः–**तृज्वदित्युच्चारणादिति** । व्यापकत्वलघुत्वयोर्हेतुमाह–**तस्मिन्निति** । द्वितीयपक्षे उपपत्तिमाह–**कृतेषु चेति** । प्राधान्ये हेतुमाह–**तदर्थत्वादितरस्येति** । आदेशात्प्राग्रूपस्येत्यर्थः । **प्रक्रियालाघवञ्चेति** । पक्षान्तरे त्वनेन 'क्रोष्टृ' इति रूपं, ततोऽनङादिप्रवृत्तिरिति प्रक्रियागौरवमित्यर्थः । ननु ऋकारातिदेशे तत्तच्छास्त्रैरेव तेषां सिद्धेस्तान्यनतिदिष्टानीत्ययुक्तमत आह–**तदतिदेशेति** । **पञ्चक्रोष्टृभिरिति** । पञ्चभिः क्रोष्ट्रीभिः क्रीतै रथैरित्यर्थः । **यण उदात्तत्वादिति** । उदात्तस्थानिकत्वात्तृज्वद्भावे चित्स्वरेण ऋकारस्योदात्तत्वादित्यर्थः । **एकतरेति** । लौकिकरूपातिदेशे स्वरदोषः पर्यवस्यतीति इहोच्यते । उत्तरत्र पक्षद्वयसाधारणं स्वरदोषं वक्ष्यतीत्यपौनरुक्त्यमिति भावः । **ननु शब्दस्येति** । यत्तु पृथिव्यादिवृत्ति गुणभूतं रूपं, तस्य शब्देऽसंभवः । अन्यादृशो रूपवद्व्यवहारस्तु

१ अयं चः क्वाचित्कः । २ इदं भाष्यमेव न वार्त्तिकमित्यन्ये । ३ 'एकरस' पा० ।

**[उभयथा च स्वरोऽनतिदिष्टः ॥ किं कारणम् ? ॥ न हि स्वरो रूपवान् ॥][1] अस्तु प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते ॥ ननु चोक्तम् 'ऋकारोतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानी'ति ॥ नैष दोषः—ऋकारेऽतिदिष्टे स्वाश्रया**

**प्र.]** ग्राह्यत्वाद्रूपमेव। अथास्य व्यतिरिक्तं रूपं नास्तीति 'न हि स्वरो रूपवा'नित्युच्यते तदा तृज्रूपस्यापि रूपं नास्तीति तदपि न 'रूपव'दिति–नातिदिश्येत। रूपातिदेशश्च प्रक्रान्तो न रूपवदतिदेशः। अत्रोच्यते–'प्रागादेशेभ्यो यद्रूप'मित्यत्र तावत्पक्षे स्वरोऽशक्योऽतिदेष्टुं, तद्धि रूपं शास्त्रीयं, न च स्वरो रूपत्वेनाश्रितः। शास्त्र ण्वुल्तृचावित्यस्मिन्नुच्चारणे स्वरस्य भेदहेतुत्वेनाऽनाश्रयणात्, 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यादावुदात्तादिग्रहणात्। याऽपि 'चितोऽन्त उदात्त' इति स्वरप्रतिपत्तिरसावप्यनुमानान्न तूच्चारणात्। 'कृतेष्वादेशे'ष्वित्यत्र तु पक्षे यद्यप्युच्चारणे उदात्तादिगुणानामभेदकत्वं ज्ञापितं तथापि यथाऽऽन्तरतम्यात्स्वर आश्रीयमाणो भेदकस्तथातिदेशादपि, किं तूदात्तयण्व्यपदेशाऽभावात्स्वराऽसिद्धिः। यद्येवं 'रूपवा'निति किमुच्यते, 'रूप'मिति हि वक्तव्यम्। तत्र केचिदाहुः-भाष्यकारवचनात्स्वार्थिको मतुप्। अथवा स्वरवानेव स्वरः। अर्शआदित्वादच्। नहि स्वरवानृकार उदात्तादिना रूपेण रूपवान् शास्त्र आश्रीयते, तस्याऽभेदकत्वात्। **ऋकारेऽतिदिष्टे इति**। तदर्थत्वादृकारातिदेशस्येति भावः। **स्वाश्रया इति**। स्वं–निमित्तं शास्त्रं वा आश्रयो येषामिति

**उ.]** स्वरेऽपि समान इत्यर्थः। **अथास्येति**। मतुप उपादानादिति भावः। अयुक्तश्च भाष्ये मतुप्प्रयोग इत्याह–**रूपातिदेशश्चेति**। अत्र भगवतो गूढाभिप्रायमाह— **प्रागादेशेभ्य इति**। **रूपत्वेनेति**। शास्त्रीयस्य तृजादेर्भेदकत्वेनेत्यर्थः। **अस्मिन्नुच्चारणे इति**। उच्चारणविषये इत्यर्थः। भेदहेतुत्वेनाऽनाश्रयणे हेतुः–**लुङ्ङिति**।

**अनुमानादिति**। उदात्तगुणबोधकशास्त्ररूपादित्यर्थः। एवञ्चातिदेशकाले स्वराऽप्रतिपत्तेस्तदतिदेशोऽशक्यक्रिय इति अस्वरकस्यैव ऋकारस्यातिदेशात्तत्स्थानिकयण उदात्तस्थानिकत्वाऽभावात्क्रोष्ट्रेत्यादौ स्वराऽसिद्धिः, 'क्रोष्टा' 'क्रोष्टारा'वित्यादौ च स्वराऽसिद्धिरिति भावः। तत्राद्यपक्षे एव 'न हि स्वरो रूपवा'निति हेतुर्भाष्ये उक्तः। अन्त्ये तु स्फुट एव हेतुरिति नोक्तः। **भेदक इति**। तेन 'क्रोष्टे'त्यादौ स्वरसिद्धिरिति भावः। 'क्रोष्ट्रे'त्यादौ तु तदसिद्धिरित्याह–**किन्त्विति**। **परे** तु तृजन्तरूपस्यातिदेशः, रूपशब्देन वर्णरूपावयवसंस्थानं, तद्वदेव च शब्दस्य रूपमित्युच्यते, स्वरस्तु न तद्वानिति शब्दत्वादिवन्न शब्दस्य रूपं। तदुक्तं–'नहि स्वरो रूपवा'निति यथाश्रुतमेव भाष्यं योजयन्ति। **तदर्थत्वादिति**। 'यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' इति न्यायादिति भावः। अप्रधानत्वादृकारस्य स्वशब्देन परामर्शाऽसंभवो, दीर्घस्य ऋकारानाश्रयत्वं चात आह–**स्वं निमित्तमिति**। ऋकारान्तस्याऽनङादिविधानादिति भावः। बुद्धिस्थपरामर्शकः स इति तात्पर्यम्।

१ अयं पाठः क्वचिदपि नास्ति। २ 'क्रोष्टा' पा०।

अत्रैते विधयो भविष्यन्ति ॥ यदप्युच्यते-"उभयथा च[1] स्वरोऽनतिदिष्टो नहि स्वरो रूपवा"निति । सचकारग्रहणसामर्थ्यात्स्वरो भविष्यति ॥

॥*॥ रूपातिदेश[2] इति चेत्सर्वादेश[3]प्रसङ्गः ॥*॥ रूपातिदेश इति चेत्सर्वादेशः प्राप्नोति। सर्वस्य तुन्नन्तस्य तृशब्द आदेशः प्राप्नोति ॥*॥ सिद्धन्तु रूपातिदेशात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'रूपातिदेशात्' । रूपातिदेशोऽयम् ॥ ननु चैवमेव कृत्वा चोद्यते-"रूपातिदेश इति चेत्सर्वादेशप्रसङ्ग" इति?॥*॥ सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवती'त्येवं तुन्नन्तस्य तृजन्त आदेशो भविष्यति ॥ एवमपि किं चिदेव तृजन्तं प्राप्नोति, इदमपि प्राप्नोति-'पक्त्रे'ति ॥*॥ आन्तरतम्या[4]च्च सिद्धम् ॥*॥ क्रोष्टोर्य[5]दन्तरतमं तद्भविष्यति ॥ किं पुनस्तत् ? ॥ कुशेर्यस्तृज्विहितस्तदन्तम् ॥*॥ तृज्वद्वचनमनर्थकम्[6] ॥ [किं कारणम् ? ]॥*॥ तृज्विषये तृचो मृगवाचित्वात् ] ॥*॥ तृज्विषये एतत्तजन्तं मृगवाचि [ ॥*॥ तुनो निवृत्त्यर्थम् ॥*॥ ]॥ तुनो निवृत्त्यर्थं तर्हीदं वक्तव्यम् । तुनः सर्वनामस्थाने निवृत्तिर्यथा स्यात् ॥*॥ तुनो निवृत्त्यर्थमिति चेत्सिद्धं[7] यथान्यत्रापि ॥*॥ तुनो निवृत्त्यर्थमिति चेत्तदन्तरेण वचनं[8] सिद्धं,-यथान्यत्राप्यविशेषविहिताः शब्दाः नियतविषया दृश्यन्ते ॥ क्वाऽन्यत्र ? ॥ तद्यथा घरतिरस्मायविशेषेणोपदिष्टः

प्र.] समासः । सचकारेति । अन्यथा 'तृव'दिति ब्रूयात् । न च तृंस्तृज्भ्यामन्योऽर्थवांस्तृशब्दोऽस्ति यस्य ग्रहणे दोषः स्यात् । तस्मादनुमेयोऽपि स्वर उच्चारणेऽनाश्रीयमाणोऽपि चकारोच्चारणाद्भवति। सर्वादेशप्रसङ्ग इति । रूपातिदेशशब्दात्-स्थान्यादेशभावोऽभ्युपगतो भवतीत्यनेकाल्त्वात्सर्वादेशस्तृशब्दः प्राप्नोति ।

सिद्धमिति । तृजन्तरूपातिदेशादित्यर्थः । आन्तरतम्यादिति । अर्थेन रूपेण वेत्य[9]र्थः । तृज्विषय इति । तृज्वद्भावविषय इत्यर्थः । घरतिरिति । 'घृ घृ सेचने'

उ.] शास्त्रं वेति । ऋकारेऽतिदिष्टे स्वंशास्त्रमाश्रित्यैते विधयः कार्याणि भविष्यन्तीत्यर्थः । ननु 'तृव'दित्युक्ते पितृमातृशब्दस्य तृशब्दस्याऽप्यतिदेशः स्यादिति दीर्घो न स्यादत आह—न चेति । अर्थवत्परिभाषयाऽर्थवतस्तृरूपस्यातिदेश इत्यर्थः । उणादीनामव्युत्पन्नत्वात्तत्रत्यतृशब्दोऽनर्थकः । व्युत्पत्तिपक्षेऽपि अनान्तर्यात्क्रोष्टुशब्दस्थाने मातृपितृरूपानतिदेश इति बोध्यम् । अनुमेयोऽपि-अतिदेशकालेऽप्रतीतोऽपि । तदेवाह-उच्चारणे अनाश्रीयमाण इति । नन्वतिदेशे कथं सर्वादेशप्रसङ्गोऽत आह—रूपेति । रूपातिदेशद्वारेणादेश एव फलतो विधीयत इत्यर्थः ।

१ चः क्वाचित्कः । २ रूपादेशः' पा० । ३ 'सर्वातिदेश' पा० । ४ 'आन्तरतम्यात्तु' पा० । ५ 'क्रोष्टुः' पा० । ६ एतस्य व्याख्यानं त्रुटितं भवेदितिगौडाः । ७ चेत्तत्सिद्धम् पा० । ८ 'वचनात्' पा० । ९ स्वरूपेण चेत्यर्थः ।

स 'घृतं' 'घृणा' 'घर्म' इत्येवं विषयः। रशिरस्मायविशेषेणोपदिष्टः स 'राशिः' 'रश्मिः' 'रशने'त्येवं विषयः। लुशिरस्मायविशेषेणोपदिष्टः स 'लोष्ट' इत्येवंविषयः॥ इदं तर्हि प्रयोजनं–'विभाषां वक्ष्यामी'ति 'विभाषा तृतीयादिष्वची'ति ॥*॥ वावचनानर्थक्यं च स्वभावसिद्धत्वात् ॥*॥ वावचनं चानर्थकम् ॥ किं कारणम्? ॥ 'स्वभावसिद्धत्वात्'। स्वभावत एतत्तृतीयादिष्वजादिषु विभक्तिषु तृजन्तं च तुन्नन्तं च मृगवाची'ति ॥*॥ गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम् ॥*॥ गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम्भवति पूर्वविप्रतिषेधेन ॥ तत्र गुणस्यावकाशः–अग्नये वायवे। नुमोऽवकाशः–त्रपुणी। जतुनी। इहोभयं प्राप्नोति–त्रपुणे। जतुने॥ वृद्धेरवकाशः–सखायौ सखायः। नुमः स एव। इहोभयं प्राप्नोति–अतिसखीनि ब्राह्मणकुलानीति। औत्वस्यावकाशः–अग्नौ। वायौ। नुमः स एव। इहोभयं प्राप्नोति–त्रपूणि। जतूनीति। तृज्वद्भावस्यावकाशः–क्रोष्ट्रा। क्रोष्टुना। नुमः स एव। इहोभय प्राप्नोति–कृशक्रोष्टुने अरण्याय। हितक्रोष्टुने वृषलकुलाय। नुम्भवति पूर्वविप्रतिषेधेन॥

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः? ॥ न वक्तव्यः। इष्टवाची परशब्दो 'विप्रतिषेधे परं-यदिष्टं तद्भवती'ति ॥*॥ नुमचिरतृज्वद्भावेभ्यो नुट् [पूर्व-

प्र.] इति भौवादिकः। जिघर्तीत्येतत्तु 'घृ क्षरणदीप्त्यो'रित्यस्य 'बहुलं छन्दसी' त्यभ्यासस्येत्वे कृते रूपम्। रशिलुशी अपठितावपि भाष्यकारवचनाद्धातू बोद्धव्यौ। प्रयुक्तानामिदमन्वाख्यानं न त्वस्मादपूर्वशब्दप्रतिपत्तिरिति नियतविषयत्वमुच्यते। अनेनैव न्यायेन 'अस्तेर्भू'रित्यादीन्यपि प्रत्याख्येयानि। अबुधबोधनार्थं तु किंचिद्वचनेन प्रतिपाद्यते। न्यायव्युत्पादनार्थं च आचार्यः किं चित्प्रत्याचष्टे। न ह्यत्रैकः पन्थाः समाश्रीयते। **अतिसखीनीति**। अतिक्रान्तः सखा यैरिति बहुव्रीहिः। **कृशक्रोष्टुने इति**। क्रोष्टुशब्दः स्त्रीपुंसलिङ्ग इत्यन्यपदार्थस्य नपुंसकत्वं प्रदर्श्यते।

उ.] एवञ्च क्रोष्टुशब्दस्थाने तृशब्द आदेशः प्राप्नोतीत्याशयः। ननु रूपातिदेशे एवापादिते दोषे कथं स एव हेतुरत आह–**तृजन्तेति**। **तृज्वद्भावविषय इति**। वार्तिके 'तृ'शब्देन तद्युक्तोऽतिदेशो लभ्यत इति भावः। **धातू बोद्धव्याविति**। धातुपाठे पठितावाचार्येणेति बोद्धव्यावित्यर्थः। **प्रत्याख्येयानीति**। अस्तेः सार्वधातुकमात्रविषयत्वादिति भावः। अबुधबोधनाय सूत्राणि, न्यायव्युत्पादनाय तु भगवतः प्रत्याख्यानमिति तात्पर्यम्। किञ्च सूत्रेषु कृतेष्वपि अनभिधानमावश्यकमिति ध्वनयन् वार्तिकमाह–**गुणेति**। तत्पुरुषे टचः प्रसङ्गादाह–**बहुव्रीहिरिति**। समासोदाहरणस्योपयोगमाह–**क्रोष्टुशब्द इति**। अन्यथा पुंवत्त्वाऽभावपक्षे 'कृशक्रोष्टृणे' इत्यपि

१ 'घर्ममित्येव' पा०। २ 'विभाषा' पा०। ३ 'स्वभावत एव'। 'स्वभाव एव' पा०। ४ पूर्वेति क्वाचित्कम्। ५ क्वचित्तु 'नु'डित्यन्तमेव वार्तिकमेतल्लभ्यते। ६ 'भौवादिकम्' पा०।

विप्रतिषेधेन] ॥*॥ **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन वक्तव्यः। नुमोऽवकाशः–त्रपूणि जतूनि। नुटोऽवकाशः–अग्नीनां वायूनाम्। इहोभयं प्राप्नोति–त्रपूणां जतूनाम्॥ अचि रादेशस्यावकाशः–तिस्रस्तिष्ठन्ति। चतस्रस्तिष्ठन्ति। नुटः स एव। इहोभयं प्राप्नोति–तिसृणां चतसृणाम्॥ तृज्वद्भावस्यावकाशः–क्रोष्ट्रा क्रोष्टुना। नुटः स एव। इहोभयं प्राप्नोति–क्रोष्टूनां। नुड्भवति पूर्वविप्रतिषेधेन॥**

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः?॥ न वक्तव्यः** ॥*॥ न वा नुड्विषये रप्रतिषेधात् ॥*॥ **न वैतद्विप्रतिषेधेनापि सिध्यति–तिसृणां चतसृणामिति॥ कथं तर्हि सिध्यति?॥ 'नुड्विषये रप्रतिषेधात्'। नुड्विषये रप्रतिषेधो वक्तव्यः। [ स चावश्यंवक्तव्यः ]** ॥*॥ इतरथा हि सर्वापवादः ॥*॥ **इतरथा हि सर्वापवादो रादेशः स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत।** ॥ * ॥ तस्मान्नुड्विषये रप्रतिषेधः ॥ * ॥ **तस्मान्नुड्विषये रादेशस्य प्रतिषेधो वक्तव्यः॥ न वक्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति 'न रादेशो नुटं बाधत' इति,यदयं 'न तिसृचतसृ' इति प्रतिषेधं शास्ति-'नामि दीर्घत्वस्य'**[तृज्वत्क्रोष्टुः]॥

प्र.]**क्रोष्टूनामिति**। तृज्वद्भावः कृते नुड्यनजादित्वान्न प्राप्नोतीत्यनित्यो, नुडागमोपि कृते तृज्वद्भावे सन्निपातपरिभाषया न प्राप्नोतीत्यनित्यः। **न वेति**। नुड्रेफयोर्यो विप्रतिषेध उक्तस्स नेत्यर्थः। **स यथैवेति**। 'मध्येऽपवादा' इत्येतदनाश्रित्यैतदुक्तं, तत्र ह्याश्रीयमाणे गुणं न बाधेत। गुणपूर्व्वसवर्णग्रहणमुपलक्षणम्–'ऋत उ'-दित्युत्वस्यापि बाधनात्प्रियतिस्रः स्वमित्यादौ। **यदयमिति**। न हि रादेशे कृते

उ.] स्यादिति भाष्याशयः। ननु 'कृशक्रोष्टु-ङे' इत्यस्यामवस्थायां नुम्तृज्वत्त्वयोः प्राप्तयोः परत्वात्तृज्वत्त्वे सकृद्गतिन्यायेन नुमभावे 'कृशक्रोष्ट्रे' इत्येव रूपं, तच्चेष्टमेव पुंवत्त्वपक्षे इति पूर्वविप्रतिषेधो व्यर्थः। 'कृशक्रोष्टुने' इति तु तृज्वत्त्वाऽभावपक्षे साधु। नच पुनःप्रसङ्गविज्ञानपक्षे तत्प्राप्त्या चारितार्थ्यं, तत्पक्षाश्रयेण वचनकरणाऽपेक्षया सकृद्गतिन्यायाश्रयणेन वचनाऽनारम्भे लाघवादिति चेन्न; एतद्भाष्यप्रामाण्यात्पुंवत्त्वविषयेऽनभिधानेन तृज्वत्त्वाऽप्रवृत्तेः। तेन 'कृशक्रोष्ट्र' इत्याद्य· साध्वेवेति सुधियो विभावयन्तु। **सन्निपातपरिभाषयेति**। अजादिप्रत्ययसन्निपातलक्षणत्वात्तृज्वद्भावस्येत्यर्थः। भाष्ये विप्रतिषेधशब्दस्य न सामान्यपरत्वमित्याह–**नुड्रेफयोरिति**। अत्रत्यनुड्रेफयोर्बाध्यबाधकभावपरभाष्यविरोधाच्छ्योरितिसूत्रस्थो भिन्नफलकस्याऽबाधकत्वपरः कैयटश्चिन्त्यः। **गुणमिति**। 'जसि चे'ति गुणस्य रादेशात्परत्वादिति भावः। तस्माद्रादेशो बाध्यसामान्यचिन्तया सर्वबाधक इत्यवश्यमुपेयमिति तात्पर्यम्। **अनजन्तत्वादिति**–मध्यमणिन्यायेनोभयान्वयि। **[तृज्व]**॥

१ अयं पाठः क्वाचित्कः। २ 'तेनेत्यर्थ' इति मुद्रितः पाठः। ३ 'प्रियतिसुः' पाठा०।

## चतुरनडुहोरामुदात्तः ॥ ७।१।९८ ॥

॥*॥ आमनडुहः स्त्रियां वा ॥*॥ आमनडुहः स्त्रियां वेति वक्तव्यम् । अनडुही । अनड्वाही ॥ [ चतुरनडुहोराम् ] ॥

## ऋत इद्धातोः ॥ ७।१।१०० ॥ उपधायाश्च ॥ १०१ ॥

## उदोष्ठ्यपूर्वस्य ॥ ७।१।१०२ ॥

॥*॥ इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन ॥*॥ इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन । इत्त्वोत्त्वयोरवकाशः—आस्तीर्णम्[2] । निपूर्ताः पिण्डाः । गुणवृद्ध्योरवकाशः—चयनं चायकः । लवनं लावकः । इहोभयं प्राप्नोति आस्तरणम्, आस्तारकः[3] । निपरणं निपारकः।—गुणवृद्धी भवतो विप्रतिषेधेन ॥ अयुक्तोऽयं विप्रतिषेधो योऽयं गुणस्येत्त्वोत्वयोश्च ॥ कथम् ? ॥ नित्यो गुणः ॥*॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये [ शब्दानुशासने ] सप्तमस्य प्रथमे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥ ७।१।१ ॥*॥

## सिचि वृद्धिः परस्मैपदेषु ॥७।२।१॥

॥*॥ सिचि वृद्धावोकारप्रतिषेधः ॥*॥ सिचि वृद्धावोकारस्य प्रतिषेधो

---

प्र.]दीर्घस्य प्राप्तिः, अनजन्तत्वात्, नुडभावाच्च । एवं च विप्रतिषेधोऽपि न वक्तव्यः, ज्ञापकादेव नुड्भावात् । [ तृज्वत्क्रोष्टुः ] ॥

**चतुरनडुहोरामुदात्तः** । गौरादिष्वनडुही अनड्वाहीति पाठोऽपौराणिकः । अनडुह्शब्द एव ङीषर्थः पठित इति मत्वा वार्तिकमारब्धम्—'अनडुहः स्त्रियां वे' ति ।

**ऋत इद्धातोः । नित्यो गुण इति ।** कृताऽकृतप्रसङ्गित्वात् । 'लक्षणान्तरेण प्राप्नुवन्विधिरनित्य' इत्यनाश्रित्य कार्यप्राप्तिमात्रमङ्गीकृत्येदमुक्तम् । लक्षणभेदापेक्षायां तु लक्षणान्तरस्य प्रवृत्तावपि विप्रतिषेधविषयस्य लक्षणस्याऽप्रवृत्त्याऽनित्यत्वमेव । इति कैय्यटकृते महाभाष्यप्रदीपे सप्तमस्य प्रथमे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः॥

**सिचि वृद्धिः परस्मैपदेषु । सिचि वृद्धाविति ।** इहाऽनिर्दिष्टस्थानिकत्वादिक्परिभाषोपस्थानादोकारस्य नास्ति प्राप्तिः । 'वदव्रजे'त्यत्र त्वच इति स्थानिनिर्देशादिक्परिभाषानुपस्थानादोकारस्य वृद्धिप्रसङ्गे वचनम् । तत्र 'सिचि वृद्धा'वित्यनेन प्रकरणं प्रदर्श्यते । अथ वा सिचि या वृद्धिर्वदव्रज(हलन्तस्याऽच) इत्यनेन तस्यामित्यर्थः । न नु च वृद्धौ कर्तव्यायां 'पूर्वत्रासिद्ध'मिति सिज्लोपादीनामसिद्ध-

---

उ.]**चतुरन । अपौराणिक इति।** विनयादित्वाट्ठक् । अपुराणो नवीन इत्यर्थः ॥

**ऋत इद्धातोः** । नन्वकृते 'सार्वधातुकेति' गुणः, कृते 'पुगन्ते'तीति कथं नित्यत्वं, लक्षणभेदादत आह—**लक्षणान्तरेणेति** । गुणाख्यकार्यस्य कृताऽकृतप्रसङ्गित्वमात्रमाश्रित्येदमुक्तमित्यर्थः । **अनित्यत्वमेवेति** । तथा चाऽत्रत्यविप्रतिषेध-

---

१ इदं वार्त्तिकं लुप्तं व्याख्यानमेवाऽस्योपलभ्यते । 'वृद्धी' इत्यन्तं वार्त्तिकमिति तु प्राचीनाः । २ 'आस्तीर्णाः । पा० । ३ 'आस्तरकः' पा० ।

**वक्तव्यः । उद्वोढाम् । उद्वोढम् । उद्वोढेति ॥ स तर्हि प्रतिषेधो वक्तव्यः ? ॥ न वक्तव्यः ।** ॥*॥ ओकाराद्वृद्धिर्विप्रतिषेधेन ॥*॥ [ **ओकाराद्वृद्धिर्भवति विप्रतिषेधेन** ]। **ओत्वं क्रियतां वृद्धिरिति। [ किमत्र कर्त्तव्यं ?॥ ] वृद्धिर्भविष्यति विप्रतिषेधेन** ॥*॥ ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वाऽभावः ॥*॥ **ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्त्वस्याऽभावः । उद्वोढाम् उवोढम् उद्वोढेति ॥ नैष दोषः । उक्तं तत्र वर्णग्रहणस्य प्रयोजनं वृद्धावपि कृतायामोत्त्वं यथा स्यात्** ॥*॥ पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ॥*॥ **अथ वा पुनः प्रसङ्गादत्र वृद्धौ कृतायामोत्वं भविष्यति** ॥*॥ यथा प्रसारणादिषु द्विर्वचनम् ॥*॥ **तद्यथा—जग्ले मम्ले ईजतुः ईजुरिति प्रसारणादिषु पुनःप्रसङ्गविज्ञानाद्द्विर्वचनं भवति ॥**

प्र.] त्वात्पूर्वं वृद्ध्या भाव्यं, ततः सिज्लोपेन, ततो ढत्वधत्वष्टुत्वढलोपेषु कृतेष्वोत्त्वेनेति वृद्धिविधानकाले ओकारस्याऽभावान्नाऽर्थः प्रतिषेधेन । उच्यते। वृद्धिरङ्गापेक्षित्वात्प्रत्ययविशेषापेक्षत्वाच्च बहिरङ्गा, सिज्लोपादयस्तु वर्णनिमित्तत्वादन्तरङ्गा इत्यसिद्धं बहिरङ्गमन्तरङ्ग इति वृद्धेरसिद्धत्वात्पूर्वत्रेतिनिर्दिष्टस्याऽसिद्धविषयस्याऽभावात् सलोपादीनामसिद्धत्वन्नास्ति । 'पूर्वत्रासिद्ध'मित्यनेन सलोपादीनामसिद्धत्वादन्तरङ्गलक्षणस्य विषयस्याऽभावात्तदपेक्षबहिरङ्गस्याऽभावादसिद्धं बहिरङ्गमन्तरङ्ग इत्येषा परिभाषा न प्रवतते । तदेवं परस्परप्रतिबद्धस्य परिभाषाद्वयस्याऽप्रवृत्तौ परत्वात्सलोपादीन् कृत्वाऽन्तरङ्गत्वात् पूर्वमोत्त्वप्रवृत्तिमभ्युपगम्य चोदयति । वदव्रजेत्यत्र चाऽन्तरेणाऽन्तग्रहणं तदन्तविधौ सिद्धेऽन्तग्रहणमौपदेशिकहलन्तप्रतिपत्त्यर्थं मन्यते । प्रत्ययलक्षणेन च सिच्परत्वम् । **ओकारादिति**। न चान्तरङ्ग ओकारः, बह्वपेक्षत्वात् । **उक्तं तत्रेति** । 'ओदस्ये'त्युच्यमाने तादपि परस्तपर इत्यकारस्य तपरत्वाद्भिन्नकालस्य ग्रहणं न स्यादिति तस्यापि ग्रहणार्थं वर्णग्रहणं कृतमिति तत्सामर्थ्यात्कृतायामपि वृद्धावोत्त्वं प्रवर्त्तते। प्रवृत्तत्वाच्च लक्षणस्य पुनर्वृद्धेः प्रवृत्ति-

उ.] खण्डनमेकदेशिन इति भावः । इति **श्रीनागोजीभट्टकृते** भाष्यप्रदीपोद्द्योते **सप्तमस्य प्रथमे द्वितीयमाह्निकम्** ॥ पादश्च प्रथमः समाप्तः ॥ ७।१।२ ॥

सिचि । ओकारे प्रकृतसूत्राऽप्राप्तेराह—**इहेति । उच्यते इति** । केचित्तु तत्र 'ढ्लोपे' इति विषयसप्तमीति वार्तिकाशयमाहुः । **प्रत्ययविशेषेति** । परस्मैपदपरसिज्रूपेत्यर्थः । **अन्तरङ्गत्वादिति** । वृद्धेर्बहिर्भूतपरस्मैपदापेक्षत्वाद्बहिरङ्गत्वं मन्यते । नन्वसिद्धत्वाऽप्रवृत्ताविदानीं हलन्तत्वाऽभावात्कथं वृद्धिप्राप्तिरत आह—**वदव्रजेत्यत्रेति । बह्वपेक्षत्वादिति** । 'ढ्लोप' इत्यस्य बहुव्रीहित्वात्परसप्तमीत्वाच्चे-

१ अयं पाठः क्वाचित्कः । २ इदं व्याख्याभाष्यं लुप्तमिति गौडाः । केचित्तु नेदं वार्त्तिकं, भाष्यमेवैतदित्याहुः । तन्मतेऽस्य व्याख्याऽभावो युक्त एव । ३ 'परत्वाद्वृद्धिर्भविष्यति' पा० । ४ संप्रसारणादिषु' पा० ।

इहापि तर्हि पुनःप्रसङ्गविज्ञानादोत्वं स्यात्—सौढामित्रिरिति ॥ ॥*॥सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम्॥*॥ [ सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम्।] ॥ बहिरङ्गलक्षणा वृद्धिरन्तरङ्गमोत्त्वम्। "असिद्धं बहिरङ्गमन्तरङ्गे"॥

## अतो ल्रान्तस्य ॥७।२।२॥

अन्तग्रहणं किमर्थं नाऽतो ल्रे इत्येवोच्यत ? ॥ केनेदानीं तदन्तस्य भविष्यति ? ॥ तदन्तविधिना ॥ इदं तर्हि प्रयोजनम्—अयमन्तशब्दोऽस्त्येवाऽवयववाची । तद्यथा—वस्त्रान्तो वसनान्तः । अस्ति सामीप्ये वर्त्तते । तद्यथा—उदकान्तं गतः । उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्त्तते तस्येदं ग्रहणं यथा विज्ञायेत । अङ्गान्तौ यौ रेफलकारौ तयोः समीपे योऽकारस्तस्य यथा स्यात् । इह माभूत्–अश्वल्लीत् अवभ्रीत् । [ अतोल्रा ] ॥

प्र.] न भवति । सौढामित्रिरिति । सोढा अमित्रा येनेति वहुव्रीहिः । विभज्यान्वाख्याने सढ् अमित्र इ इति स्थिते परत्वाद्वृद्धिं मन्यते । बहिरङ्गलक्षणत्वादिति । यत्र विप्रतिषेधस्तत्र पुनःप्रसङ्गविज्ञानम् । इह तु वृद्धिनिमित्ते तद्धितेऽनुपजाते एव अन्तरङ्गमोत्वं प्रवर्तते, ततोऽर्थान्तराश्रयतद्धितनिमित्ता वृद्धिः ॥ [सिचिवृद्धिः] ।

अतो । अन्तग्रहणमिति । अवयववचनोऽन्तशब्दः । तदन्तविधिनैव च तदर्थो लब्ध इति मत्वा प्रश्नः। तद्यः सामीप्य इति । अन्तशब्दोपादानादेव सामीप्यार्थस्य ग्रहणम् । अङ्गान्ताविति । रश्च लश्च ल्रं, ततः षष्ठ्याः 'सुपां सुलु'गिति लुक् । तत्र लेणाऽङ्गस्य विशेषणात्तदन्तविधौ ल्रान्तस्याङ्गस्य योऽकारस्तस्य वृद्धिर्भवति । ततोन्तस्येत्यकारो विशेष्यते । सन्निधानाच्च ल्रापेक्षं सामीप्यमकारस्य विज्ञायत इति सामर्थ्यादङ्गान्तरेफलकारसमीपस्याऽकारस्य वृद्धिरित्यर्थः संपद्यते । अश्वल्लीत् अवभ्री-

उ.] त्यभिमानः। बहिर्भूतपरस्मैपदापेक्षत्वेन वृद्धेरोत्वस्यान्तरङ्गत्वमेवेति चिन्त्यमिदं । यदि त्ववर्णग्रहणप्रत्याख्यानभाष्यव्याख्याऽवसरीयाऽस्मदुक्तरीत्या 'ढ्रलोप' इत्यस्य विषयसप्तमीत्वमङ्गीक्रियते तदाऽत्रापि विषयसप्तमीति भाष्याशय इत्याहुः । प्रवृत्तत्वाच्चेति। विकारान्याऽनुपूर्व्या एकत्वेन लक्ष्यैक्यम् । नन्विह युगपत्प्राप्त्यभावात्कथं विप्रतिषेधोऽत आह—विभज्येति । वृद्धिं मन्यते इति । पुनस्तु न वृद्धिः, कृतत्वादिति भावः। अनुपजात एवेति। 'कुत्सिते' इति सूत्रभाष्योक्तरीत्या क्रमेणान्वाख्यानमेवोचितमिति भावः । विभज्यान्वाख्यानेऽपि बहिर्भूतनिमित्तकवृद्धेरसिद्धत्वादन्तरङ्गनिमित्तमोत्त्वमिति बोध्यम् । एवमेव भाष्यव्याख्योचिता । [सिचिवृ] ॥

अतो र्लान्तस्य। तदन्तविधिनैवेति । सूत्रे च 'ल्रान्तस्ये'ति बहुव्रीहिः, अङ्गं चान्यपदार्थः। स चार्थोऽन्तग्रहणं विनापि सिद्ध इत्यर्थः। अप्रसिद्धार्थोपादाने बीजमाह–अन्तशब्देति । अङ्गान्तावित्यर्थलाभः कथमत आह–रश्च लश्चेति । फलितार्थकथनं

[]एतदन्तर्गतः पाठो लुप्तः। १ 'र्लान्तस्य' 'ल्लान्तस्य' पा०। २ 'र्लं' 'ल्लं' पा० । ३ 'विज्ञायते' पा० । ४ 'तदन्तस्य' पा० । ५ 'लश्च रश्च ल्रं' पा० ।

## वदव्रजहलन्तस्याचः ॥७।२।३॥

**हल्ग्रहणं किमर्थम्?॥ समुच्चयो यथा विज्ञायेत–'वदिव्रज्योश्च हलन्तस्य[1] चाऽच' इति। नैतदस्ति प्रयोजनम्, अज्ग्रहणादेवाऽत्र समुच्चयो भविष्यति—'वदिव्रज्योश्चाऽचश्चे'ति॥ अस्त्यन्यदज्ग्रहणे प्रयोजनम्॥[किम्[2]?]॥ वदिव्रजिविशेषणं यथा विज्ञायेत—'वदिव्रज्योरच' इति॥ यद्येतावत्प्रयोजनं स्याद्वदिव्रज्योरत इत्येवं[3] ब्रूयात्। अथ वैतदपि न ब्रूयात्। 'अत' इति वर्तते॥ इदं तर्हि प्रयोजनं—हलन्तस्य यथा स्यादजन्तस्य मा भूत्॥ कस्य पुनरजन्तस्य प्राप्नोति?॥ अकारस्य। अचिकीर्षीत्। अजिहीर्षीत्॥ लोपोऽत्र बाधको भविष्यति॥ आकारस्य तर्हि प्राप्नोति—अयासीत् अवासीत्॥**

प्र.]दिति। अत्राङ्गान्त्ययो रेफलकारयोः समीपे अकारो नेत्यनेन वृद्धिर्न भवति। हलन्तलक्षणा 'नेटी'ति प्रतिषिद्धा॥ [ **अतो ल्रान्तस्य** ]॥

**वदव्रजहलन्तस्याचः। हल्ग्रहणं किमर्थमिति।** अज्ग्रहणादेव हलन्तस्य सिद्धा वृद्धिरिति प्रश्नः। अङ्गेन चाऽचो विशेषणाद्यत्र तत्र स्थितस्याऽचो वृद्धिर्विधीयमाना हलन्तस्य प्रवर्तते। **अजन्तस्य मा भूदिति।** असति हल्ग्रहणेऽचाऽङ्गस्य तदन्तविधिर्विज्ञायेत। ततश्चाऽल्लोपादीन्बाधित्वा वृद्धिः स्यात्।

**लोपोऽत्रेति।** विशेषणविशेष्यभावे कामचारादङ्गेनाऽज्विशेष्यते। तत्राऽपाक्षीदित्यादौ सावकाशा वृद्धिरतो लोपेन पूर्वविप्रतिषेधेन बाध्यते–'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्य' इति। अचा तु अङ्गे विशेष्यमाणे वृद्धिरनवकाशाऽतो लोपं बाधेत। **आकारस्य तर्हीति।** स्थानेऽन्तरतमपरिभाषाया अत्राऽप्रवृत्तिं मन्यते। तत्प्रवृत्तौ हि

उ.]तदिति भावः। अत्रैतत्कैयटपाठस्वरसात्, 'अङ्गान्तौ रेफलकारा'विति भाष्यस्वरसाच्च 'अतो र्लान्तस्ये'ति पाठ इति लभ्यते। **अत्राङ्गान्त्ययोरिति।** लक्ष्यानुरोधाद्व्यक्तिपक्ष एवाश्रीयते, जातेरन्ताऽवयवत्वाऽसंभवाच्चाऽश्वल्लीदित्यत्राऽपि दोषः। सामीप्यं चाऽव्यवहित एवेति भावः। न च 'सिची'त्यकारविशेषणेन येन नाव्यवधानन्यायेन वाऽश्वल्लीदित्यदिव्याप्तावन्तग्रहणं व्यर्थम्। अङ्गस्य प्रत्ययांऽशे उत्थिताकाङ्क्षत्वेन तद्विशेषणताया एव न्याय्यत्वात्। [ **अतो र्लान्तस्य** ]॥

**वदव्रज।** कथमज्ग्रहणाद्धलन्तस्य वृद्धिरत आह—**अङ्गेन चेति।** हल्ग्रहणाऽकरणलाघवानुरोधाद्वैयधिकरण्यमाश्रीयत इत्यर्थः। अज्ग्रहणसामर्थ्यादच इत्यावर्त्तते। तेन 'अतो हलादे'रित्येतद्बाधनार्थाभ्यां वदव्रजिभ्यामपि संबन्धोऽङ्गावयस्याऽच इत्यर्थश्चेति भावः। **वृद्धिरनवकाशेति।** अल्लोपादिषु नाऽप्राप्तेषु वृद्धेरारंभादिति भावः। **स्थानेन्तरेति।** ततश्चौकारादिर्वृद्धिः स्यादित्यर्थः। अप्रवृत्तौ बीजमाह–**तत्प्रवृत्तौ हीति।** न हि प्रधानोपरोधिना गुणेन भाव्यमिति भावः। **नास्ति**

---

१ 'व्रज्योश्च हलन्तस्याऽच' 'व्रज्योर्हलन्तस्य चाऽच' पा०। २ अयं पाठो लुप्त इति मन्ये। ३ 'इत्येवं' पा०।

नास्त्यत्र विशेषः—सत्यां वा वृद्धावसत्यां वा ॥ सन्ध्यक्षरस्य तर्हि प्राप्नोति ॥ नवै सन्ध्यक्षरमन्त्यमस्ति ॥ ननु चेदमस्ति ढलोपे कृते उदवोढामुदवोढमुदवोढेति ? ॥ असिद्धो ढलोपस्तस्याऽसिद्धत्वान्नैतदन्त्यं भवति ॥

अत उत्तरं पठति—॥*॥ हल्ग्रहणमिटि प्रतिषेधार्थम् ॥*॥ हल्ग्रहणं क्रियते ॥ [किं प्रयोजनम्?] ॥ 'इटिप्रतिषेधार्थम्'। 'नेटी'ति प्रतिषेधं वक्ष्यति स हलन्तस्य यथा स्यादजन्तस्य मा भूत्,—अलावीत् अयावीत् । ॥*॥ न वाऽनन्तरप्रतिषेधात् ॥*॥ न वैतत्प्रयोजनमस्ति ॥ किं कारणम् ? ॥ 'अनन्तरस्य प्रतिषेधात्' । अनन्तरं यद्वृद्धिविधानं तत्प्रतिषिध्यते ॥

कुत एतत् ?॥'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति॥*॥तच्चानन्त्यार्थम् ॥*॥ तच्चाऽनन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते ॥ कथं पुनर्ज्ञायतेऽ'नन्तरं वृद्धिविधानमनन्त्यार्थ'मिति ॥*॥ अन्त्यस्य वचनानर्थक्यात् ॥*॥

---

प्र.]प्रधानं वृद्धिविधानं विफलत्वादुपरुध्येत। नास्त्यत्र विशेष इति । विशिष्टविषयव्यवस्थापनं प्रधानस्य गुणेन कर्तव्यमिति प्रवृत्त्यप्रवृत्त्योर्वृद्धेर्विशेषाऽभावेऽपि नास्ति प्रधानोपरोध इति प्रवर्तत एवाऽन्तरतमपरिभाषेति भावः । सन्ध्यक्षरस्येति । औकार ओकारस्य प्राप्नोतीत्यस्ति विशेषः। तस्याऽसिद्धत्वान्नै तदन्त्यमिति । ननु मा भूदन्त्यमनन्त्यस्याप्यविशेषविधानात्प्राप्नोति । एवं तर्हि पराभ्युपगमनिवृत्तिपरमेतत्। परेण सन्ध्यक्षरस्यान्त्यत्वमभ्युपगतं निवार्यते, अनन्त्यत्वे त्वोकारस्य यथा वृद्धिर्न भवति तथाऽऽद्यसूत्रे प्रतिपादितम् । हल्ग्रहणमिति। असतीह हल्ग्रहणे 'नेटी'त्यत्राज्ग्रहणानुवृत्तावपि या का चिदचो वृद्धिः प्रतिषिध्येत । यदि त्वज्ग्रहणानुवृत्तिसामर्थ्यादच इत्येवं विहिता या वृद्धिस्तस्याः प्रतिषेधो विज्ञायेत तदा न स्याद्दोषः । परिहारान्तरसद्भावात्तु नेदमुक्तं । तदाह—न वेति । अन्त्यस्य वचनानर्थक्यादिति।

---

उ.]प्रधानोपरोध इति । सर्वथाऽप्रवृत्तावेवोपरोधः, न तु विशेषाऽभावेऽपीति भावः । नवै सन्ध्यक्षरमिति । एतद्भाष्यप्रामाण्यात्सन्ध्यक्षरान्तेभ्य आचारक्विबनभिधानेत्याहुः । 'इको गुणे'ति सूत्रस्थोऽग्रिम एतत्सूत्रस्थश्च कैयटस्तु चिन्त्य इति बोध्यम् । अविशेषविधानादिति । अङ्गेनाऽचो विशेषणादिति भावः । 'अनन्त्यस्य वृद्धि'रिति सिद्धान्ते दोषः स्यादेवेत्यत आह—अनन्त्यत्वे त्विति । आद्यसूत्रे—'सिचि वृद्धि'रित्यत्र । प्रतिपादितमिति । 'लक्ष्ये लक्षणस्ये'ति न्यायेनेति भावः ।

या काचिदिति। 'इडादौ परस्मैपदपरे सिचि परेऽङ्गस्याऽचो न वृद्धि'रित्यर्थेन—'अयावी' दित्यादौ सिचिवृद्धेरपि स निषेधः स्यादित्यर्थः । अनुवृत्तिसामर्थ्यादिति। इडादौ सिचि अङ्गस्य वृद्धिर्नेत्येव सिद्धेरिति भावः। परिहारान्तरेति । अज्ग्रहणाऽ-

---

१ इदं क्वाचित्कम् । २ इदं लुप्तं सम्प्रति सर्वत्रेति मन्ये । ३ 'इट्प्रति' पा० । ४ 'अपावीत्' पा० । ५ 'अनन्तरस्य प्रति' पा० । ६ कथं पुनरनन्तरं वृद्धिविधानमनन्त्यार्थं शक्यं विज्ञातुम्' पा० । ७ 'अन्त्यवचना' पा० ।

'अन्त्यस्य वृद्धिविधाने प्रयोजनं नास्ती'ति कृत्वाऽनन्दरं वृद्धिविधानमनन्त्यार्थं विज्ञायते ॥ [॥*॥ अतो विभाषार्थन्तु॥*॥] अतो विभाषार्थं तर्हीदं वक्तव्यम् । 'अतो हलादेर्लघो'रिति विभाषा वृद्धिं वक्ष्यति सा हलन्तस्य यथा स्यादजन्तस्य मा भूत्—अचिकीर्षीत् अजिर्हीर्षीत्–[इति] ॥

॥*॥ अतो विभाषार्थमिमि चेत्तत्सिद्धं वृद्धेर्लोपबलीयस्त्वात् ॥*॥ अतो विभाषार्थमिति चेत्तदन्तरेणापि हल्ग्रहणं सिद्धम् ॥ कथम् ? ॥ 'वृद्धेर्लोपबलीयस्त्वात्' । 'वृद्धेर्लोपो बलीयान्भवती'ति ॥ इदमिह संप्रधार्यं–वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ? ॥ परत्वाद्वृद्धिः ॥ नित्यो लोपः—कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि ॥ अनित्यो लोपो, न हि कृतायां वृद्धौ प्राप्नोति, परत्वात्सगिड्भ्यां भवितव्यम् ॥ नात्र सगिटौ प्राप्नुतः ॥ किं कारणम् ? ॥*॥ एकाचस्तौ वलीति वा ॥*॥ एकाचः सगिटावुच्येते । अथ वा

---

प्र.]क्व चिदन्त्यो विधिभाङ्न संभवति । 'अयासी'दित्यादौ तु विशेषाऽभावः । तदेवमिहार्थो हल्ग्रहणस्य नास्तीति मत्वाह–**अतो विभाषार्थमिति** । असति हल्ग्रहणेऽकणीदकाणीदित्यादौ सावकाशा वृद्धिरचिकीर्षीदित्यादौ परत्वाल्लोपं बाधेत । अथ वा अतोऽङ्गस्य विशेषणात्तदन्तस्यैव स्यान्न त्वकाणीदित्यादौ । **कृतायामपीति**। 'आतो लोप इटि चे'त्यनेनेति भावः । अत्र शब्दान्तरप्राप्तिर्लक्षणान्तरप्राप्तिश्च नाश्रिता । कृताऽकृतप्रसङ्गित्वात्तु लोपाख्यस्य कार्यस्याऽनाश्रितोपाधिभेदस्य नित्यत्वमाश्रितम् ।

**परत्वादिति** । 'यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्य' मिति नाश्रितम्। लोपेनात्र वृद्धौ कृतायां न भाव्यमिति तस्याऽनित्यत्वमित्येतावदाश्रित्योच्यते । वृद्धिरेवापवादनिमित्ततामुपयान्ती लोपं विहन्तीति तदपेक्षया भवत्येव लोपस्याऽनित्यत्वम् ।

**एकाचस्तौ वलीति वेति** । एकीयमतमेतत् । तथा च 'वाचाऽद्यतन्या'मिति

---

उ.]सम्बन्धेऽप्यनन्तरस्येति न्यायेन तदर्थसिद्धिरूपलघुभूतपरिहारेत्यर्थः ।

नन्वनन्तरा वृद्धिर्हलन्तस्य यथा स्यादजन्तस्य माभूदित्यर्थं तत्स्यादित्याशङ्कायामुक्तयुक्तिं स्मारयति भाष्ये-**तच्चानन्त्यार्थमिति**।**क्वचिदिति**।'अचिकीर्षी'दित्यादौ, लोपेनापहारादिति भावः। **विशेषाऽभाव इति**। यद्यप्यत्र 'यमरमे'ति सगिड्भ्यां परत्वादपवादत्वाद्वा वृद्धिं बाधित्वा भाव्यं, तयोश्च कृतयोराकारान्तत्वं न संभवति तथापि तदभ्युपगमेऽप्यदोष इत्यर्थः । 'ण्यल्लोपा'विति पूर्वविप्रतिषेधसत्त्वादाह–**अथवेति** । कृतायां वृद्धावतो लोप इत्यस्याऽप्राप्तेराह—**अतो लोप इति** । **उपाधिभेदस्येति** । उपाधिभेदः–स्थानिभेदो लक्षणभेदश्चेत्यर्थः । **न भाव्यमिति** । बाधकसत्त्वादिति भावः । **एतदिति** । 'एकाच' इत्येतदित्यर्थः । 'वली'त्येतत्तु 'रुदादिभ्य' इत्यत्र संबन्धावश्यकत्वेन मध्येऽपि संबध्यत एवेति बोध्यम् । **अद्यतनीति**—लुङः पूर्वा-

---

१ इदं क्वचिन्न । २ 'चेत्सिद्धम्' पा० । ३ 'अनित्यो लोप इति किं नहि' पा० ।

'वली'ति तत्रानुवर्तते ॥ किं पुनः कारणमेकाचस्तौ वलीति वा[1] ?॥ दरिद्राते-र्मा भूतामिति[2] । दरिद्रातेर्न सगिड्भ्यां भवितव्यम् ॥ किं कारणम्[3] ? ॥ उक्तमेतत्[4]—"दरिद्रातेरार्धधातुके लोपः, सिद्धश्च प्रत्ययविधा"विति । यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धोऽसौ सगिड्विधौ ॥ एवमर्थमेव तर्ह्ये-काज्ग्रहणमनुवर्त्यम्–'अत्र सगिटौ मा भूता'मिति । स एष नित्यो लोपो वृद्धिं बाधिष्यते ॥ कं पुनर्भवान्[6] वृद्धेरवकाशं मत्वाह–'नित्यो लोप' इति?, अनवकाशा वृद्धिर्लोपं बाधिष्यते ॥ सावकाशा वृद्धिः ॥ कोऽवकाशः ॥ अनन्त्यः—अकणीत् अकाणीत् ॥ कथं पुनः सत्यन्त्येऽनन्त्यस्य वृद्धिः स्यात्[2] ? ॥ भवेद्योऽताऽङ्गं विशेषयेत्तस्याऽनन्त्यस्य न स्यात् । वयं तु खल्व-ङ्गेनाऽकारं विशेषयिष्यामस्तत्राऽनन्त्यो वृद्धेरवकाशोऽन्त्यस्य लोपो बाधको भविष्यति । एवं वृद्धेर्लोपबलीयस्त्वम्[7] ॥ [एवं वृद्धेर्लोपो बलीयान् भवति] ॥

अथ वाऽऽरभ्यते पूर्वविप्रतिषेधो–"ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम्"–इति ॥ सा तर्ह्येषाऽनन्त्यार्था वृद्धिः–हलन्तस्य यथा स्याद-

---

प्र.]यदाकारलोपो दरिद्रातेर्नास्ति तदा 'अदरिद्रासी' दिति सगिटावुदाहृतावेव । **सिद्धश्चेति** । आर्धधातुके विषयभूत एव लोपविज्ञानात् । **एवमर्थमिति** । 'अचिकीर्षी' दित्यादौ वृद्धौ कृतायां सगिटौ मा भूतामतो लोपस्य नित्यत्वं यथा स्यादित्येवमर्थम् । तत्र नित्यत्वाल्लोपे कृते पारिशेष्याद्धलन्त एव वृद्धेरवस्थानान्नाऽर्थो हल्ग्रहणेन । अताऽङ्गस्य तदन्तविधिं मत्वाह–**कं पुनरिति** । 'नित्यादत्यनवकाशं बलव'दिति लोपं बाधित्वा वृद्धिः स्यादि-त्यजन्तनिवृत्त्यर्थं हल्ग्रहणं कर्तव्यम् । इतरस्त्विष्टसिद्धये विशेषणविशेष्यभावे कामचाराल्लघुग्रहणसामर्थ्याच्चाङ्गेनाऽज्विशेष्यत इति प्रतिपादयितुमाह—**भवेदिति** । 'अदरिद्रासी' दित्यादिसिद्धये सगिड्विधावेकाच इति यदा नानुवर्त्यते तदा उभयो-रनित्ययोः पूर्वविप्रतिषेधेन लोपे कृते हलन्त एव वृद्धिरवतिष्ठते । अथ वा लक्षण-भेदाच्छब्दान्तरप्राप्त्या वा लोपस्याऽनित्यत्वं यो मन्यते तं प्रत्युच्यते—**अथवारभ्यत**

---

उ.]चार्यसंज्ञा । **विषयेति** । अतएव दरिद्रातीति दरिद्र इत्यत्राऽजेव, न त्वादन्तलक्षणो णः । भाष्ये–**सिद्धोऽसौ सगिड्विधाविति** । तयोः प्रत्ययोत्पत्त्यनन्तरभावित्वादितिभावः । **एवमर्थमेव तर्हि इति** । वलीति संबन्धेनापि सगिटोर्वारणादुपलक्षणमिदं । **लघुग्रहण-सामर्थ्याच्चेति** । आकारान्ते विशेषाऽभावेन सगिड्भ्यां बाधाच्चाऽत इति तपरकर-णाच्च न तद्व्यावृत्त्यर्थं लघुग्रहणमिति भावः । ननु नित्येन कथं पूर्वविप्रतिषेधोऽत आह–**अदरिद्रासीदिति** । 'एकाच' इत्यस्याऽननुवृत्तावपि 'वली'त्यस्यानुवृत्तिसत्त्वा-त्सगिटोरप्राप्तौ लोपो नित्योऽत आह—**अथवेति** । भाष्ये—**सा तर्ह्येषेति** । 'अतो

---

१ 'वेति' पा० । २ इतिः क्वाचित्कः । 'माभूत्' पा० । ३ इदं क्वचिन्न । ४ इद्दरिद्रस्य (६–४–११४) इत्यत्र । ५ 'सिद्ध एवासौ' पा० । ६ 'किं पुनः' पा० । ७ 'बलीयस्त्वात्' पा० । ८ इदं क्वचिन्न । ९ इतिः क्वचिन्नास्ति ।

जन्त्यस्य मा भूत्—अपिपठिषीत् ॥ एतदपि नास्ति प्रयोजनम् ॥ कथम्? ॥ 'हलादे'रिति नैषा बहुव्रीहेः षष्ठी-हल् आदिर्यस्य सोऽयं हलादिः, हलादेरिति ॥ का तर्हि ? ॥ कर्मधारयात्पञ्चमी–हल् आदिर्हलादिः, हलादेः परस्येति ॥ यदि कर्मधारयात्पञ्चमी–अचकासीत्,–अत्र प्राप्नोति ॥ सिचा आनन्तर्यं विशेषयिष्यामः—'हलादेः परस्य सिच्यनन्तरस्ये'ति ॥ यदि सिचाऽऽनन्तर्यं विशेष्यते–अक्रणीत् अकाणीत्,–अत्र न प्राप्नोति ॥ वचनाद्भविष्यति ॥ इहापि तर्हि वचनात्प्राप्नोति—अचकासीत् ॥ येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ॥ केन च नाव्यवधानम् ? ॥ वर्णेनैकेन । सङ्घातेन पुनर्व्यवधानं भवति, न च भवति ॥ यदि सिचाऽऽनन्तर्यं विशेष्यते—अस्तु बहुव्रीहेः षष्ठी ॥ कस्मान्न भवति—अपिपठिषीदिति ? ॥ व्यवहितत्वात् ॥

एवं तर्हि—अतिदूरमेवेदं हल्ग्रहणमनुसृतम्—हल्ग्रहणमनन्त्यार्थमज्ग्रहणमनिगर्थम् ॥ [ वदव्रजहलन्तस्याचः ] ॥

प्र.] इति। अपिपठिषीदिति। अल्लोपस्य स्थानिवद्भावादजन्तमेतदङ्गं, तत्र 'य'शब्दाकारस्य वृद्धिः प्राप्नोति हल्ग्रहणान्न भवति । अचकासीदिति । चकाराद्धल आदेः परोऽकारो भवतीति वृद्धिप्रसङ्गः। बहुव्रीहावप्ययं दोषः । ननु चाऽटिकृते हल आदित्वन्नास्ति[3] । नैष दोषः । सिजन्तस्याङ्गस्याडागमः क्रियमाणस्तस्यैव हलादित्वं निवर्तयति, न तु सिचि यदङ्गं तस्य । येननाव्यवधानमिति । ननु वचनादतो लोपो बाध्येत, सिचा ह्यानन्तर्य आश्रितेऽनन्त्यो नैव वृद्धेरवकाशः स्यात् । नैतदस्ति । लघुग्रहणमेवमनर्थकं स्याद्व्यवच्छेद्याऽभावात् । ततश्चानन्त्यस्य वृद्ध्यवकाशत्वादन्त्यस्य नित्यत्वपूर्वविप्रतिषेधाभ्यां लोपाद्व्यवधान एव वृद्ध्या भाव्यमिति निर्दिष्टग्रहणादधिकव्यवधाननिवृत्त्यर्थाद्येन नाव्यवधानमित्याश्रीयते । तदेवमुत्तरार्थं हल्ग्रहणं न कर्तव्यमिति स्थिते इदमुच्यते,–एवं तर्हीति । प्रसक्तानुप्रसक्त्या प्रयोजनकथनप्रसङ्गेन हल्ग्रहणमतिसृतं–दूरमपगतमित्यर्थः । क्वचिदनुसृतमिति पाठः । तत्राय-

उ.] हलादे'रित्येषेत्यर्थः । अत्र पूर्वविप्रतिषेधेनाऽल्लोपे कथमजन्तत्वमत आह—अल्लोपस्येति । हल्ग्रहणान्न भवतीति । हल्ग्रहणसामर्थ्यात्सिजुत्पत्तिवेलायां हलन्तो गृह्यत इति भावः । सिजन्तस्येति । अन्तरङ्गत्वादादौ विकरणस्ततोऽडागमः, ततो वृद्धिरिति भावः । नन्विति । एवञ्च येन नाव्यवधानन्यायस्याऽयमविषयः । उपसञ्जातविरोधन्यायेन च न परिभाषाबाधः, किन्तु लोपस्यैव बाधः स्यादिति भावः । 'ण्यल्लोपा'विति पूर्वविप्रतिषेधाच्चिन्त्यमिदं । दूरमपगतमिति । 'यद्यपी'त्यादिः । 'तथापी'ति शेषः । यद्यपि अतिदूरं गतं निष्फलतया तथापि प्रकृतसूत्रे एवाऽनन्त्यार्थमनन्त्यहलोऽपि ग्रहणार्थमिति भाष्यार्थः । तेन अराङ्क्षीदित्यादिसिद्धिः । यत्तु कैश्चिद्धल्ग्रहणस्य प्रयोजनान्तरमुक्तं तद्दूषयितुमनु-

१ 'तर्हि इयं' पा० । २ इति क्वचिन्न । 'अहल् आदिर्नास्ति' पा० ।

**ह्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥७।२।५॥**

**किमर्थं जागर्तेर्वृद्धिप्रतिषेध उच्यते ? ॥ सिचि वृद्धिर्मा भूदिति ॥ नैतदस्ति प्रयोजनम् । जागर्तेर्गुण उच्यते, वृद्धिविषये प्रतिषेधविषये च स बाधको भविष्यति ॥ गुणे तर्हि कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति ॥**

---

प्र.] मर्थो—दूरं यातं सदनुसृतं न परित्यक्तम् । एतदुक्तं भवति—अत्रैव सूत्रे हल्ग्रहणस्य प्रयोजनमस्ति । तद्दर्शयति-**हल्ग्रहणमनन्त्यार्थमिति** । केचिदाहुः—सति हल्ग्रहणे भवति—अगवीदिति । केचेचिद्दृत इद्धातोरित्यतो धातुग्रहणानुवृत्त्या अगवीदित्यत्र अतो हलादेर्लघोरिति वृद्धिर्न भवतीत्याहुः । सिचा धातावाक्षिप्ते पुनर्धातुग्रहणाद्यस्य नित्यं धातुत्वं स गृह्यते । तस्मादयमर्थो—येननाव्यवधानमित्येकेन हला व्यवधाने सिजचोर्वृद्धिः स्यात् । न तु संयोगेनाऽराङ्क्षीदभाङ्क्षीदित्यादौ । हल्ग्रहणे तु सति वर्णग्रहणे जातिग्रहणात् संयोगान्तस्यापि हल्ग्रहणसामर्थ्याद्भवति । 'अनन्त्यार्थ'मित्यस्यायमर्थो-नन्त्योपि हल् कथं नाम गृह्येत । अन्तग्रहणन्तु विस्पष्टार्थम् । तदन्तरेणापि तदन्तविधिलाभात् । किन्तु हलोऽच इत्युच्यमानेऽजन्तस्याङ्गस्य हलः स्थाने वृद्धिरित्ययमप्यर्थ आशङ्केत । **अज्ग्रहणमनिगर्थमिति** । अन्यथेक्परिभाषोपस्थानादभैत्सीदित्यादावेव स्यान्न त्वपाक्षीदित्यादौ । [ वदव्रज ] ॥

**ह्यन्त** । **किमर्थमिति** । गुणेन बाधिता वृद्धिर्न प्राप्नोतीति मन्यते । **सिचि वृद्धिर्मा भूदिति** । 'अतो ल्रान्तस्ये'त्यनेनेति भावः । इतरस्तु 'सिचि वृद्धि'रिति प्राप्तिरनेनोक्ता सा चाऽयुक्तेति मत्वाह—**नैतदस्तीति** । वृद्धिप्रतिषेधविषयादन्यत्र सामान्यलक्षणेन गुणस्य सिद्धत्वाज्जाग्रोविचिण्णल्ङित्स्विति गुणविधानं वृद्धिप्रतिषेधविषयार्थं संपद्यते । **गुणे तर्हीति** । 'अङ्गवृत्ते' इत्येतत्तु निष्ठित-

---

उ.] वदति—**केचिदिति** । 'अगवी'दित्यत्र हलन्तत्वाऽभावान्नानेन, इगन्तत्वाऽभावाच्च न पूर्वेण वृद्धिरिति तदाशयः । तद्दूषयति—**केचिदिति** । 'अतो हलादे'रित्यस्याऽभावाय तदावश्यकतया तेनैव अस्या अपि व्यावृत्तिरित्याशयः । धातुग्रहणानुवृत्त्या कथमगवीदित्यत्र वृद्ध्यभावोऽत आह—**सिचा धाताविति** । धातुपाठपठितानामेव नित्यं धातुत्वमिति भावः । **आहुरित्यरुचिबीजं** 'नवै सन्ध्यक्षरमन्त्यमस्ती' ति भाष्यप्रामाण्यात्सन्ध्यक्षरान्तेभ्य आचारक्विबभाव इति । **अराङ्क्षीदिति** । न च सिचाऽङ्गस्य विशेषणात्सिद्धिः, अस्मादेव ज्ञापकादेतत्प्रकरणे इत आरभ्य वृद्धिभाज एव सिच्परत्वेन विशेषणात् । अतएव 'लावस्थायामडागम' इति पक्षेऽटो न वृद्धिः, अचकासीदित्यादौ च न वृद्धिरिति भावः । **जातिग्रहणादिति** । तज्जात्याश्रयाऽनेकग्रहणादित्यर्थः । तत्रैकस्य गौणमन्त्यत्वं बोध्यम् । स्पष्टार्थत्वमेवोपपादयति—**किन्तु हल इति** । [ वदव्रजहलन्तस्याचः ] ॥

**ह्यन्तक्षण** । **गुणेनेति** । 'जाग्रो वी'त्यनेनेत्यर्थः । गुणस्य 'सिचि वृद्धि'रित्येतद्बाधकत्वादाह—**अतो ल्रेति** । इयं हि गुणोत्तरकालं प्राप्तेति भावः । **सामान्य-**

'नेटी'ति तस्याः प्रतिषेधो भविष्यति ॥

**इयं तर्हि—प्रतिषेधोत्तरकाला वृद्धिरारभ्यते'ऽतो ल्रान्तस्ये'ति ॥**

**अपर आह—कक्ष्यया कक्ष्या निमातव्या। सिचि वृद्धिश्च प्राप्नोति गुणश्च। गुणो भवति। गुणे कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति। 'नेटी'ति च तस्याः प्रतिषेधो भवति। प्रतिषेधोत्तरकालमतो हलादेर्लघोरिति विभाषा**

प्र.]त्वस्य दुर्ज्ञानत्वादनाश्रितम्। यदि तर्हि गुणे रपरत्वे च कृते लक्षणान्तरेण वृद्धिर्भवति तदा 'जागरक'इत्यादावजन्तलक्षणां वृद्धिं बाधित्वा गुणे प्रवृत्ते रपरत्वे चाऽत उपधाया इति वृद्धिः प्राप्नोति। नैष दोषः। चिण्णलोर्गुणप्रतिषेधाल्लिङ्गादुपधालक्षणा वृद्धिर्न भवतीत्यवसीयते। अन्यथा चिण्णलोर्गुणरपरत्वयोः कृतयोरुपधालक्षणया वृद्ध्या सिध्यति रूपमिति प्रतिषेधं न विदध्यात्। यदि च गुणे कृते वृद्धिमात्राऽप्रवृत्तेर्लिङ्गं चिण्णलोः प्रतिषेध आश्रीयते तदा 'जागृ'ग्रहणं शक्यमकर्तुम्।

**इयं तर्हीति।** आर्थोऽयमुत्सर्गापवादयोः क्रमः। 'नेटी'ति प्रतिषेधे प्राप्ते 'ऽतो ल्रान्तस्ये'ति वृद्धेरारम्भात्प्रतिषेधोत्तरकालेत्युच्यते। पाठक्रमेण पूर्वकालाऽपि।

**अपर आहेति।** पूर्वोक्त एवाऽर्थो वाचा युक्त्यन्तरेणोच्यते। **कक्ष्ययेति।** कक्ष्यां विशिष्टदेशस्थं तुलासूत्रं वणिजो व्यवहरन्ति। अत्र तु कक्ष्येव कक्ष्या। यथा कक्ष्या द्रव्याणां गुरुत्वं परिच्छिनत्ति तथा शास्त्रं कार्याणां सामान्यविशेषावस्थाभावेन बलाऽबलं व्यवस्थापयति। हर्म्यावस्थावचनो वा कक्ष्याशब्द उपचारादिहावस्थावचनः। तत्र किं कार्यं सामान्यावस्थं किं विशेषावस्थमित्येवं कक्ष्यया कक्ष्या विनिमातव्येत्यर्थः। बलं वा कक्ष्या, यथा 'तुल्यकक्ष्या'विति। तत्र 'जागृ इस् ईत्' इति स्थिते वार्णादाङ्गो विधिर्बलीयानिति यणादेशं बाधित्वा 'सार्वधातुकार्धधातुकयो' रिति गुणः प्राप्तस्तमपवादत्वाद्बाधित्वा 'सिचि वृद्धि'रिति वृद्धिः प्राप्ता, तामपवादत्वा-

उ.]लक्षणेन—'सार्वधातुकार्धधातुकयो'रित्यनेन। **दुर्ज्ञानत्वादिति।** अगतिकगतिरियमिति भावः। **अत उपधाया इति।** गुणस्तु 'जागरित' इत्यादौ सावकाश इति भावः। **वृद्धिमात्रेति।** गुणोत्तरभाविवृद्धिमात्रेत्यर्थः। इदं चिन्त्यम्—अत उपधाया वृद्धिबाधनेन तस्य चारितार्थ्याज्जागरक इत्यस्य सिद्धेश्चाऽनेकशास्त्रबाधे मानाऽभाव इति भाष्याशयात्। जागृग्रहणमेव च ज्ञापकं 'ज्ञापकानां सजातीयापेक्षत्वमुचित'मिति सूचयति। ननु प्रतिषेधात्पूर्वं पाठादुत्तरकालेत्ययुक्तमत आह—**आर्थोऽयमिति।** 'पाठक्रमादार्थः क्रमो बलीया'निति भावः। पौनरुक्त्यं परिहरति—**पूर्वोक्तेति।** पूर्वं प्रतिज्ञामात्रम्, इदानीं तु हेतुप्रदर्शनमिति भेदः। **तथा शास्त्रमिति।** बलवता बाधकेन दुर्बलं बाध्यत्वात्परिच्छेत्तव्यमिति भाष्यार्थ इति भावः। **हर्म्यावस्थेति।** 'द्वितीयां तृतीयां च कक्ष्यां प्रविष्ट' इति व्यवहारादिति भावः।

विशेषवाचिनः सामान्यपरत्वं लक्षणयेत्याह—**उपचारादिति। बलञ्चेति।**

१ चकारः क्वचिन्न।

वृद्धिः प्राप्नोति । न च किं चित् । 'अतो ल्रान्तस्ये'ति च वृद्धिः प्राप्नोति । नच किं चित् ॥ [ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । ] ॥

## नेड्वशि कृति ॥७।२।८॥

किमर्थं पुरस्तात्प्रतिषेध उच्यते न विध्युत्तरकालः प्रतिषेधः क्रियते[3] । तद्यथा—अन्यत्रापि विध्युत्तरकालाः प्रतिषेधा भवन्ति ॥ काऽन्यत्र ? ॥ 'कर्तरि कर्मव्यतिहारे' 'न गतिहिंसार्थेभ्य' इति । 'देवताद्वन्द्वे च' 'नेन्द्रस्य परस्य' [ इति[4] ] ॥ तत्रायमप्यर्थो—ह्रिरिड्ग्रहणं न कर्तव्यं भवति, प्रकृतमनुवर्तते ॥ नैवं शक्यम्, इडर्थं सार्वधातुकग्रहणं लिङः सलोपे संनिहितं तद्विच्छिद्येत ॥ यदि पुनर्न वृद्ध्यश्चतुर्भ्य इत्यत्रैवोच्येत ? ॥ किं कृतं भवति ? ॥ विध्युत्तरकालश्चैव प्रतिषेधः कृतो भवति । ह्रिश्चेड्ग्रहणं न कर्तव्यम्भवति[5] । इडर्थं च स सार्वधातुकग्रहणं लिङः सलोपे सन्निहितं भवति । तत्राऽयमप्यर्थः—ह्रिः[6]प्रतिषेधो न कर्तव्यो भवति ॥ नैवं शक्यम्, इह हि तुष्टोथ दुद्रोथेति,—'ऋतो भारद्वाजस्ये'त्येतस्मान्नियमादिड्प्रसज्येत ॥ 'कृसृभृवृस्तु-

प्र.]द्वाधित्वा 'जाग्र' इति गुणःप्राप्नोति। भाष्यकारस्तु दुर्बलत्वादुत्सर्गं परिहृत्य वृद्धेरारभ्य गणयति । **न च किं चिदिति** । तस्याः पाक्षिक्या वृद्धेरपवादभूतं न किंचिद्गुणविधानमस्ति यतो जागृग्रहणमकर्तव्यं स्यात् । **'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधश्च यण्पूर्वाः प्राप्तयो नवइति** सङ्ग्रहश्लोकः ॥

**नेड्वशि** । प्राप्तिपूर्वकत्वात्प्रतिषेधस्यार्थात्पूर्वं विधिप्रकरणं पठितव्यं पश्चात्प्रतिषेधप्रकरणं,क्रमव्यतिक्रमे प्रयोजनाऽभावादितिमत्वा पृच्छति–**किमर्थमिति** । **तत्रायमप्यर्थ इति** । न्याय्यक्रमाश्रयणादुपचयोऽप्यस्तीत्यर्थः । **इडर्थमिति** । 'रुदादिभ्यः सार्वधातुके' इत्यत्र यत्सार्वधातुकग्रहणमिड्विधावुपात्तं तदानन्तर्याल्लिङः सलोपोनन्त्यस्येत्यत्र शक्यतेऽनुवर्तयितुम् । यदि त्विड्विधेः परस्तादीड्जनोर्ध्वे चेत्यस्यानन्तरं 'नेड्वशि कृती'त्यादिप्रतिषेधप्रकरणं क्रियेत, तदा तेन विच्छिन्नत्वात्सार्वधातुकग्रहणं सलोपविधौ नानुवर्तेन । **तुष्टोथेति** । यथा पपिथ ययिथेत्यादावार्धधातुकस्येतीट् प्राप्तः 'एकाच' इति प्रतिषिद्धः, क्रादिनियमात्पुनः प्राप्तोऽचस्तास्वत्थलीति प्रतिषिद्धस्तत्र 'ऋत एव भारद्वाजस्य प्रतिषेधो नान्येभ्य' इति निय-

उ.]कस्य चिद्बलेनाऽन्यबलं **निमातव्यं**–'दुर्बलमिद'मिति ज्ञातव्यमिति भाष्यार्थ इति भावः । **दुर्बलत्वादिति** । अत्यन्तसामान्यत्वेनेत्यर्थः । **प्राप्तय इति** । 'प्राप्यन्ते' इति व्युत्पत्त्या कार्याणीत्यर्थः । **[ह्यन्तक्षणश्वस ]** ॥

**नेड्वशि** । न्यायविरोधमुक्त्वा गौरवमप्यत्र पाठे इत्याह भाष्ये–**तत्रायमप्यर्थ इति** । प्राङ्निषेधपाठे 'आर्धधातुकस्येडित्यत्र निषेधाऽसंबन्धाय पुनरिड्ग्रहणं कार्य-

१ चः क्वचिन्न । २ चकारः क्वाचित्कः । ३ 'क्रियेत' पा० । ४ इदं क्वाचित्कम् । ५ 'भवती'ति क्वाचित्कम् । ६ 'ह्रि'रिति क्वाचित्कम् ।

द्रुस्रुश्रुवो लिटी'त्येष योगः प्रतिषेधार्थो भविष्यति॥ यद्येष योगः प्रतिषेधार्थो य एतस्माद्योगादिड्ढरिप्राप्यते नियमात्स न सिध्यति,—पेचिव पेचिम। शेकिव शेकिम॥ एवं तर्हि—[ ॥*॥ कृसृभृग्रहणं नियमार्थं, स्तुद्रुस्रुश्रुवां प्रतिषेधार्थं, वृङ्वृञो ज्ञापकार्थम् ॥*॥ ] ॥ 'कृसृभृ' इत्येषां ग्रहणं नियमार्थं भविष्यति, स्तुद्रुस्रुश्रुवां प्रतिषेधार्थं, वृङ्वृञोर्ज्ञापकार्थम् ॥

एवमपि सामान्यविहितस्यैवेटः प्रतिषेधो विज्ञायेत, विशेषविहित-

प्र.]मात् पक्षे इड्भवति। एवं स्तुद्रुस्रुश्रुभ्योपि प्राप्नोतीत्यर्थः। तथाहि क्रादिनियमस्य बाधकमचस्तास्वदिति। प्रतिषेधमृतो भारद्वाजस्येति नियमो बाधते, स कथं क्रादिप्रतिषेधं न बाधेत। ननु च 'मध्येऽपवादा' इति न्यायेन भारद्वाजनियमोऽचस्तास्वदितिप्रतिषेधं बाधिष्यते, न तु क्रादिप्रतिषेधम्। नैतदस्ति। पाक्षिक एव परिहारो भेदेन लक्षणापेक्षायाम्। कार्यमात्रे तु बाध्यत्वेनापेक्षिते नैष परिहारः॥ किं च 'न वृद्भ्यश्चतुर्भ्य' इत्यस्मादूर्ध्वमिदं प्रकरणं पठितव्यमिति प्रक्रान्तं, न तु 'ऋतो भारद्वाजस्ये'त्यस्मात्परमिति। ततो भारद्वाजनियमात्पूर्वमिदं, न तु परमिति कुतो 'मध्येऽपवादा' इति न्यायावतारः,। व्याप्तिन्यायाश्रये च सर्वप्रतिषेधबाधेन भाव्यम्। यद्येष इति। थलि भारद्वाजनियमादिटः प्राप्तस्य प्रतिषेधे विधेये संभवति सति नियमार्थत्वस्यानुपपत्तिः। एवं तर्हीति। योगैकदेशः पूर्वं योगशब्देनोक्तश्चोदकेन तु समस्त एव योगः प्रतिषेधार्थोऽनेनोक्त इति मत्वा चोदितं–यद्येष इति। तत्र क्रादीनामृकारान्तत्वान्नास्ति भारद्वाजनियमादिड्प्राप्तिरितितेषां नियमार्थं ग्रहणम्। स्तुद्रुश्रुस्रुवान्तु भारद्वाजनियमात् क्रादिनियमाच्च प्राप्तस्येटः प्रतिषेधार्थं।

उ.]मित्यर्थः।नियमात्पक्षे इति।'नान्येभ्य' इत्यत्राऽपि 'भारद्वाजस्ये'त्यस्य संबन्धादिति भावः। ननु भारद्वाजनियमोऽनन्तरत्वादुपदेशेऽत्वत अचस्तास्वदिति निषेधस्यैव बाधक इति कथं क्रादिप्रतिषेधबाधस्तेनेत्यत आह–तथाहीति। न बाधेतेति। बाध्यबाधस्य सुतरां बाध्यत्वादिति भावः। ननु चेति। भारद्वाजनियमात्परं क्रादिसूत्रपाठमाश्रित्येदम्। नतु क्रादिप्रतिषेधमिति। भारद्वाजनियमेन' अचस्तास्व'दिति–प्रतिषेधनिवृत्तावप्राप्ताऽचस्तास्वदित्यनेन न क्रादिनियमस्य बाधो, नाऽपि भारद्वाजनियमेन, उत्तरत्वादिति भावः। मध्येऽपवादन्यायाऽभावेऽपि अनन्तरस्येति न्यायो दुर्वारोऽत आह–व्याप्तीति। भाष्ये–प्रतिषेधार्थो भविष्यतीति। स्तुद्र्वादिग्रहणसामर्थ्याद्भारद्वाजनियमप्रापितस्य निषेध इत्यर्थः। ननु 'कृ सृ' इत्यस्य प्रतिषेधनियमोभयार्थत्वान्न दोष इति चेत्तदसंभवमाह–थलि भारद्वाजेति। भाष्ये–नियमात्स इति। नियमार्थाद्योगाद्य इड्ढरिप्राप्यते स न सिध्यतीत्यन्वयः।

ननु कृत्स्नसूत्रस्य प्रतिषेधार्थत्वमुक्त्वा इदानीमेकदेशस्य तदर्थत्वकथनं पूर्वाऽपरविरुद्धमत आह–योगैकदेश इति। भारद्वाजनियमात्। क्रादीति। थलि

१ 'श्रुस्रुवो'। २ इदं वार्त्तिकं लुप्तं स्यात्। ३ 'इत्येतेषां'। ४ 'विज्ञायते' पा०।

श्चायं–'थली'[1]ति ॥ पुरस्तात्पुनः[2] प्रतिषेधे सत्यनारभ्यापवादोऽयं भवति। तेन यावानिण्नाम[3] तस्य सर्वस्यैव[4] प्रतिषेधः सिद्धो भवति ॥ यदि खल्वप्येषोऽभिप्रायस्तन्न क्रियेत[5] इति, पुरस्तादपि प्रतिषेधे सति तन्न करिष्यते ॥

कथम् ? ॥ इदमस्ति 'नेड्वशि कृती'ति । ततो वक्ष्यामि—'आर्धधातुकस्य वलादे'रिति । 'इ'डित्यनुवर्तते । 'ने'ति निवृत्तम् ॥

अथ कृद्ग्रहणं किमर्थम् ? ॥ इह मा भूत्—बिभिदिव बिभिदिमेति ॥ नैतदस्ति प्रयोजनं—'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटी'त्येतस्मान्नियमादत्रेड्भविष्यति ॥ नाऽत्र तेन परिप्रापणं प्राप्नोति ॥ किं कारणं ? ॥ प्रकृतिलक्षणस्य प्रतिषेधस्य स प्रत्यारम्भः प्रत्ययलक्षणश्चाऽयं प्रतिषेधः ॥ उभयोः[6] स प्रत्या-

प्र.]वृङ्वृञोरिति । एकयोगस्था अपि नावश्यमेकधर्माणः । तत्र प्रत्ययाश्रयोऽपीट् प्रतिषेधो नियम्यत इति वृङ्वृञोर्ग्रहणेन ज्ञाप्यते । एवमपीति । स्तुद्रुश्रुस्रुभ्यः प्रतिषेधो येननाप्राप्तिन्यायेन क्रादिनियमप्राप्तमेवेटं निवर्तयेन्न तु भारद्वाजनियमप्राप्तमित्यर्थः । स हि थलयेव प्राप्तः । ततश्चाऽसौ स्यादेव ।

पुरस्तादिति । इण्मात्रमनाश्रितविषयविशेषमनारभ्याधीतेन प्रतिषेधेन बाध्यत इत्यर्थः । यदि तु भारद्वाजनियमात्परः प्रतिषेधः क्रियते, मध्येपवादा इति चाश्रीयेत, तदा विप्रतिषेधेन सिद्ध्यदेव प्रतिषेधः । अथ कृद्ग्रहणमिति । अकृति क्रादिनियमादिड्भविष्यतीति मत्वा प्रश्नः । नात्रेति । भिन्नजातीयत्वादिति भावः । क्रादिनियमो हि प्रकृत्याश्रयप्रतिषेधविषयमेवेटं प्रापयेत्–बिभेदिथेति । 'नेड्वशि-

उ.] अस्मात्, अन्यत्र क्रादिनियमादिति विवेकः । नन्वेकसूत्रोपात्तानामेकरूपतैव युक्तेत्यत आह—एकयोगस्था अपीति । यथा तद्धितार्थेत्यादावेकाऽपि सप्तमी विषयभेदाद्भिद्यत इति भावः । ज्ञाप्यत इति । एतच्चोत्तरत्र स्फुटीभविष्यति ।

नन्वविशेषात्सर्वस्यैवेटः प्रतिषेधेन भाव्यमत आह–स्तुद्रिति । भाष्ये 'सामान्यविहितस्ये'त्यस्य सामान्यनियमप्राप्तस्येत्यर्थः । अनारभ्याधीतेनेति—हेतुगर्भं विशेषणं । सिध्येदेवेति । 'तुष्टोथे'त्यादौ भारद्वाजनियमप्रापितेटः कृसृभ्रिति निषेधः सिध्यतीत्यर्थः । अस्य तु न भारद्वाजनियमो निवर्तकः, मध्येऽपवादन्यायादिति भावः । किन्तु न्यासभेदस्याऽन्याय्यत्वाद्भगवतैवं नाश्रितम् । फलान्तराण्यपि 'स्वरतिसूती'त्यादौ पुरस्तात्प्रतिषेधारम्भस्य भविष्यन्तीति दिक् ।

भाष्ये–तन्न क्रियेतेति । इड्ग्रहणमित्यर्थः । अत्रत्यभाष्यविरोधाद्दीधीवेवीटामितिसूत्रस्थभाष्यमेकदेशयुक्तिः । अत्रेड्ग्रहणं कृत्वा गुरुतरयत्नमाश्रित्य तत्रत्येड्ग्रहणप्रत्याख्यानस्याऽनौचित्यादित्याहुः । भिन्नजातीयत्वादिति । सजातीयस्य हि नियमेन भाव्यमिति भावः । प्रकृत्याश्रयेति । 'एकाच उपदेशे' इतीत्यर्थः । अयं हि

१ 'वलीति' । २ 'पुन'रिति क्वचिन्न । ३ 'इण्मयं तस्य' । ४ एवः क्वाचित्कः । ५ 'क्रियेत' । ६ ॥*॥ उभयोः स प्रत्यारम्भो वृङ्वृञ्ग्रहणात् ॥*॥ इति वार्त्तिकं स्यात् ।

रम्भः ॥ कथं ज्ञायते ? ॥ वृङ्वृञोर्ग्रहणात् ॥ कथं कृत्वा ज्ञापकम् ? ॥ इमौ वृङ्वृञावुदात्तौ, तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यति त्वाचार्य-'उभयोः स प्रत्यारम्भ' इति, ततो वृङ्वृञोर्ग्रहणं करोति। [किं च]- न खल्वपि कश्चिदुभयवान्प्रतिषेधः प्रकृतिलक्षणः प्रत्ययलक्षणश्च ॥ ततः किम् ? ॥ तुल्यजातीयेऽसति यथैव प्रकृतिलक्षणस्य नियामको भवत्येवं प्रत्ययलक्षणस्यापि नियामको भविष्यति ॥ इदं तर्हि प्रयोजनम्—इह मा भूत्—रुदिवः रुदिमः ॥ एतदपि नास्ति प्रयोजनम्,—उपरिष्टाद्योगविभागः

---

प्र.]कृती'ति तु प्रत्ययाश्रयः प्रतिषेधः, तद्विषये क्रादिनियमाऽभावादिण्नभवेत् । बिभिदिवेति । कृद्ग्रहणमकृति प्रतिषेधनिवृत्त्यर्थम् । **वृङ्वृञोर्ग्रहणादिति** । सामान्यग्रहणं विशेषनिष्ठं संपद्यत इति प्रदर्शनार्थं वृङ्वृञोरिति भेदेनोपादानम् । वृग्रहणस्य प्रयोजनं-वव्रवहे इत्यादाविण्मा भूदिति । यदि च क्रादिनियमः प्रकृत्याश्रयमेव प्रतिषेधं बाधेत न प्रत्ययाश्रयं तदा 'नेड्वशि' 'श्र्युकः किती'ति योगद्वयेन यथायोगं सिद्धत्वात्प्रतिषेधस्य नाऽर्थो वृग्रहणेन, तत्क्रियमाणं प्रत्ययाश्रयस्यापि प्रतिषेधस्य निवृत्तिं ज्ञापयति । ननु थलर्थं वृग्रहणं स्यात्, तस्य ह्यकित्त्वादवशादित्वाच्चेट् प्रतिषेधाऽप्राप्तिः। नैतदस्ति । 'ववर्थेति निगमे' इति निपातनं क्रियमाणं भाषायां 'ववरिथे'ति इटमभ्यनुजानाति । स्यादेतत्,-तुल्यजातीय एव प्रतिषेधो नियमेन बाध्यताम् । एकैकाश्रयस्तु कथं बाध्येतेत्याशङ्क्याह-**न खल्वपीति** । कृसृभृभ्यो लिटि प्रकृत्याश्रय एव 'एकाच उपदेशेऽनुदात्ता'दितीट्प्रतिषेधः प्राप्नोति। केवलायाः प्रकृतेः शब्देनोपादानात् । अथोच्येत-'चकृषे' इत्यादौ श्र्युकः कितीतीट् प्रतिषेधः प्राप्नोति, स चोभयवान्-प्रकृतिप्रत्ययविशेषाश्रयणादिति तन्न; अत्राप्यन्तरङ्गत्वात्प्रकृत्याश्रय एव प्रतिषेधः । तस्यैव नियमे विज्ञायमाने वृग्रहणमनर्थकं स्यात्तस्मात्प्रत्ययाश्रयोपि प्रतिषेधो नियम्यत इत्यत्र वृग्रहणं लिङ्गम् । प्रकृतकृसृभृप्रेक्षया च 'न खल्वपी' त्युच्यते न तूभयवान्नास्ति प्रतिषेधः । **रुदिव रुदिम इति** । असति कृद्ग्रहणे 'रुदादिभ्यः सार्वधातुके' इत्यस्येटोऽत्र प्रतिषेधः स्यात्तस्य त्ववशादिरवकाशो-रोदितीत्यादौ ।

---

उ.] 'वशी'त्युपादानात्प्रत्ययाश्रय इति भावः । ननु वृग्रहणादिति वक्तुमुचितमत आह—**सामान्यग्रहणमिति** । **प्रदर्शनार्थमिति** । सर्वत्राऽयं न्यायो द्रष्टव्य इति निदर्शनार्थमित्यर्थः । **यथायोगमिति** । 'वव्रषे' इत्यादौ 'श्र्युक' इति, 'वव्रवहे' इत्यादौ 'नेड्वशी'त्यस्यापि प्राप्तिसत्त्वात्तदुक्तिः । **ननु थलर्थमिति** । तत्र विध्यर्थमित्यर्थः । **निपातनमिति** । अन्यथाऽनेन निषेधेन सिद्धेस्तद्व्यर्थं स्यात् । तथा च तत्सामर्थ्यादत्र वृग्रहणं नियमार्थं सज्ज्ञापनार्थमेवेति भावः ।

**अत्राप्यन्तरङ्गत्वादिति** । प्रकृतिमात्राश्रयत्वादिति भावः । नन्वेवं 'श्र्युकः किती'त्यस्योभयवतः सत्त्वेन '**न खल्वपी**'ति वचोऽयुक्तमत आह—**प्रकृतेति** । कृसृभृविषये न कश्चिदुभयवानस्तीति भाष्यार्थः। **यदिकिञ्चित्तत्रेत्यादिभाष्यस्याशय-**

करिष्यते,–"आर्धधातुकस्य"। यदेतदनुक्रान्तं एतदार्धधातुकस्यैवं द्रष्टव्यम् । तत'इड्वलादे'रिति । तत्रे त्वेतावद्द्रष्टव्यं यदि किंचित्तत्रान्यदप्यार्धधातुकग्रहणस्य प्रयोजनमस्ति। अथ न किं चित्–इह वा कृद्ग्रहणं क्रियेतं, तत्र वार्धधातुकग्रहणं, को न्वत्र विशेषः ! ॥

॥*॥ नेड्वररमनादौ कृति ॥*॥ वंररमनादौ कृतीड्प्रतिषेधं प्रयोजयति । (वर–) ईशिता ईशितुम् ईश्वरः । वर ॥ र–दीपिता दीपितुम् दीप्रम् । र ॥ म–भसिता भसितुम् भस्म । म ॥ न–यतिता । यतितुम् यत्नः ॥ अथान्ये ये वशादयस्तत्र कथम् ? ॥ ॥*॥ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥*॥

## तितुत्रतथसिसुसरकसेषु च ॥७।२।९॥

॥*॥ तितुत्रेष्वग्रहादीनाम् ॥*॥ तितुत्रेष्वग्रहादीनामिति वक्तव्यम् । इह मा भूत् । निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिरिति ॥

## एकाच उपदेशेऽनुदात्तात् ॥७।२।१०॥

एकाज्ग्रहणं किमर्थम् ? ॥*॥ एकाज्ग्रहणं जागर्त्यर्थम् ॥*॥ एकाज्ग्रहणं क्रियते ॥ [किं प्रयोजनम् ? ॥ 'जागर्त्यर्थम् ।] जागर्तेरिड्प्रतिषेधो मा भूदिति । जागरिता जागरितुम् ॥ नैतदस्ति प्रयोजनम्—'उपदेशेऽनुदात्ता'दित्युच्यते जागर्तिश्चोपदेशे उदात्तः ॥ न ब्रूम 'इहार्थं जागर्त्यर्थमेकाज्ग्रहणं कर्तव्य'मिति ॥ किं तर्हि ? ॥*॥ उत्तरार्थम् । ॥*॥ श्र्युकः कितीतीड्प्रतिषेधं वक्ष्यति स

प्र.]यदेतदिति । प्रतिषेधप्रकरणमित्यर्थः । ततः सार्वधातुके इट्प्रतिषेधाऽभावः । यद्यन्यार्थमार्धधातुकग्रहणं कर्तव्यं तदा योगविभागेनेष्टं साध्यते । यदा त्वस्याऽन्यप्रयोजनाऽभावः, तदा लाघवार्थं कृद्ग्रहणमेव कर्तव्यम् । प्रत्याख्यास्यते च तत्रार्धधातुकग्रहणम् । भस्मेति। नन्वत्रैव वक्ष्यति–उणादय इति । ततश्चाऽव्युपत्त्याश्रयणादेवेण्न भविष्यति । 'अन्येभ्योपि दृश्यते' इत्यनेनाऽत्र मनिन्प्रत्यय इत्यदोषः ॥

तितुत्र । निकुचितिरिति । 'कुञ्चेः क्तिन्नावादिभ्य' इति क्तिन् । 'कुच शब्दे तारे' इत्यस्माद्वा स्त्रियां क्तिन् । [ त्रितुत्रतथ ] ॥

एकाच उप । एकाज्ग्रहणमिति । एकाचामेवानुदात्तत्वप्रतिज्ञानादनुदात्त-

उ.]माह–यद्यन्यार्थमिति। 'तदा योगविभागेनेष्टं साध्यते' इति शेषो भाष्ये पूरणीय इत्याशयः। भाष्ये–अथ न किञ्चिदिति । 'वेदा यदि प्रमाण'मितिवदसन्देहे सन्देहोक्तिः। 'को न्वत्र विशेष' इत्यनेन न साम्यं विवक्षितं, किन्तु कृद्ग्रहणं कर्तव्यमेव, तदाह–लाघवार्थमिति । भाष्ये–अथान्ये इति । मल्लादिषु ॥ [ नेड्वशि कृति ] ॥

तितुत्रतथ । ननु कुञ्चेः क्तिनं बाधित्वा 'गुरोश्च हल'इत्यकारप्रत्ययः स्यादत आह—कुञ्चेरिति । [ तितुत्रतथसिसुसरकसेषुच ] ॥

१ 'तदार्ध' पा० । एवः क्वाचित्कः । २ 'तत्रैतावत्' पा० । ३ 'क्रियते' । ४ अयं पाठो लुप्तः । ५ 'वरमनादौ' पा० । ६ 'दीप्र' पा० । ७ 'भूदिति' ।

जागर्तेर्मा भूदिति,–जागरितः जागरितवानिति ॥ एतदपि नास्ति प्रयोजनं–जागर्तेर्गुण उच्यते[1] वृद्धिविषये प्रतिषेधविषये च स बाधको भविष्यति । तत्र गुणे कृते रपरत्वे[2] च कृतेऽनुगन्तत्वादिड्प्रतिषेधो न भविष्यति ॥ ननु चोपदेशाधिकारात्प्राप्नोति ॥ उपदेशग्रहणं निवर्तयिष्यते ॥ यदि निवर्त्स्यते[3]—स्तीर्त्वा पूर्त्वा–इत्वोत्वयोः कृतयो रपरत्वे चाऽनुगन्तत्वादिड्प्रतिषेधो न प्राप्नोति ॥ नैष दोषः–आनुपूर्व्या सिद्धमेतत्[4] ॥ नात्राऽकृत इड्प्रतिषेधे इत्वोत्वे

---

प्र.]ग्रहणेनैवातिप्रसङ्गवारणात्प्रश्नः । इतर उत्तरार्थत्वमभिप्रेत्याह—**एकाज्ग्रहणं जागर्त्यर्थमिति** । **स जागर्तेर्मा भूदिति** । जागर्तिरेवोगन्तोऽनेकाच् संभवतीति तन्निवृत्त्यर्थमेकाज्ग्रहणम् । ऊर्णोतिस्तु नुवद्भावात्प्रतिषेधो भवत्येव ।

चोदकः प्रतिषेधाऽप्राप्तिकारणमन्यद्दर्शयति—**एतदपीति** । **स बाधक इति** । इड्प्रतिषेधस्येत्यर्थः । **उपदेशाधिकारादिति** । अन्यार्थमुपदेशग्रहणमनुवर्त्त्यम्, उपदेशे च जागर्तिरुगन्तो भवतीति प्रतिषेधप्रसङ्गः । इतर उपदेशाऽधिकारस्य प्रयोजनान्तरमपश्यन्नाह–**उपदेशग्रहणं निवर्तिष्यत इति** । **स्तीर्त्वा पूर्त्वेति** । इत्वादिषु कृतेष्वनुगन्तत्वात्, लूत्वेत्यादौ च सांप्रतिकोगन्तसंभवे भूतपूर्वगत्याश्रयणस्याऽयुक्तत्वादिड्प्रतिषेधो न स्यात् । उपदेशाधिकारात्तूपदेश उगन्तत्वात्संप्रत्यनुगन्तत्वेऽपि प्रतिषेधः प्रवर्तते। **आनुपूर्व्येति** । 'स्तृ–त्वा' इति स्थिते कित्त्वनिषेधाश्रय इट्, इडाश्रयश्च कित्त्वनिषेध इति प्रागेव संनिहितं कित्त्वमाश्रित्येटः प्रतिषेधः प्रवर्तते, तत इत्वादीनीत्यर्थः । अत्र चोद्यते–कृतेष्वित्वादिषु प्रतिषेधनिमित्तोगन्तत्वोपगमात्पुनरिड्प्राप्नोति, तस्मिंश्च सति 'न क्त्वा से'डिति कित्त्वप्रतिषेधाद्गुणे सति 'स्तेरित्वे'ति प्राप्नोति । नैष दोषः । पूर्वमेव प्रसक्तस्योग्लक्षणप्रतिषेधेन बाधितत्वाल्लक्ष्यस्य संस्कृतत्वाद्भ्रष्टावसरत्वात्पुनः

---

उ.] **एकाच उ** । ननु जागर्त्तेर्गुणस्य वृद्धिप्रतिषेधबाधकत्वेऽपि प्रकृते किमायातमत आह–**इड्प्रतिषेधस्येत्यर्थ इति** । परत्वाद्गुणे रपरत्वे चेड्प्रतिषेधाऽप्राप्तेरित्यर्थः । **अन्यार्थमिति**। 'स्तीर्णे' इत्याद्यर्थमिति भावः। **इत्वादिषु कृतेष्विति** । अन्तरङ्गत्वादिति भावः । **कित्त्वनिषेधाश्रयेति** । असति कित्त्वनिषेधे प्रतिषेधप्राप्तेरिति भावः । कित्त्वनिषेधो–'न क्त्वा से'डिति । **तत इत्वेति** । इटि तु सत्यकित्त्वेन बाधकगुणप्रवृत्तेरिति भावः । बाधकविषयपरिहारेण च बाध्यस्य प्रवृत्तिरिति तात्पर्यम् । **गुणे सतीति** । दीर्घस्याऽसिद्धत्वेन लघूपधत्वात् । **लक्ष्यस्य संस्कृतत्वादिति** । अयञ्चेदृशे विषये भ्रष्टावसरन्यायाश्रयणे हेतुः । वस्तुतो 'निमित्तापाय'परिभाषाया भाष्येऽनाश्रयणादुगन्तत्वाऽपगमेऽपि प्रतिषेधाऽपगमाऽभावेन न पुनरिड्प्राप्तिरिति चिन्त्यमिदं । भ्रष्टावसरन्यायस्याऽत्र शास्त्रेऽनाश्रयस्येको गुणवृद्धी इति सूत्रे भाष्ये

---

१ 'इत्युच्यते' पा० । २ 'च कृते' इति क्वाचित्कम् ।
३ 'निवर्त्तते' पा० । ४ 'पूर्व्यात्सिद्धं' पा० ।

प्राप्नुतः॥ किं कारणम् ? ॥ 'न क्त्वा से'डिति कित्त्वप्रतिषेधात् ॥ इदं तर्हि—आतिस्तीर्षति निपुपूर्षति । इत्त्वोत्त्वयोः कृतयो रपरत्वे चाऽनुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति ॥ मा भूदेवं—'श्युकः किती'ति, 'इट्सनि वे'त्येवं भविष्यति ॥ इदं तर्हि प्रयोजनम्[1]—आस्तीर्णं निपूर्ताः पिण्डाः । इत्त्वोत्त्वयोः

प्र.]प्रवृत्त्यभावात्। आतिस्तीर्षतीति। 'श्युकः किती' त्यत्र विशिष्टानुबन्धोपलक्षितः प्रत्यय आश्रितः, 'सनि ग्रहगुहोश्चे'त्यत्र तु साक्षादिति विशेषमाश्रित्यास्योपन्यासः। अत्रेत्वरपरत्वयोः कृतयोरनुगन्तत्वादिट्प्रतिषेधो न स्यादुपदेशाधिकारात्त्वनुगन्तावस्थायामपि भवति । 'सनि ग्रहगुहोश्चे'त्यत्र 'च'शब्देनोगनुकृष्यते ।' श्युकः किती'-त्यनेन त्वत्र प्रतिषेधो नास्ति; इट्प्रतिषेधाश्रयत्वाज्झलादित्वस्य, झलादित्वाश्रयत्वात्कित्त्वस्य, कित्त्वाश्रयत्वादिट्प्रतिषेधस्येति इतरेतराश्रयप्रसङ्गात् । इट्सनि वेति । 'स्तृ–स' इति स्थिते ऋकारान्तावस्थायामेव पक्षे इडभावः । तथाहि–इड्विकल्पस्य निरकाशत्वात्सांप्रतिकाभावे भूतपूर्वगत्याश्रयणादनिगन्तत्वाद्वा न तावद्गुणस्य प्रवृत्तिः । तत्र इट्पक्षे 'वृतो वे'ति दीर्घविकल्पे रूपद्वयम्–आतिस्तरीषति, आतिस्तरिषतीति । इडभावपक्षे तु–आतिस्तीर्षतीति । अत्र चोद्यते,–इडभावपक्षे–कित्त्वाद्गुणे निषिद्धे इत्वरपरत्वयोः कृतयोः पुनरिट्प्राप्नोति । न चेट्सनि वेतिविकल्पविधानमनर्थकम्, ऋकारान्तावस्थायां पक्षे इडभावे कित्त्वे सति इत्त्वरपरत्वयोः कृतयोरिटि सति गुणे च सति 'आतिस्तेरिषती'ति रूपसम्पादनार्थत्वाद्विकल्पस्य । अत्र समाधिः–नित्यमिटि प्राप्ते विकल्प[स्य]विधानाद्भ्रष्टावसरत्वाल्लक्ष्यस्य सिद्धत्वात्पुनरिड्लक्षणं न प्रवर्तते । आस्तीर्णमिति । कृतेऽकृते चेटि किदेव निष्ठेत्यनेन विशेषेणास्योपन्यासः ।

उ.]ध्वनितत्वाच । नन्वातिस्तीर्षतीत्यत्रापि झलादेरेव सतः कित्त्वादिदमप्यानुपूर्व्या सिद्धमित्याशङ्क्य लक्षणान्तरं तद्गतञ्च कंचिद्विशेषमाश्रित्य परिहारान्तरकथनायोदाहारीत्याह–श्युक इति । 'सनि ग्रहे'त्यनेनाऽत्रेट्प्रतिषेध इति भावः । नन्वत्रापि पूर्वेणैव सिद्धमिति किमुगनुकर्षणार्थेन चेनेत्यत आह–श्युकः कितीत्यनेन त्विति । 'सनि ग्रहे'त्यत्र तु 'किती'त्यनपेक्षणान्न दोष इति भावः । भाष्ये–श्युकः कितीत्यस्य–'उक' इत्यनुवर्तमाने 'सनि ग्रहे'त्यनेनेत्यर्थः । ननु ऋकारान्तावस्थायामेवेट्प्रतिषेधो न पुनरीत्त्वोत्त्वे इति कथं लभ्यतेऽत आह–तथाहीति । ॠदन्ते 'सनिग्रहे'ति प्रतिषेधे प्राप्ते 'इट्सनि वे'ति विधीयमानो विकल्प इत्त्वोत्त्वयोः कृतयोर्वृत इति निमित्तस्य विहितत्वान्न स्यादिति पूर्वमेव प्रवर्तते । एवं गुणादपि । अथापि भूतपूर्वगत्याश्रयणं तदा नित्यत्वं तस्य । इत्त्वोत्त्वे तु इटि कृतेऽकित्त्वाद्गुणेन बाधिते इत्यनित्ये इति भावः । न तावद्गुणस्येति । उपलक्षणमिदम्–इत्त्वोत्वयोरपि । इट्पक्षे गुणः, तदभावे सनः कित्त्वात्तदभावे इत्त्वोत्त्वे । पुनरिट्प्राप्नोतीति । अनुगतत्वेन निषेधाऽप्राप्तेरिति भावः । नित्यमिटीति । अस्य 'तद्बाधकनिषेधे प्राप्ते' इति

[1] 'प्रयोजन'मिति क्वचिन्न ।

कृतयोः रपरत्वे चाऽनुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति ॥ मा भूदेवम्, 'इट्सनि वे'ति सनि विभाषा, 'यस्य विभाषे'ति प्रतिषेधो भविष्यति ॥

इहार्थमेव तर्हि—॥*॥ वध्यर्थमेकाज्ग्रहणम् ॥*॥ [ वध्यर्थमेकाज्ग्रहणं कर्त्तव्यम् ] ॥ वध इट्प्रतिषेधो मा भूदिति—वधिषीष्टेति ॥ एतदपि नास्ति प्रयोजनं, क्रियमाणेऽपि वै एकाज्ग्रहणे वध इट्प्रतिषेधः प्राप्नोति,—वधिषीष्टेति ॥ किं कारणं? ॥*॥ वध इट्प्रतिषेधः सन्निपात एकाच्त्वात्प्रकृतेश्चानुदात्तत्वात् ॥*॥ संनिपाते चैव हि वधिरेकाचश्रूयते प्रकृतिश्चास्याऽनुदात्ता ॥

---

प्र.] यस्य विभाषेति । ननु ऋकारान्तस्य सनि विकल्पविधानान्नित्यत्वादित्वोत्वयोः कृतयोरनृकारान्तत्वाद्यस्य विभाषेतिप्रतिषेधाऽप्रसङ्गः । नैष दोषः। सनि विकल्पविधाने ऋकारान्तत्वाऽपेक्षणेऽपि 'यस्य विभाषे'त्यत्र यस्य क्वचिदिड्विकल्पो दृष्टः स धातुराश्रीयते नतु विकल्पकारणमृकारान्तत्वम् । भवति चेत्त्वोत्त्वयोः कृतयोरपि स एव धातुरिति प्रवर्त्तते प्रतिषेधः । तदेवमुपदेशग्रहणस्य उत्तरत्रानुपयोगादननुवर्तनाज्जागरित इत्यत्र गुणरपरत्वयोः कृतयोरनुगन्तत्वात्श्र्युकः किंतीतिप्रतिषेधाऽभावादुत्तरार्थमेकाज्ग्रहणं न कर्तव्यम् । वध्यर्थमिति । वधशब्दोऽकारान्तोऽनेकाजादेशः । इतर उपदेशग्रहणमनुदात्तस्यैव विशेषणं न त्वेकाच इतिमन्यमान आह—एतदपीति । वधिषीष्टेति। आशिषि लिङ्। कर्मण्यात्मनेपदम्। अतो लोपइत्यकारलोपेकृते वधिरेकाच् । अकारोच्चारणं त्ववधीदित्यादौ हलन्तलक्षणवृद्धिनिवृत्त्यर्थं स्यात्। प्रकृतेश्चानुदात्तत्वादिति । यस्मात्प्रकृतिर्हन्तिरनुदात्ता तस्याश्चोपदेशावस्था गृह्यते । सैव चाऽनेन रूपेणाऽवस्थितेति संप्रत्ययः, ततः प्रतिषेधः प्राप्नोति । ततश्च कृतमप्येकाज्ग्रहण-

---

उ.] शेषः। भ्रष्टावसरन्यायाश्रयणे हेतुः—लक्ष्यस्य सिद्धत्वादिति। संस्कृतत्वादित्यर्थः। इदमुक्तरीत्या चिन्त्यम् । अनेन विशेषेणेति । एवञ्चात्राऽनुपूर्व्या न सिद्धिर्नापि निषेधान्तरप्राप्तिरिति भावः । प्रतिषेधाप्रसङ्ग इति । 'आदितश्चे'ति योगविभागेन ज्ञापकेन 'यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध' इति वक्ष्यमाणत्वादिति भावः । प्रवर्तते प्रतिषेध इति । 'यदुपाधे'रिति नाश्रीयत इत्यभिमानः । वस्तुतस्तु 'दरिद्रित' इत्यत्र 'यस्य विभाषे'त्यस्य वारणाय उत्तरत्रानुवृत्तिरावश्यक्येव । 'इह किंचित्रपो' इति न्यायेनेहापि फलमावश्यकमित्याशयेनानादराद्भगवता तथा नोक्तम् । अकारान्त इति । अन्यथाऽवधीदित्यत्राऽतो हलादेरिति वृद्धिः स्यात् । अदन्तत्वे त्वल्लोपस्य स्थानिवत्त्वान्न दोषः । एकाज्ग्रहणे कृते तु वध्युपदेशोऽनेकाच्त्वादिट्प्रतिषेधाऽप्रसङ्ग इति भावः । हन्तेः परस्मैपदित्वादाङ्पूर्वत्वाऽभावाच्चाह—कर्मणीति । हलन्तलक्षणेति । 'अतो हलादे'रिति विकल्पनिवृत्त्यर्थमित्यर्थः। अल्लोपस्य स्थानिवत्त्वेन सिच्पराऽकाराऽभावादिति भावः। प्रकृतिर्हन्तिरिति। प्रकृतिशब्देन स्थान्युच्यत इति भावः । तस्याश्चेति । हन्तेरेव साक्षादुपदेशो, वधेस्तु तद्विकारत्वेन प्रत्ययान्न मुख्य

---

१ इदं भाष्यमित्यन्ये वार्त्तिकमित्यपरे । २ व्याख्याभाष्यञ्चास्य लुप्तमित्यन्ये ।

किं पुनः कारणमेवं विज्ञायते—'उपदेशेऽनुदात्तादेकाचः श्रूयमाणा'दिति ॥ ॥*॥ यङ्लोपार्थम् ॥*॥ यङ्लोपे मा भूदिति। बेभिदिता बेभिदितुम् । चेच्छिदिता चेच्छिदितुम् । ॥*॥ एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्क्र्यादिभ्यो लिटि नियमाऽनुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य ॥*॥ 'एकाच उपदेशेऽनुदात्ता'दित्युपदेशवचनमनुदात्तविशेषणं चेत्क्र्यादिभ्यो लिटि नियमस्याऽनुपपत्तिः ॥ किं कारणम् ? ॥ 'अप्राप्तत्वात्प्रतिषेधस्य' । द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीड्प्रतिषेधो न प्राप्नोति । असतीड्प्रतीषेधे नियमो नोपपद्यते ॥ असति नियमे को दोषः?। ॥*॥ तत्र पचादिभ्य इड्वचनम् ॥*॥ तत्र पचादिभ्य इड्वक्तव्यः । पेचिव । शेकिम ॥*॥ सनश्चेड्प्रतिषेधः ॥*॥ सनश्चेड्प्रतिषेधो वक्तव्यः । बिभित्सति चिच्छित्सति । द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीड्प्रतिषेधो न प्राप्नोति । इह च नीत्तः—

---

प्र.] मनर्थकम् । किं पुनरिति । उभयविशेषणमुपदेशग्रहणमस्तु, ततो वधे ह्युपदेशेऽनेकाच्त्वात्प्रतिषेधाऽप्रसङ्गः । बेभिदितेति । द्विःप्रयोगे द्विर्वचने भवति भिदिरुपदेशेऽनुदात्त, उपदेशे एकाजिति, अतो लोपे कृते संप्रत्यनेकाच्त्वेऽपि प्रतिषेधप्रसङ्गः । श्रूयमाणे त्वेकाच्याश्रीयमाण आवृत्तिसङ्ख्ययैकत्वसङ्ख्याया बाधनात्प्रतिषेधाऽभावः । समुदायस्य चैकाऽङ्गसंज्ञा न तु प्रत्येकमित्येकाचोऽङ्गादित्याश्रयणात्परभिद्रूपाश्रयोऽपि प्रतिषेधो न भवति । अनुदात्तविशेषणं चेदिति । उभयविशेषणेऽप्यनुदात्तविशेषणं भवतीति सामर्थ्याद'नुदात्तस्यैव यदि विशेषण'मित्यवधारणं द्रष्टव्यम् ।

असति नियम इति । क्रादिसूत्रं प्रतिषेधार्थमस्तु, एवमपि 'चकृषे' इत्यादि सिध्यति, बिभिदिवेत्यादौ चैकाच्त्वाऽभावात्प्रतिषेधाभावादिट् सिध्यतीति भावः। पेचिवेति। एत्वाभ्यासलोपयोः कृतयोरेकाचः श्रूयमाणादितीड्प्रतिषेधप्रसङ्गः । नीत्त इति । ददातेः क्तप्रत्यये'ऽच उपसर्गात्त' इति तत्वे कृतेऽनच्कत्वादेकाच्त्वाभावादिड्प्रतिषेधाऽप्रसङ्गः । तत्वस्य द्विपदाश्रयत्वाद्बहिरङ्गत्वादन्तरङ्गे इड्प्रतिषेधेऽसिद्धत्वादिति

---

उ.] उपदेश इत्यर्थः। तदाह—सैव वेति। भाष्ये—'सन्निपात' इत्यस्य,—प्रतिषेधप्रवृत्तिकाले इत्यर्थः । उपदेशेऽनेकाच्त्वादिति। 'हनो वधे'त्यपि स्वरूपज्ञापनाय मुख्य उपदेश इति भावः । ननु स्थाने द्विर्वचने उपदेशे एकाजनुदात्तरूपस्य नष्टत्वात्कथं यङ्लोपे इड्प्रतिषेधः । नच स्थानिवत्त्वम्, अल्विधित्वादिति । अत आह—द्विःप्रयोग इति । ननु यञा व्यवधानात्कथमत्र निषेधप्रसङ्गोऽत आह—अतो लोपे कृते इति । यलोपस्याप्युपलक्षणमिदम् । अनेन यङ्लुग्विषयत्वमस्य भाष्यस्य नेति दर्शयति । अत एवाग्रे स्थानिवत्त्वेन समाधानपरं भाष्यं सङ्गच्छते। ननु परस्य भिद्रूपस्य संप्रत्येकाच्त्वात्तदाश्रयः प्रतिषेधः स्यादत आह—समुदायस्य चेति। यथा चैतत्तथा 'एकाचो द्वे' इत्यत्र व्युत्पादितं भाष्ये । तत्वे कृते इति । परत्वा-

तत्वे कृते[1]ऽनच्कत्वादिड्प्रतिषेधो न प्राप्नोति ॥ नैष दोषः । आनुपूर्व्या सिद्धमेतत् । नात्राऽकृते इड्प्रतिषेधे तत्वं प्राप्नोति ॥ किं कारणम्[1] ॥ 'ति किती'-त्युच्यते ॥ यदप्युच्यते—"एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्क्रन्यादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्ये"ति, मा भून्नियमः ॥ ननु चोक्तं-"तत्र पचादिभ्य इड्वचन"मिति ॥ नैष दोषः-उक्तं तत्र थल्ग्रहणस्य प्रयोजनम् ॥ [ किं[1] ?]॥ समुच्चयो यथा विज्ञायेत[2]-'थलि च सेटि, क्किति च सेटी'ति ॥

यदप्युच्यते "सनश्चेड्प्रतिषेध" इति ॥*॥ उभयविशेषणत्वात्सिद्धम् ॥*॥ उभयमुपदेशग्रहणेन विशेषयिष्यामः—'उपदेशेऽनुदात्तादुपदेशे एकाच' इति ॥ "यङ्लोपे कथम् ? ॥" ॥*॥ यङ्लोपे च[3] तदन्तद्विर्वचनात् ॥*॥ सन्यङन्तस्य स्थाने द्विर्वचनं तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः स भवति यः स एकाजुपदेशेऽनुदात्तः ॥ अथापि द्विःप्रयोगो द्विर्वचनमेवमपि न दोषः॥ न ह्यस्य भिद्युपदेश उपदेशः ॥ किं तर्हि ? ॥ बेभिद्युपदेश उपदेशः॥

प्र.] परिहारान्तरस्य सद्भावान्नाश्रितः । तदेव दर्शयति—**आनुपूर्व्या सिद्धमिति । थल्ग्रहणस्येति** । आरम्भसामर्थ्यादत एकहल्मध्येऽनादेशदेर्लिटीत्यनुवर्तनाच्चान्तरेणापि थल्ग्रहणं थल्येव सेट्येत्वाभ्यासलोपयोः सिद्धत्वात्थल्ग्रहणं क्किता समुच्चयार्थम् । ततश्चेटि कृते एत्वाभ्यासलोपयोर्विधाने 'पेचिवे'त्यादीनि रूपाणि सिध्यन्तीति नार्थः क्रादिनियमेन । **उभयविशेषणत्वादिति** । एवं सत्युभयं विशेषणत्वेन[4] संस्पर्शादनुगृहीतं भवति । एतदर्थं चोपदेश इति मध्ये पठितम् । उभयविशेषणे च क्रादिनियमात्पचादिभ्य इटः सिद्धत्वात्थलि च सेटीत्यत्र थल्ग्रहणं विस्पष्टार्थम् । **सन्यङन्तस्येति** । 'सन्यङो'रिति षष्ठी । तत्र 'भिद्य'शब्दस्य प्रकृतिप्रत्ययसमुदायस्य 'सर्वे सर्वपदादेशा' इति शब्दान्तर आदेशे कृतेऽयं धातुरयं प्रत्यय इति विभागाऽभावादिड्प्रतिषेधाऽभावः । नन्वेवं 'बिभित्सती'त्यत्रापि प्रतिषेधाऽप्रसङ्गः । इडप्यस्मिन्पक्षे न प्राप्नोतीत्यदोषः । अथ वाऽत्राऽसमाश्वासात्पक्षान्तराश्रयेणाह—**अथापीति । न ह्यस्येति** । आचार्यस्य । भिद्युपदेशाश्रये ह्येकाच्त्वादनुदात्तत्वाच्चेड्प्रतिषेधः स्यात् । यङन्तस्य तूपदेशे गृह्यमाण तस्याऽनेकाच्त्वा-

उ.] दिति भावः। **द्विपदेति**। उपसर्ग-त्तान्त'दा'रूपेत्यर्थः। उत्तरपदाधिकारे बहिरङ्गपरिभाषाया अप्रवृत्तिरिति 'इच एकाचोऽ'मिति सूत्रस्थं भाष्यन्त्वकदेश्युक्तिरिति भावः।

**थल्येवेति** । अक्कितः सेट्लिट्स्थल एव संभवादित्यर्थः । **क्किंतेति** । सेटीत्युभयविशेषणं । तत्र सेड्ग्रहणं कालावधारणार्थं । 'थली'त्येव थलि, पूर्वेण च क्किति सिद्धेस्तदाह—**इटि कृते इति । विस्पष्टार्थमिति** । प्रतिपत्तिलाघवार्थमित्यर्थः । **अत्राऽसमाश्वासादिति** । द्विःप्रयोगपक्षस्यैव युक्तत्वादिति भावः । इदंशब्दार्थमाह—

१ इदं क्वचिन्न । २ 'विज्ञायते' पा० । ३ चः क्वचिन्न । ४ 'विशेषणेन' पा० ।

**अथापि भिद्युपदेश उपदेश एवमपि न दोषः—अकारेण व्यवहितत्वान्न भविष्यति ॥ ननु च लोपे कृते नास्ति व्यवधानम् ? ॥ स्थानिवद्भावाद्व्यवधानमेव ॥ न सिध्यति । पूर्वविधौ स्थानिवद्भावो न चाऽयं पूर्वविधिः ? ॥ एवं तर्हि–पूर्वस्मादपि विधिः पूर्वविधिः ॥**

**कः पुनरुपदेशो न्याय्यः ? ॥ यः कृत्स्नः ॥ कश्च कृत्स्नः ? ॥ य उभयोः ॥**

प्र.]दुदात्तत्वाच्च प्रतिषेधाऽप्रसङ्गः। ननु च 'प्रत्यक्षमाख्यानमुपदेश' इत्युक्तम्, यङादीनां च प्रत्ययानामुपदेशोऽस्ति, न तु तदन्तानां शब्दानामनुमेयरूपाणाम् । नैष दोषः । सङ्कीर्णावुद्देशोपदेशावित्यपि तत्रोक्तम् । अत एव चेत्संज्ञायां करणसाधन उपदेशशब्दः शास्त्रवाच्याश्रितः । इह तु भावसाधन आश्रीयते । तेन प्रतिपादनमात्रं गुणैर्वा प्रत्यक्षेण वोपदेश उच्यते । यङ्विधानद्वारेण च 'बेभिद्य'त्यस्य समुदायस्य क्रियाविशेषवचनस्याऽऽद्यप्रतिपत्तिरस्तीति **'बेभिद्युपदेश'** इत्युक्तम्। 'बेभिद्य'-शब्दादिक्श्तिपाविति इक्प्रत्ययेऽल्लोपयलोपयोर्बेभिदिरिति भवति । अथ चेत्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते, तदुक्तम्–'उद्देशश्च प्रातिपादिकानां नोपदेश' इति, इह तु प्रतिपादनवचन इति विरोधाऽभावः, अथापि भिद्युपदेश इति उच्चारणवचनेऽप्युपदिशौ गृह्यमाणे प्रत्यक्षमाख्यानवचने वा न दोष इत्यर्थः । द्विःप्रकार उपदेश उक्ते पृच्छति–**कः पुनरिति** । किं भिद्युपदेशोऽथ बेभिद्युपदेश इत्यर्थः । **यः कृत्स्न इति** । कृत्स्नकारित्वात्कृत्स्नः । स च भिद्युपदेश एव । स हि सर्वसाधारणो, भेत्ता बेभिद्यते इत्येवमादीनां प्रतिपत्तिहेतुत्वात् । **उभयोरिति** । केवलस्य भिदेर्बेभिद्यादेश्च तदवयवसमुदायस्य धातोर्ग्राहक इत्यर्थः । एतदुक्तं भवति–भिदादीनामेवोपदेशोऽस्ति न तु सनाद्यन्तानामवयवसमुदायानाम्, उपदेशशब्दस्य साक्षात्प्रतिपत्ति-

उ.]**आचार्यस्येति । अनुदात्तत्वाच्चेति ।** प्रत्ययस्वरेणान्तोदात्तत्वादित्यर्थः। **इत्युक्तमिति** । 'उपदेशेऽजनुनासिक' इत्यत्र । **गुणैः**–प्रकृतिप्रत्ययादिभिः । नन्वनिर्ज्ञातस्य स्वरूपज्ञापनमुपदेश इति भिदेरेव स इति कथं बेभिद्युपदेश उपदेश इत्यत्राह–**यङ्विधानद्वारेण चेति** । 'अथवे'त्यादि प्रौढ्या, तत्रत्यभाष्यविरोधात् । **इह त्विति** । धातूनामनेकार्थत्वादिति भावः । वस्तुतस्तस्योपदेशत्वमेव नेति मनसि निधायाह–**अथापि भिद्युपदेश इति**–भाष्ये । भाष्ये–**पूर्वस्मादपीति** । तदनित्यत्वेऽपि विहितविशेषणान्न प्रागुक्तः कोऽपि दोषः । स्पष्टश्चेदमेकाचो द्वे इत्यत्र भाष्ये इति बोध्यम् । कारणे कार्यवाचिशब्द उपचारात्प्रयुक्त इत्याह–**कृत्स्नकारित्वादिति** । अस्य कृत्स्नकारित्वं दर्शयति–**सहीत्ति**। अत्रार्थे 'उभयो रिति भाष्यं योजयति—**केवलस्येति । तदवयवेति**–बहुव्रीहिः । 'अवयवसमुदायाना'मिति षष्ठीतत्पुरुषः । तत्र हेतुमाह–**उपदेशशब्दस्येति । शास्त्रवाचिन इति ।** करणव्युत्पत्त्येति भावः । यद्यप्येवंव्याख्याने 'वध इड्प्रतिषेध' इति उत्तरभाष्यानुत्थितिः, वधेः

१ इदं क्वचिन्न ।

यदि तर्हि य उभयोः स कृत्स्नः स च न्याय्यो वध इड्प्रतिषेधः प्राप्नोति—आवधिषीष्टेति[1] ॥ नैष दोषः—आद्युदात्तनिपातनं करिष्यते स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति[2] ॥ एवमपि उपदेशिवद्भावो वक्तव्यो यथैव हि स निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत—आवधिषीष्टेति ॥ नैष दोषः—आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये वधिभावे कृते सति शिष्टत्वात्प्रत्ययस्वरो भविष्यति ॥

अथ के पुनरनुदात्ताः ? ॥ आदन्ताः—अदरिद्राः । इवर्णान्ताश्श्रिऽश्रि[3]श्विडीशीदीधीवेवीङः । उवर्णान्ताः—युरुं[4]णुक्षुक्ष्णुस्नूर्णुवर्जम् । ऋदन्ताश्चाऽजागृवृङ्वृञः । शकिः—कवर्गान्तानाम् । पचिवचिसिचिमुचिरिचिविचिप्रच्छियजिभजिसृजित्यजिभुजिभ्रस्जिमस्जिरुजियुजिणिजिविजिसञ्जिस्वञ्जयश्चवर्गान्तानाम् । अदिसदिशदिहृं[5]दिछिदितुदिनुदिस्विदिभिदिस्कन्दिक्षुदिखिद्यतिविन्दिं[6][विन्तिं[7]]विद्यतिराधियुधिबुधिशुधिक्रुधिरुधिसाधिव्यधिबन्धिसिध्य-

प्र.]हेतुशास्त्रवाचिन आश्रयणात् । **वध इड्प्रतिषेध इति** । भिद्युपदेशस्थानीयो हन्त्युपदेश,ःतत्र हन्तिरेकाजनुदात्तश्चेति सत्यपि वधेरुपदेशेऽनेकाच्त्वे हन्त्युपदेशधर्माश्रय इट्प्रतिषेधप्रसङ्गः । न चाऽकारलोपस्य यङन्त इवात्रापि स्थानिवद्भावेन व्यवधानम्, सत्यपि स्थानिवत्त्वे प्रकृतिप्रत्यययोरानन्तर्यात्यङन्ते तु स्थानिवत्त्वादकारेण भिदिप्रत्यययोरानन्तर्यविच्छेदात् । **आद्युदात्तनिपातनमिति** । तत्सामर्थ्यादुपदेशविषयानुदात्तत्वाश्रय इट्प्रतिषेधो न भवति । न ह्येतदाद्युदात्तत्वं प्रयोगसमवायि, प्रत्ययस्वरेण तस्य बाधनात् । **आर्धधातुकीया इति** । आर्धधातुके भवा इति वृद्धाच्छः । यदि तर्ह्यार्धधातुकविशेषनिमित्ताऽप्यनवस्थितेषु प्रत्ययेषु भवन्ति तदा—यदुक्तं—'वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेने'ति तद्विरुध्यते । अन्तरङ्गत्वाद्वधेर्बहिरङ्गत्वा-

उ.]साक्षात्प्रतिपत्तिहेतुशास्त्रस्य सत्त्वात् । अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वेन लक्ष्यानुरोधेन चोपदेशत्वावच्छेदेनैकाच इत्यर्थात्, तथापि एतदभिप्रायमजानानस्य उभयोः स्थान्यादेशयोर्यस्तस्यैव ग्रहणमित्यर्थं मन्वानस्य सा शङ्का, तथैव च सिद्धान्त्येकदेशिन उत्तरम् । **उपदेशविषयेति** । हन्त्युपदेशविषयेत्यर्थः । **अनवस्थितेषु प्रत्ययेष्विति** । आर्द्धधातुक इत्यादेर्विषयसप्तमीत्वाश्रयणादिति भावः । **तद्विरुध्यत इति** । चिण्वद्भावेऽपि विषयसप्तमीति तदाशय इति निरूपितमस्माभिः प्राक् । वस्तुतोऽत्रावच्छेदकावच्छेदेनान्वयरूपोऽस्मदुक्तः समाधिर्बोध्यः । भाष्ये—**उवर्णान्ता इति** । य्वादिपर्युदासाद्ध्रस्वोवर्णान्ता इत्यर्थः। अत एव 'बभूथाततन्थे'ति सङ्गच्छते ॥

१ 'वधिषीष्ट' पा० । २ 'भविष्यतीति' पा० । ३ 'अश्विश्रि' ण० । ४ 'पुरु' पा० । ५ 'हृङ्' पा० । ६ इदं क्वचिन्न । ७ 'विदन्ति' । 'विन्दतिविदिविद्यति' पा० । ८ इदं क्वचिन्न ।

तिहनिमन्यतयस्तवर्गान्तानाम् । तपितिपिवपिशपिछुपिलुपिलिपिस्वप्यापिक्षि-पिसृपितृपिदृपियभिरभिलभियमिरमिनमिगमयः-पवर्गान्तानाम् । रुशिरिशि-दिशिविशिलिशिस्पृशिदृशिक्रुशिमृशिदंशिलिविषिमृषिकृषिश्लिषिविषिपिषितुषि-दुषिद्विषिघसिवसिदहिदिहिवहिदुहिनहिरुहि[वृंहि]लिहिमिहयश्चोष्मान्तानाम् । वसिः प्रसारणी ॥ [ एकाच उपदेशे ] ।

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥७।२।१३॥

॥*॥ कृञोऽसुटः ॥*॥ कृञोऽसुट इति वक्तव्यम् । इह माभूत्—संचस्करिव । संचस्करिम ॥ तर्हि वक्तव्यम् ? ॥ न वक्तव्यम्—गुणे कृते रपरत्वे चाऽनुगन्तत्वादिट्प्रतिषेधो न भविष्यति ॥ एवमप्युपदेशाधिकारात्प्राप्नोति तस्मादसुट इति वक्तव्यम् ॥ [ कृसृभृवृ ]

## श्वीदितो निष्ठायाम् ॥७।२।१४॥

**श्विग्रहणं किमर्थं, न प्रसारणे कृते प्रसारणपूर्वत्वे चोगन्तादित्येव सिद्धम् ? ॥**

---

प्र.]च्चिण्वद्भावस्य विप्रतिषेधाऽयोगादिति चिन्त्योऽत्र समाधिः । [एकाच उपदेशे]॥

**कृसृ[भृवृ]** । **कृञोऽसुट इति** । कृतेऽपि सुटि करोतिर्भवत्येवेति प्रतिषेधप्रसङ्गः । **गुणे कृते इति** । 'ऋतश्च संयोगादेर्गुण' इत्यत्र 'संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्य'मिति वचनेन । **अनुगन्तत्वादिति** । 'श्र्युकः किती'त्यत उग्ग्रहणमिहाऽनुवर्तत इति मन्यते । **एवमपीति** । यद्यपि संप्रति नोगन्तस्तथाप्युपदेश उगन्त इति स्यात्प्रतिषेधः । किमर्थमुपदेश इत्यनुवर्तत इति चेत्, 'तुष्टोथे'त्यादौ कृतेऽपि गुणे इट्प्रतिषेधार्थम् । यद्येवमुक इत्यपि नानुवर्त्यम् । एवं तर्ह्येतदनेनोक्तं भवति–सत्यसति चोगधिकारे 'कृञोऽसुट' इत्यवश्यवाच्यमिति नार्थ उगधिकारेण ॥ [ **कृसृभृवृ** ] ॥

**श्वीदितो निष्ठायाम्** । स्तीर्त्वा स्तीर्णमित्यादीनामुपदेशग्रहणानुवृत्तिमन्तरेण सिद्धेरभिधानादुपदेशाधिकारोऽत्र नास्तीति मत्वाह–**श्विग्रहणं किमर्थमिति** । ननु च 'श्वि–त' इति स्थिते संप्रसारणात्परत्वादिट् प्राप्नोति । नित्यत्वात्संप्रसारणं भविष्यतीति मन्यते । 'यस्य लक्षणान्तरेणे'ति क चिन्नाश्रीयत इति पूर्वमेवोक्तम् । संप्रसारणनिमित्तत्वादिडभावस्य तस्मिन् कृते इटोऽप्रवर्तनादनित्यत्वम् । संप्रसारणस्य तु

---

उ.] **कृसृभृ** । कृते सुटि शब्दान्तरत्वादप्राप्तेराह–**कृतेऽपीति** । 'यदागमा' इति न्यायादिति भावः । नन्वत्र 'उक' इत्यस्याऽभावेनाऽनुगन्तत्वादित्ययुक्तमत आह—**श्र्युक इति** । वार्तिके **'वक्तव्य'**मित्यावश्यके कृत्य इति दर्शयति–**अवश्यवाच्यमिति** । [ कृसृभृवृ ] ॥

**श्वीदितो** । ननु 'श्र्युक' इत्यत्रोपदेश इत्यनुवृत्त्या श्वेरुपदेशेऽनुगन्तत्वात्प्रश्नोऽयमयुक्तोऽत आह—**स्तीर्त्वेत्यादि** । इटोऽनित्यत्वोपपादनायाह—**यस्य लक्षणा-**

---

१ 'चुपि' । २ इदं क्वचिन्न । ३ 'मिहिमुहयश्च । ४ 'संप्रसारणपरपूर्वत्वे' पा० ।

**अत उत्तरम्पठति**—॥*॥ श्विग्रहणमिदन्तत्वादुपदेशस्य ॥*॥ **श्विग्रहणं क्रियते [किङ्कारणम् ?॥] इदन्तत्वादुपदेशस्य। 'उपदेशे उगन्ता'दित्युच्यते । श्वयतिश्चोपदेशे इदन्तः॥** [ श्वीदितो निष्ठायाम् ] ॥

## यस्य विभाषा ॥७।२।१५॥

॥*॥ यस्य विभाषाऽविदेः ॥*॥ **यस्य विभाषाऽविदेरिति वक्तव्यम् । इह**

---

प्र.] कृताऽकृतप्रसङ्गित्वान्नित्यत्वम् । **श्विग्रहणमिदन्तत्वादिति ।** एकाज्ग्रहणोत्तरार्थताप्रत्याख्यानायाऽऽनुपूर्व्या सिद्धमित्यादि तत्रोक्तम् । तत्त्वेकाज्ग्रहणमन्यार्थं स्थितं सदुत्तरत्रापि प्रतिपत्तिगौरवपरिहारायानुवर्त्यम् । ततश्च 'जागरित' इत्यत्र 'श्र्युकः किती'तीट्प्रतिषेधो न भवति। ननु वध्यर्थमप्येकाज्ग्रहणं प्रत्याख्यातमेवाद्युदात्तनिपातनाश्रयेण, हन्त्युपदेशे गृह्यमाणे तदुक्तम् । वध्युपदेशे चाश्रीयमाणे एकाज्ग्रहणेनैव वधेरिट्साध्यते । आद्युदात्तनिपातने त्वाश्रीयमाणे वधिषीष्टेत्याद्युदात्तत्वप्रसङ्गनिवारणाय 'लिङी'ति विषयसप्तम्याश्रयणीया। तथा च 'घानिषीष्टे'ति विप्रतिषेधाच्चिण्वद्भावानुपपत्तिः,अन्तरङ्गत्वाद्वधिभावप्रसङ्गात् । यङ्लुङ्निवृत्त्यर्थं चैकाज्ग्रहणं कर्तव्यम् । तस्मिन् हि क्रियमाणे 'यत्रैकाज्ग्रहणं किंचित्पञ्चैतानि न यङ्लुकी'ति वचनाद्बेभिदितेत्यादावपीट्सिध्यति । उपदेशग्रहणमपि 'श्र्युकः किती'त्यत्रानुवर्त्यम् । अन्यथा 'स्तीर्त्वे'त्यादिसिद्धयेऽनन्तप्रकारपरिहाराश्रयणे प्रतिपत्तिगौरवानुषङ्गः । इदमेव श्विग्रहणमुपदेशाधिकारस्य तत्र ज्ञापकम् । अन्ये त्विह श्विग्रहणं 'सर्वविधिभ्य इड्विधिर्बलवा'नित्यस्य ज्ञापकमाहुः । **[ श्वीदितो निष्ठायाम् ] ॥**

**यस्य वि ।** 'विभाषा गमहनविदविशा'मिति क्वसौ विकल्पविधानाद्वेत्तेर्निष्ठायां प्रतिषेधः प्राप्नोतीति मत्वाह—**यस्य विभाषाऽविदेरिति ।** वेत्तिरत्र विवक्षितः ।

---

उ.] **न्तरेणेत्यादि ।** नन्वेकाच इति सूत्रे उपदेशग्रहणस्योत्तरत्र फलाऽभाव उक्तः, इह च तदाश्रयणमिति विरोधं परिहरति—**एकाज्ग्रहणेति । ततश्च जागरित इति ।** एवञ्च 'स्तीर्ण'मिति यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इत्याश्रयणेऽपि सिद्धम् । तच्चावश्याश्रयणीयमित्युत्तरसूत्रे भाष्य एव स्फुटम् । **वध्युपदेशे त्विति ।** उपदेशमात्रावच्छेदेन य एकाजित्यर्थेनेत्यर्थः । हन्तेर्विनाशोन्मुखत्वेन तत्र धातोरित्यस्याऽप्रवृत्त्या तत्स्थानिको वधिरप्यान्तरतम्यादुपदेशेऽनुदात्त एवोच्चारितः स्थान्यनुरूप इति भावः । **तथा** चेत्यादि चिन्त्यमित्युक्तमेव। **इति वचनादिति ।** परे तु—इण्निषेधविषये यङ्लुगन्तानामनभिधानमेव । अत एव पूर्वसूत्रे भाष्ये 'इहार्थमेव तर्हि वध्यर्थमेकाज्ग्रहण'मित्येवोक्तं, नतु यङ्लुगर्थमित्यपि । एषा परिभाषा च न स्पृष्टा । यत्तु अजर्घा बेभिदीतीत्यादौ शप्श्यनोरकरणात् 'श्तिपा शपेति' परिभाषाऽपि भाष्यसंमतेति, तन्न, 'चर्करीतञ्चे'त्यदादौ विशिष्य पाठेन तेषां तत्तद्गणप्रयुक्तकार्याऽप्रवृत्तेः । तस्मादियं परिभाषा भाष्याऽसंमतैव। वधेराद्युदात्तनिपातनादेव सिद्धे एकाज्ग्रहणमत्र प्रत्याख्येयमेव । यङन्तवारणन्तु 'उपदेशेऽनुदात्ताद्विहितस्ये'त्यर्थेनैवेति प्राहुः ।

मा भूत्—विदितः विदितवानिति ॥ तत्तर्हि वक्तव्यम्? ॥ न वक्तव्यम् । यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः । शविकरणस्य[1] विभाषा, लुग्विकरणश्चायम्॥

**आदितश्च ॥७।२।१६॥ विभाषा भावादिकर्मणोः ॥७।२।१७॥**

किमर्थो योगविभागो न[2] 'आदितो विभाषा भावादिकर्मणो'रित्येवोच्येत ॥ केनेदानीं कर्तरि प्रतिषेधो भविष्यति ? ॥ 'यस्य विभाषे'त्यनेन ॥ एवं तर्हि सिद्धे सति यद्योगविभागं करोति तज्ज्ञापयत्याचार्यः—"यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध" इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ 'यस्य विभाषाऽविदे'रित्युक्तं तन्न वक्तव्यं भवति ॥

---

प्र.] 'विद्लृ लाभे' इत्यस्य तु प्रतिषेधो भवत्येव–'विन्न' इति। विद्यतिविनत्त्योस्त्वनुदात्तत्वादिट्प्रतिषेधः । **यदुपाधेरिति** । उपाधिः–अभिधेयादिर्भेदकः । **शविकारणस्य विभाषेति** । विशिना तौदादिकेन साहचर्यात्तौदादिकस्यैव लाभार्थस्य विभाषेति, ज्ञानार्थस्य सत्यपि विदिरूपत्वेऽर्थस्य भेदकत्वेन रूपवदाश्रयणात्प्रतिषेधाऽभावः । यद्यपि हन्तिना साहचर्यं विदेरस्ति तथापि शब्दपरविप्रतिषेधाद्विशिव्र्यवस्थाहेतुर्न हन्तिः । **[ यस्य विभाषा ]** ॥

आदि[**तश्च**] । **एवं तर्हीति** । रूपाऽभेदेपि यद्युपाधीनां भेदकत्वं न स्याद्योगविभागोऽनर्थकः स्यात् । भेदकत्वे तु तेषां भावादिकर्मणोर्विकल्पविधानात्कर्तरि निष्ठायां प्रतिषेधो न स्यात्,भावादिकर्मणोरपि विकल्पप्रतिषेधयोर्विरोधात्प्रतिषेधो न स्यादिति कर्तृकर्मनिष्ठार्थो योगविभागः । यदि तर्ह्युपाधिर्भेदकस्तत 'उदितो वे'ति

---

उ.] **आहुरिति** । अत्राऽरुचिबीजन्तु उपदेशशब्दानुवृत्तिज्ञापनमात्रेणैव चारितार्थ्ये जाते विशिष्टवचनज्ञापकता न युक्ता, भाष्यविरोधश्चेति । **[श्वीदितो निष्ठायाम्]** ॥

**यस्य विभाषा । विन्न इति ।** अभोगप्रत्यययोरिदं, तयोस्तु वित्त इति । **विद्यतिविनत्त्योस्त्विति ।** परे तु तुदादेरपि अनुदात्तत्वादेव निषेधः । विन्दिविद्यतीति हिं अनुदात्तगणे भाष्ये उक्तं । तत्र इका निर्देशे नुम इव श्नमोऽप्यप्राप्तिरिति अदादिव्यावृत्तयेऽनुस्वारोच्चारणं । तत्र भाष्यप्रामाण्याद्विकरण इति चेत्, नुमोऽपि संभव इति विनिगमनाविरहादुभयोरपि ग्रहणं । 'विन्दतिविन्दिविद्यती'ति पाठे तु स्पष्टमेव तद्ग्रहणमिति चिन्त्योऽयं कैयट इत्याहुः । **अभिधेयादिर्भेदक इति । अभिधेयम्–अर्थः** । विशेषणमात्रमत्रोपाधिशब्देन, नत्वर्थविशेष उपाधिरिति लक्षित इत्यर्थः । **शब्दपरविप्रतिषेधादिति** । लुग्विकरणपरिभाषाऽनुग्रहाय परसाहचर्यस्याऽत्राश्रयणमिति तत्त्वम् । **[ यस्य विभाषा ]** ॥

**आदितश्च** । भाष्ये–**कर्तरीति** । उपलक्षणमेतत्, कर्मणीत्यपि बोध्यम् । ननु यत्रार्थे विकल्प उक्तस्तत्रैव प्रतिषेधस्तर्हि कुतो नेत्यत्राह—**भावादिकर्मणो-**

---

१ 'शब्विकरण' पा० । २ 'न' इति क्वाचित्कम् ।

**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताऽविस्पष्टस्वराऽनायासभृशेषु ॥७।२।१८॥**

॥*॥ क्षुब्धं मन्थाऽभिधाने ॥*॥ **क्षुब्धं मन्थाभिधाने इति वक्तव्यम् ।** क्षुभितं मन्थेनेत्येवान्यत्र । क्षुब्ध ॥ स्वान्त-॥*॥ स्वान्तं मनोभिधाने ॥*॥ **स्वान्तं मनोभिधाने इति वक्तव्यम् । स्वनितं मनसेत्येवान्यत्र । स्वान्त** ॥ ध्वान्त-॥*॥ ध्वान्तं तमोऽभिधाने॥*॥ **ध्वान्तं तमोभिधान इति वक्तव्यम् । ध्वनितं तमसेत्येवान्यत्र ।** ध्वान्त॥[लग्नं-॥*॥लग्नं सक्ताभिधाने॥*॥**लग्नं सक्ताभिधाने इति वक्तव्यम् ॥ लगितं सक्तेनेत्येवान्यत्र ।** लग्न॥म्लिष्ट-॥*॥म्लिष्टं विस्पष्टाऽभिधाने॥*॥ **म्लिष्टं विस्पष्टाऽभिधान इति वक्तव्यम् । म्लेच्छितं विस्पष्टेनेत्येवान्यत्र । म्लिष्ट ॥** विरिब्ध—॥*॥ विरिब्धं स्वराभिधाने ॥*॥ **विरिब्धं स्वराभिधाने इति वक्तव्यम् । विरेभितं स्वरेणेत्येवान्यत्र । विरिब्ध** ॥—फाण्ट—॥*॥ फाण्टमनायासाभिधाने ॥*॥**फाण्टमनायासाभिधानेइति वक्तव्यम् । फाणितमेवान्यत्र । फाण्ट** ॥ बाढ—॥*॥ बाढं भृशाभिधाने ॥*॥ **बाढं भृशाभिधाने इति वक्तव्यम् ॥*॥ बाहितमेवान्यत्र** ] ॥ [ क्षुब्धस्वान्त ] ॥

---

प्र.] क्तप्रत्यये भाववाचिनि विकल्पविधानाद्भाववाचिन्यामेव निष्ठायां प्रतिषेधः स्यान्न कर्तृकर्मवाचिन्याम् । नैष दोषः । 'तेन निवृत्तं', 'निर्वृत्तेऽक्षद्यूतादिभ्य' इति लिङ्गात्प्रत्ययार्थो भेदकत्वेन नाश्रीयते । [ **आदितश्च** ] ॥

क्षुब्ध । **क्षुब्धमिति** । यदि धात्वर्थोपाधित्वेन मन्थादय आश्रीयेन्'मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपात्यन्ते' इति तदा 'क्षुभितं मन्थेने'त्यत्रापि भावे क्तस्येट्प्रतिषेधः स्यादिति समुदायानामभिधेयभावेन मन्थादय इहोपात्ता इति प्रदर्श्यते । द्रवद्रव्यसंपृक्ताः सक्तवो–**मन्थः** । 'क्षुब्धां गिरिनदीमिवे'त्यादयस्तु प्रयोगा असाधव इत्याहुः । **अन्ये** तूपमानमाश्रित्य समर्थयन्ते । **स्वान्तशब्देन बाह्येषु** विषयेष्वविक्षिप्तमनाकुलं मन उच्यते । [ **क्षुब्धस्वान्तध्वान्त** ] ॥

---

उ.] **रपीति** । तथाच सूत्रवैयर्थ्यं स्यादिति भावः। **प्रत्ययार्थो भेदकत्वेनेति** । शब्देनाश्रीयमाण उपाधिरेव भेदक इत्यनेन ज्ञाप्यते । साहचर्यलभ्योऽपि शब्दोपात्त एव । क्तो भाववाचित्वं तु न शब्देनाश्रितमिति भावः । [ **आदितश्च** ] ॥

क्षुब्धस्वान्त । ननु 'मन्थादयोऽर्थाः सूत्र एव क्रमेणोपात्ता' इति 'मन्थाभिधाने' इत्यादि व्यर्थमत आह–**यदीति । द्रवद्रव्येति** । तथा च 'दधिमन्थान्मधुमन्थांश्चे'ति प्रयुज्यते । मन्थादिषु क्षोभणादिक्रियायोगो यथाकथञ्चिद्द्रष्टव्यः । **उपमानमिति** । सादृश्यञ्च यथासंभवं द्रष्टव्यं । सूत्रे मनःशब्देन विशिष्टं मन उच्यते, तत्रैव स्वान्तप्रयोगादित्याह—**बाह्येष्विति** । [ क्षुब्धस्वान्तध्वान्त ] ॥

---

१ एवं जातीयकानि वार्तिकानि प्रायो लुप्तानि । २ अयं कोष्ठान्तर्गतः पाठो मुद्रितेषु सर्वेषु पुस्तकेषु त्रुटितः । लिखितानुरोधादौचित्याच्च हन्त गौडैरुद्धृतः ।

## धृषिशसी वैयात्ये ॥७।२।१९॥

किमिदं वैयात्य इति ? ॥ ॥*॥ वियातभावो वैयात्यम् ॥*॥

## दृढः स्थूलबलयोः ॥७।२।२०॥

दृढ [ इति ] निपातनं किमर्थं, न दृहेर्नेङ्ङवतीत्येवोच्येत ॥*॥ दृढनिपातनं नकारहकारलोपार्थं 'परस्य च ढत्वार्थम्' ॥*॥ दृढनिपातनं क्रियते, [ किमर्थं ? ॥ ] 'नकारहकारलोपार्थम्'। नकारहकारलोपो यथा स्यात्। [ परस्य च ढत्वार्थम् ' ]। परस्य च ढत्वं यथा स्यात्। ॥*॥ अनिड्वचने हि रभावाऽप्रसिद्धिरलघुत्वात् ॥*॥ अनिड्वचने हि रभावस्याऽप्रसिद्धिः स्यात्। द्रढीयान् ॥ किं कारणम् ? ॥ 'अलघुत्वात्' ॥*॥ नलोपवचने च ॥*॥ नलोपश्च वक्तव्यः। इह च परिद्रढय्य गतः—'ल्यपि लघुपूर्वस्ये'त्ययादेशो न स्यात्। इह च पारिदृढी कन्येति—गुरूपोत्तमलक्षणः ष्यङ्प्रसज्येत ॥

---

प्र.] धृषिशसी। वियातभाव इति। विरूपं यातं गमनं चेष्टितं यस्य स वियातोऽविनीतः ॥ [ धृषिशसी वैयात्ये ] ॥

दृढः स्थूल। न दृहेरिति। 'दृह दृहि वृह वृह वृद्धा'विति धातुषु पठ्यते। तत्र 'दृहः स्थूलबल्यो'रिति इट एव प्रतिषेधो विधेय इति मत्वा प्रश्नः। दृढनिपातनमिति। 'दादेर्धातोर्घ' इति घत्वस्य प्रतिषेधो वक्तव्यः स्यात्। अनिड्वचने हीति। यदीटो घत्वस्य च प्रतिषेधो विधीयेत ततो ढत्वष्टुत्वढलोपेषु यद्यपि 'दृढ' इति रूपं सिध्यति तथापि 'पूर्वत्रासिद्ध'मिति ढलोपस्याऽसिद्धत्वात्संयोगे गुर्विति गुरुसंज्ञायां सत्यां तन्निबन्धनकार्यप्रसङ्गो, लघुसंज्ञाहेतुकार्याऽप्रसङ्गश्च। द्रढीयानिति। रविधौ पृथुमृद्वित्यादिपरिगणनमनपेक्ष्योच्यते। परिगणने हि विशेषणानां प्रत्याख्यानाद्रभावः सिध्यति। नलोपवचनं चेति। दृंहेरिदित्वान्नलोपो न प्राप्नोति। दृहेस्तु स्थूलबल्योरपि 'दृहित'मितीष्यते। 'दृहि वृहि वृद्धा'विति द्वावेव धातू पठ्येते इति वार्तिककाराभिप्रायं केचिदाहुः। तथा च 'बृंहेरच्यनिटी'ति नलोपमुक्तवान्। भाष्यकारस्त्वेतद्वचनप्रत्याख्यानाद्धातुचतुष्टयमियेष। पारिदृढीति। 'इतो मनुष्यजाते' रिति ङीष् ॥ [ दृढः स्थूलबलयोः ]।

---

उ.] दृढः स्थू। प्रकृतकार्यात्कार्यान्तरसिद्ध्यर्थं हि निपातनं, तन्नेह पश्याम इत्याशयेनाह—दृहेति। 'दादेर्धातो'रित्यस्य—'अन्यथे'त्यादिः। भाष्येऽनिड्वचन इत्युपलक्षणमित्याह—यदीट इति। 'लघुसंज्ञाहेत्वि'ति बहुव्रीहिः। कार्याऽप्रसङ्गश्चेति। घत्वप्रतिषेधारंभगौरवञ्चेत्यपि बोध्यम्। दृहेस्त्विति। दृहेर्निपातनाश्रयणादित्यर्थः। केचिन्मतं खण्डयति—भाष्यकारस्त्विति। अत्र नलोपग्रहणाऽप्रत्याख्यानात्तस्य दृहेर्दृहितमित्येवेष्टमिति गम्यते। एतद्वचनेति। 'बृंहेरच्यनिटी'त्येतदित्यर्थः। इतो मनुष्येति। 'परिदृढस्याऽपत्यमित्यत इञ्। [ दृढः ] ॥

---

१ इदं भाष्यमित्यन्ये। २ अयमंशः क्वचिन्न। ३ 'चः' क्वचिन्न।

## प्रभौ परिवृढः ॥७।२।२१॥

'परिवृढ' इति किमर्थं निपात्यते, न परिपूर्वाद्वृहेर्निङ्वतीत्येवोच्येत । ॥*॥ परिवृढनिपातनं च ॥*॥ [ परिवृढ इति निपातनं च ] ॥ किम् ? ॥ "नकारहकारलोपार्थं परस्य च ढत्वार्थम्, अनिड्वचने हि रभावाऽप्रसिद्धिर-लघुत्वात्, नलोपवचनं चे"त्येव ॥ परिव्रढीयानिति 'र ऋतो हलादेर्लघो'रिति रभावो न स्यात् । इह च 'परिव्रढय्य गत' इति, 'ल्यपि लघुपूर्वस्ये'त्यया-देशो न स्यात्। इह च 'पारिवृढी कन्ये'ति गुरूपोत्तमलक्षणः ष्यङ्प्रसज्येत ॥

## घुषिरविशब्दने ॥ ७।२।२३ ॥

किमर्थमविशब्दन इत्युच्यते, न विशब्दने चुरादिणिचा भवितव्यम् ॥ एवं तर्हि सिद्धे सति यदयमविशब्दन इत्याह तज्ज्ञापयत्याचार्यो–'विशब्दने घुषेर्विभाषा णिज्भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ "महीपाल-वचः श्रुत्वा जुघुषुः पुष्यमाणवाः"–एष प्रयोग उपपन्नो भवति ॥

---

प्र. ] प्रभौ परि। परिव्रढय्येति। कथं पुनरत्र ल्यबादेशो यावता परिवृढमाचष्ट-इति णिचि कृते क्त्वाप्रत्यये च क्त्वान्तस्य कृदन्तत्वात्तत्रैव परेरन्तर्भावात्पुनःसमासा-ऽभावः । नैष दोषः । सङ्ग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमा-त्परिशब्दं पृथक्कृत्वा वृढशब्दादेव णिच् क्रियते ततो वृढिशब्दस्य धातुत्वात् क्त्वाप्रत्यये कृते परेः क्त्वान्तेन कृदन्तेन समास इति सिद्धो ल्यबादेशः। णाविष्ठवद्भावाद्रभावः ॥

घुषिरवि । किमर्थमिति । घुषिरविशब्दार्थ इति भ्वादौ पठ्यते स विशब्दने नैव वर्तते । यस्तु 'घुषिर्विशब्दने' इति चुरादौ पठ्यते तस्माण्णिचा भवितव्यम् । केवलश्चेह घुषिरुपात्त इति नार्थो विशब्दनप्रतिषेधेन । विशब्दनं–स्वाभिप्रायस्य शब्देन प्रकाशनमुच्यते । एवं तर्हीति । अविशब्दन एवेडभावे सिद्धे इत्यर्थः । किमेतस्येति । किं निष्ठायामेव 'घुषितं' 'घोषित'मिति रूपद्वयसिद्धिः प्रयोजनम-थाऽन्यदपीति प्रश्नः। जुघुषुरिति। घोषयांचक्रुरित्यपि भवति । अन्ये त्वनित्यण्यन्ता-श्चुरादय इति सामान्येन ज्ञाप्यत इत्याहुः। के चिच्चिति स्मृत्यामिति इदित्त्वं चुरादि-णिचोऽनित्यत्वस्य ज्ञापकमाहुः। इदित्त्वेन नुम्विधाने प्रयोजनं 'चिन्तित' इत्यादौ नलो-पाऽभावः । यदि च चुरादिणिग्नित्यं स्यात्तदा 'चिन्त स्मृत्या'मित्येव पठ्येत, णिचि सति नलोपाऽप्रसङ्गात् ॥ [ घुषिरविशब्दने ] ।

---

उ. ] प्रभौ । परेरन्तर्भावादिति। परिवृढशब्दाण्णिचि तदन्तसमुदायस्य धातु-त्वात्तत एव क्त्वेति क्त्वान्तेन समासाऽभाव इत्यर्थः । [ प्रभौ परिवृढः ] ॥

घुषिर । केवलश्चेति । ण्यन्तनिर्देशे तु 'घोषि'रिति स्यादिति भावः । नार्थ इति । अविशब्दन एव घुषेर्वृत्तेरित्यर्थः । नलोपाऽप्रसङ्गादिति । न च ण्यन्तात्क्विपि नलोपाऽभावाय तत्, स्थानिवत्त्वं तु कौलुप्ते क्वौ विधौ च निषिद्धमिति

---

१ 'परिव्रढी' । २ 'घुषेरवि' पाठो युक्तः । ३ 'पुष्प' । ४ 'दृढ' । ५ 'दृढि' पा० ।

णेरध्ययने वृत्तम् ॥ ७।१।२६ ॥

किं पुनरिदमध्ययनाऽभिधायिकायां[1] निष्ठायां निपातनं क्रियते आहोस्विदध्ययने चेद्वृतिर्वर्त्तत इति ? ॥ किं चातः ? ॥ यद्यध्ययनाभिधायिकायां निष्ठायां[2] निपातनं क्रियते, सिद्धं 'वृत्तो गुणः' 'वृत्तं पारायणम्'। 'वृत्तं[3] गुणस्य' 'वृत्तं पारायणस्ये'ति न सिध्यति ॥ अथ विज्ञायते—'अध्ययने चेद्वृतिर्वर्त्तत'इति न दोषो भवति ॥ यथा न दोषस्तथास्तु ॥ 'अध्ययने चेद्वृतिर्वर्त्तत'इत्यपि वै विज्ञायमाने न सिध्यति ॥ किं कारणम् ? ॥ वृतिरयमकर्मकः ॥ अकर्मकाश्चापि ण्यन्ताः सकर्मका भवन्ति, अकर्मकश्चात्र वृतिः ॥

कथं पुनर्ज्ञायतेऽकर्मकोऽत्र वृति'रिति ? ॥ 'अकर्मकाणां भावे क्तो

प्र.] णेरध्ययने । किं पुनरिति । किमभिधेयत्वेन क्तान्तस्याध्ययनमाश्रीयते अथ धात्वर्थसाधनत्वेनेति प्रश्नः । अध्ययने चेदिति । अध्ययनविषये धात्वर्थ इत्यर्थः । वृत्तो गुण इति । अध्ययनसामान्यं वृत्तशब्दस्याभिधेयं न तु तद्विशेष इति विशेषवाचिशब्दप्रयोगाऽविरोधः । गुणः—पदक्रमसंहितारूपोऽध्ययनविशेषः, वृत्तो निष्पादित इत्यर्थः ।

वृत्तं गुणस्येति । भावे निष्ठा । तस्या अध्ययनं नाभिधेयमिति वृत्तशब्दप्रयोगाऽप्रसङ्गः । न सिध्यतीति । ण्यन्तस्येति भावः । ण्यन्तस्य सकर्मकत्वाद्वृत्तं गुणस्येति भावे निष्ठाया अप्रसङ्गात्, 'तयोरेव कृत्यक्तखलर्थाः' इत्यत्र 'भावेऽकर्मकेभ्य' इत्यनुवर्तनात् । वृतिरयमिति । केवलस्य सकर्मकत्वाशङ्कां निराकृत्य ण्यन्तस्य सकर्मकत्वं प्रातिपादयति । प्रयोज्यमन्तरेण णिचोऽभावात्तेनाऽस्य सकर्मकत्वम् । तत्रैतत्स्याद्भवतु सकर्मकत्वं, कर्मण्येवात्र निष्ठा भवत्वित्यत आह—अकर्मकश्चात्रेति । 'वृत्तं गुणस्ये'त्यादावित्यर्थः । अकर्मकाणामिति । भावे क्तविधानादकर्मकत्वं प्रतीयत इत्यर्थः । कर्मणि क्ते 'वृत्तो गुण' इति सामानाधिकरण्येन भाव्यं, भावे तु-

उ.] वाच्यम्, 'असिद्धवदत्रे'ति णिलोपस्याऽसिद्धत्वात् । अत्रान्येत्वित्यादिमतद्वयेऽस्यरुचिबीजं तु—गणेर्नित्यण्यन्तत्वपर'णेरणा'विति सूत्रस्थभाष्यविरोधः । 'घुषेर्विभाषे'ति प्रकृतसूत्रस्थभाष्यविरोधश्च । इरित्त्वेनैव इदित्त्वेनेव विकल्पस्य सिद्धत्वादेतज्ज्ञापकोपन्यासस्याऽयुक्तत्वापत्तिश्च । कुड्यादीनामिदित्त्ववदेतदिदित्त्वस्याऽपि सत्त्वञ्च । इरित्त्वमपि धात्वन्तरत्वाऽभावबोधनाय । तस्माच्चिन्ततीत्यादेः साधुत्वं चिन्त्यमेव । [घुषिर] ॥

णेरध्ययने । किमभिधयत्वेनेति । अध्ययनशब्दो बाहुलकात्कर्मल्युडन्तो ग्रन्थवाचीति भावः । अतएव वक्ष्यति—संहितारूपोऽध्ययनविशेष इति ।

नन्वेवमध्ययने चेद्वृतिर्वर्तत इति भाष्यमनुपपन्नमत आह—अध्ययनविषये इति । भावे निष्ठेति । 'वृत्तङ्गुणस्ये'ति 'नपुंसके भावे क्तस्य योगे उपसङ्ख्यान'मिति षष्ठी, शेषलक्षणा वा । ण्यन्तस्येतीति । 'णे'रित्युक्त्या ण्यन्तस्येदं निपातनमिति लभ्यत इत्यर्थः । 'वृतिरय'मित्यादेर्वैयर्थ्यं परिहरति—केवलस्येति । अकर्मकाणां

१ 'किमिदमध्य' पा० । २ इदं क्वचिन्न । ३ 'वृत्तो' पा० ।

भवती'त्येवमत्र भावे क्तो भवति। तत्र उदितः क्त्वि विभाषा,[2] 'यस्य विभाषे'ति इट्प्रतिषेधो भविष्यति ॥ अथ णिग्रहणं किमर्थम् ? ॥

॥*॥ वृत्तनिपातने णिग्रहणमण्यन्तस्याऽवधारणप्रतिषेधार्थम्[3] ॥*॥ वृत्त-निपातने णिग्रहणं क्रियते ॥ [ किं प्रयोजनम्[4]? ॥ 'अण्यन्तस्याऽवधारणप्रतिषे-धार्थम्' ] । अण्यन्तस्याऽवधारणं माभूदिति ॥ कैमर्थक्यान्नियमो भवति ? ॥ विधेयं नास्तीति कृत्वा ॥ इह चास्ति विधेयं ॥ किम् ? ॥ ण्यधिकाद्वृते-रिट्प्रतिषेधो विधेयः । तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधि-र्भविष्यति न नियमः ॥ कुतो नु खल्वेतदधिकार्थ आरम्भे सति ण्यधिकस्य भविष्यति न पुनः[5] सनधिकस्य वा स्याद्यङधिकस्य वेति ? ॥ तस्माण्णि-ग्रहणं[6] कर्तव्यम् ॥ अथ किमर्थं निपातनं क्रियते ? ॥*॥ निपातनं णिलोपेड्गुणप्रतिषेधार्थम् ॥*॥ निपातनं क्रियते । [ किमर्थम् ? ॥ णिलोपेड्गुण-

प्र.] क्ते शेषविवक्षायां षष्ठी भवति। तस्मान्नैतण्ण्यन्तस्य वृते रूपमपि तु केवलस्य। तस्य च 'यस्य विभाषे'तीट्प्रतिषेधोऽस्त्येव । एवं चाध्ययनमभिधेयं भवतु, विषयो वेति न कश्चिद्दोषः। अत्राहुः–'वृतं गुणस्ये'ति सकर्मकादपि ण्यन्तान्नपुंसके भावे क्त इति भावे क्तोऽस्त्येव । यस्तु 'निष्ठे'ति भूते क्तः स एवाऽकर्मकेभ्यो भावे भवति । 'वृत्तं गुणस्ये'त्यत्र च वर्तमानत्वं प्रतीयते न भूतत्वम् । अत्रोच्यते–'नपुंसके भावे क्त' इत्ययमपि क्तः सकर्मकेभ्यो न भवति, 'तयोरेव कृत्यक्तखलर्थाः' इत्यत्र क्त-मात्रस्य ग्रहणात्तत्र च भावे चाकर्मकेभ्य इत्यनुवर्तनात् । अवश्यं चैतद्बोद्धव्यम्,अन्यथा 'नपुंसके भावे उपसङ्ख्यान'मित्यस्मिन् 'शेषविज्ञानात्सिद्ध'मिति प्रत्याख्याते सकर्मका-द्भावे क्ते विधीयमाने कर्मणो द्वितीया प्रसज्येत,–'ग्रामं गतमोदनं भुक्त'मिति ।

**अथ णिग्रहणमिति।** केवलस्य 'यस्य विभाषे'ति प्रतिषेधस्य सिद्धत्वात् सामर्थ्या-ण्ण्यन्तस्य निपातनं विज्ञास्यते । **वृत्तनिपातन इति** । असति णिग्रहणे ण्यन्त-स्यैवेदं निपातनं न तु सन्नन्तस्य यङन्तस्य वेति निश्चयाऽभावाद्विधिरशक्योऽभ्युपग-

उ.] भावे क्तो भवतीत्यादेरकर्मकत्वे हेतुत्वमुपपादयति–**भावे क्तेति।** **एवञ्चेति।** 'वृत्तं गुणस्ये'त्यस्य सिद्धत्वादिति भावः। 'वृत्तं गुणस्ये'त्यत्र निष्ठेति क्तप्रत्ययः किं न स्यादत आह–**वृत्तं गुणस्येत्यत्रेति।** **प्रसज्येत–ग्रामं गतमिति** । अत्र गत्यर्थाकर्मकेति क्ते क्तोऽधिकरणे चेति च क्तेऽयं प्रयोगो दुर्वार एव । अत एव 'भ्रान्तं देश'मित्यादि-सिद्धिरिति चिन्त्यमिदमिति केचित् । ननु केवलस्य निपातनाऽभावाय णिग्रहणं स्या-दत आह—**केवलस्येति । विधिरशक्य इति।** ण्यन्तस्यैव वृतेर्ग्रहणे हि तस्य निष्ठायां णिलोपेड्प्रतिषेधयोर्लक्षणान्तरेणाऽप्राप्त्या तद्विध्यर्थमिदं स्यान्नाऽन्यथेत्यर्थः ।

१ इदं क्वाचित्कम् । २ 'न विभाषा' पा० । ३ इदं प्रायो लुप्तम् । ४ इदं क्वचिन्न । ५ 'न पुनः सन्नधिकस्य भविष्यति। सन्नधिकस्य वा' पा० । ६ 'णिज्ग्रहणं' ।

प्रतिषेधार्थम्' ] । णिलोपार्थमिड्गुणप्रतिषेधार्थं च ॥ [ णेरध्ययने वृत्तम् ] ॥

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ ७।२।२७ ॥**

अथ[1] दान्तशान्तयोः किं निपात्यते ? ॥*॥ दान्तशान्तयोरुपधादीर्घत्वं च ॥*॥ [ दान्तशान्तयोरुपधादीर्घत्वञ्च ]॥ किं 'च' ? ॥ 'णिलोपेड्प्रतिषेधौ च' ॥ उपधादीर्घत्वमनिपात्यं, वृद्ध्या सिद्धम् ॥ न सिध्यति, 'मितां ह्रस्व' इति ह्रस्वत्वेन भवितव्यम् ॥ एवं तर्ह्यनुनासिकस्य क्विझलोः क्ङितीत्येवात्र[2] दीर्घत्वं भविष्यति ॥ न सिध्यति ॥ किं कारणम् ? ॥ णिचा व्यवहितत्वात् ॥ णिलोपे कृते नास्ति व्यवधानम् ॥ स्थानिवद्भावाद्व्यवधानमेव ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति ॥

अथ स्पष्टच्छन्नयोः किं निपात्यते ? ॥*॥ स्पष्टच्छन्नयोरुपधाह्रस्वत्वं च ॥*॥ [ स्पष्टच्छन्नयोरुपधाह्रस्वत्वं च ] ॥ किं 'च' ? ॥ णिलोपेड्प्रतिषेधौ च ॥

**रुष्यमत्वरसंघुषास्वनाम् ॥७।२।२८॥**

॥*॥ घुषिस्वनोर्वावचनमिड्प्रतिषेधाद्विप्रतिषेधेन ॥*॥ घुषिस्वनोर्वावचनमिड्प्रतिषेधाद्भवति विप्रतिषेधेन । घुषेरिड्प्रतिषेधस्याऽवकाशः—असंपूर्वादविशब्दनम्—घुष्टा रज्जुः घुष्टो मार्ग[4]ः । वावचनस्यावकाशः—संपूर्वाद्विशब्दनम्—संघुष्टं वाक्यं संघुषितं वाक्यम् । संपूर्वादविशब्दने उभयं प्राप्नोति—

---

प्र.] न्तुमिति नियमो विज्ञायेत । **णिलोपार्थमिति** । 'निष्ठायां सेटी'ति वचनादनिटि निष्ठायां णिलोपो न प्राप्नोति । 'णेरनिटी'त्यनेनापि तक्रकौण्डिन्यन्यायेन सेटि निष्ठायां विधीयमानेन णिलोपेनाऽनिटि निष्ठायां णिलोपस्य बाधनात्, प्रत्ययलक्षणेन प्राप्तस्य गुणस्येटश्चाऽभावो निपात्यते । [ **णेरध्ययने वृत्तम्** ] ॥

**वा दान्त । उपधादीर्घत्वमिति** । 'पूर्वत्रासिद्धे न स्थानिव'दिति वक्तव्यम् । तस्मिंश्चोच्यमाने द्विर्वचनादीनि वरेयलोपस्वरवर्जं न वक्तव्यानीति दीर्घविधौ स्थानिवत्त्वनिषेधाऽभावादनुनासिकस्य क्विझलोः क्ङितीति दीर्घत्वाऽप्रसङ्गः । सूत्रारम्भाश्रयेण तु दीर्घसिद्धिं भाष्यकृन्मन्यते ॥ [ **वा दान्तशान्त** ] ॥

---

उ.] **नियम इति** । 'अध्ययन एवेत्येव'मित्यर्थः। भाष्ये–**णिलोपार्थमिति** । वस्तुतो णिलुगेव निपात्यः । एवं हि गुणप्रतिषेधो न निपात्यः । यद्यपि 'वृत्तो गुण' इति प्रयोगोऽन्तर्भावितण्यर्थमादाय सिद्धस्तथापि ण्यन्तस्याऽनिष्टप्रयोगनिवृत्त्यर्थं सूत्रमिति तत्त्वं । **तक्रकौण्डिन्येति** । येन नाप्राप्त्यभावादिदं चिन्त्यं । 'निष्ठायां सेटी'त्यत्र 'सेटी'ति योगविभागेन सेट्येव निष्ठायामिति नियमान्नेति वक्तुं युक्तम् । अतएव तत्र सूत्रे भाष्ये उक्तं–'सेड्ग्रहणमनिटि प्रतिषेधार्थं—संज्ञपितः पशु'रिति । [ **णेरध्य** ]।

**वा दान्त** । 'द्विर्वचनादीनि वरेयलोपस्वरवर्जं ने'ति पाठः । **सूत्रारंभाश्रयेणेति** । 'न पदान्ते'ति सूत्रे दीर्घग्रहणारंभेत्यर्थः । **भाष्यकृन्मन्यत इति** । वस्तुत

---

१ 'अथे'ति प्रायिकम् । २ 'त्येवमत्र' पा० । ३ चः क्वचिन्न । ४ 'मार्गः' पा० ।

सघुष्टा रज्जुः संघुषिता रज्जुः । वावचनं भवति विप्रतिषेधेन ॥

स्वन इट्प्रतिषेधस्यावकाशः—अनाङ्पूर्वान्मनोऽभिधानं—स्वान्तं मनः । वावचनस्यावकाशः—आङ्पूर्वादमनोऽभिधानम्—आस्वान्तो देवदत्तः आस्वनितो देवदत्तः । आङ्पूर्वान्मनोभिधान उभयं प्राप्नोति—आस्वान्तं मनः आस्वनितं मनः । वावचनं भवति विप्रतिषेधेन ॥ [ रुष्यमत्वरसंघुषास्वनाम् ] ॥

## हृषेर्लोमसु ॥७।२।२९॥

॥*॥ हृषेर्लोमकेशकर्तृकस्य ॥*॥ हृषेर्लोमकेशकर्तृकस्येति वक्तव्यम् । हृष्टानि लोमानि हृषितानि लोमानि । हृष्टं लोमभिः हृषितं लोमभिः । हृष्टाः केशाः हृषिताः केशाः । हृष्टं केशैः हृषितं केशैः ॥ [ ॥*॥ विस्मित-प्रतिघातयोः ॥*॥ ] ॥ विस्मितप्रतिघातयोरिति वक्तव्यम् । हृष्टो देवदत्तः । हृषितो देवदत्तः । हृष्टा दन्ताः । हृषिता दन्ताः ॥ [ हृषेर्लोमसु ] ॥

## अपचितश्च ॥७।२।३०॥

'अपचित' इति किं निपात्यते ? ॥ [ ॥*॥ चायेश्चिभावश्च ॥*॥ ] चाये-श्चिभावो निपात्यते । अपचितः । [ ॥*॥ क्तिनि नित्यम् ॥*॥ ] ॥ क्तिनि नित्यमिति वक्तव्यम् । अपचितिः ॥ [ अपचितश्च ] ॥

## आर्धधातुकस्येड्वलादेः ॥७।२।३५॥

'आर्धधातुक'ग्रहणं किमर्थम् ? ॥ वलादिग्रहणमार्धधातुकविशेषणं यथा विज्ञायेत—'वलादेरार्धधातुकस्ये'ति ॥ अथाऽक्रियमाणे आर्धधातुकग्रहणे कस्य वलादिग्रहणं विशेषणं स्यात् ? ॥ अङ्गस्येति वर्ततेऽङ्गविशेषणम् ॥

तत्र को दोषः ? ॥ अङ्गस्य वलादेरादित इट्प्रसज्येत—अडाट्वत् । तद्यथा—अडाटावङ्गस्यादितो भवतस्तद्वत् ॥ क्रियमाणेऽप्यार्धधातुकग्रहणेऽनिष्टं शक्यं

---

प्र. ] हृषे [ र्लोमसु ] । सूत्रकारो लोमशब्दं सामान्यशब्दं मत्वा केशग्रहणं न कृतवान् । तथा च 'लोमनखं स्पृष्ट्वा शौचं कर्तव्य'मित्युक्ते केशस्पर्शेऽपि शौचं क्रियते । वार्तिककारस्तु मूर्द्धजाः केशाः, अङ्गान्तरजातानि लोमानीति भेदं मत्वा आह—हृषेर्लोमकेशकर्तृकस्येति । [ हृषेर्लोमसु ] ॥

अपचित । चिभाव इति । एतच्चोपलक्षणमिट्प्रतिषेधस्यापि निपातनात् । क्तिनीति । 'क्तिन्नावादिभ्य' इति क्तिन्प्रत्ययोऽयम् , अन्यथा 'गुरोश्च हल' इत्यकारः स्यात् ॥

---

उ.]एतद्भाष्याद्वरेयलोपस्वरवर्जमित्यत्र दीर्घग्रहणमप्युपलक्ष्यते इति परे। [वादान्त]।

हृषे । भेदं मत्वेति । तथा च प्रयोगोऽपि'—केशश्मश्रुलोमनखान्युदवसन्नानि कुर्वी'ति ।' [ वा दान्त ]

---

१ इदं सर्वत्र लुप्तम् । २ 'चायः' पा० । ३ इदं संप्रति लुप्तम् । ४ 'यथा वलादि' पा० । ५ 'अनिष्टः शक्यो' पा० ।

विज्ञातुं—वलादेरार्धधातुकस्य यदङ्गमिति । अक्रियमाणे चेष्टम्–'अङ्गस्य यो-वलादि'रिति ॥ किं चाङ्गस्य वलादिः ? ॥ निमित्तं,–यस्मिन्नङ्गमित्येतद्भवति ॥ कस्मिन्नङ्गमित्येतद्भवति[1] ? ॥ प्रत्यये ॥ यावता क्रियमाणेऽपि चाऽनिष्टं विज्ञायते, अक्रियमाणे चेष्टं, तत्राऽक्रियमाणे एवेष्टं विज्ञास्यामः ॥ इदं तर्हि प्रयोजनम्—इह मा भूत्—आस्ते शेते ॥ एतदपि नास्ति प्रयोजनं–रुदादिभ्यः सार्वधातुक इत्येतन्नियमार्थं भविष्यति—'रुदादिभ्य एव सार्वधातुक इड्भवति नान्येभ्य' इति ॥ एवमपि वृक्षत्वं वृक्षता–अत्र प्राप्नोति ॥ नैष दोषः ॥ धातोरिति वर्तते ॥ एवमपि लूभ्यां पूभ्याम्–अत्र प्राप्नोति ॥ एवं तर्हि विहितविशेषणं धातुग्रहणं—धातोर्यो विहितः ॥ ननु च[3] धातोरेवाऽयं विहितः ॥ न चायं 'धातो'रित्येवं विहितः ॥ क पुनर्धातुग्रहणं प्रकृतम् ? ॥ 'ऋत इद्धातो'रिति ॥ तद्वै षष्ठीनिर्दिष्टं पञ्चमीनिर्दिष्टेन चेह विहितैः[4] शक्यते विशेषयितुम् ॥ अथेदानीं षष्ठीनिर्दिष्टेनचापि विहितैः शक्यते विशेषयितुम् । शक्यमार्धधातुकग्रहणमकर्तुमिति ॥ * ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥७।२।१॥

---

प्र.] आर्धधातु। रुदादिभ्य एवेति । 'सार्वधातुक एवे'ति तु नियमो 'रुदविदे'ति क्त्वासनोः कित्वविधानान्न भविष्यति,अनिटः सनो रुदादेर्हलन्ताच्चेति कित्त्वस्य सिद्धत्वात्, क्त्वोप्यनिट औपदेशिककित्त्वसद्भावात् । लूभ्यामिति । क्विबन्ता धातुत्वं न जहति, रूपार्थाऽवैकल्यात् । विहितविशेषणमिति । यद्यपि ऋत इद्धातोरित्यत्र धातुशब्दोऽर्थपदार्थकस्तथापि सदृशशब्दान्तरानुमानादिह धातोरित्येतत्स्वरूपपदार्थकमाश्रीयते—धातोरित्येवं विहितस्येति । पञ्चमीनिर्दिष्टेनेति । पञ्चम्यन्तानुकरणे धातोरित्यस्मिन् 'धातोरित्येवं विहितस्ये'ति लभ्यते नान्यथा । अथेदानीमिति । धातुशब्दोऽत्र धातुशब्दस्यानुकरणं, तेन धातुशब्दस्य यः संबन्धी प्रत्ययस्तस्येड् भवति । यश्च धातुशब्दव्यापारोत्पन्नः स तत्संबन्धी भवति ॥

*इति कैयटकृते महाभाष्यप्रदीपे सप्तमस्य द्वितीये प्रथममाह्निकम् ॥ ७।२।१।*

---

उ.] आर्धधातुकस्ये । रूपार्थेति । तत्र रूपाऽवैकल्यं स्पष्टमेव । अर्थो यद्यपि कर्तृरूपोऽधिकस्तथापि धातुत्वप्रयोजकक्रियारूपस्याऽवैकल्यमस्त्येवेति भावः । यद्यपि तस्या उपसर्जनत्वं, तथाप्यत्वसन्तस्येति सूत्रेऽधातोरिति निषेधेन भूवादिसूत्रे उपसर्जनभूताया अपि ग्रहणज्ञापनान्न दोषः । सदृशशब्दान्तरेति । शब्दाधिकारपक्ष आश्रीयत इत्यर्थः । पञ्चम्यन्तानुकरण इति । प्रत्ययविधौ पञ्चम्यन्तस्य धातोरित्यस्याधिकारादिति भावः । *इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते सप्तमस्य द्वितीये पादे प्रथममाह्निकम् ॥ * ७।२।१।

---

१ 'कस्मिंश्चैतद्भवति' पा० । २ इदं क्वाचित्कम् । ३ चः क्वचिन्न । ४ 'विहितं' पा० ।

## स्नुक्रमोरनात्मनेपदनिमित्ते ॥७।२।३६॥

॥*॥ स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसङ्ख्यानम् ॥*॥ **स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसङ्ख्यानं कर्तव्यम्। प्रस्नविता प्रस्नवितुम् प्रस्नवितव्यम्। प्रक्रमिता प्रक्रमितुम् प्रक्रमितव्यम्॥ तर्त्तर्हि वक्तव्यम्?॥**

**न वक्तव्यम्। अविशेषेण स्नुक्रमोरिडागममुक्त्वा 'आत्मनेपदपरे ने'ति वक्ष्यामि।** ॥*॥ आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधः ॥*॥ **आत्मनेपदपरप्रतिषेधे[च] तत्परपरसीयुडेकादेशेषु प्रतिषेधो वक्तव्यः।** तत्परपरे

---

प्र.] **स्नुक्रमोरना।** स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थं वचनमनात्मनेपदनिमित्तत्वे एवेड्यथा स्यात्, आत्मनेपदनिमित्तत्वे मा भूत्। किति सनि च प्रस्नुतः प्रसुस्नूषतीति, क्रमेश्च निष्ठायां क्रान्त इति, श्र्युकः किति सनि ग्रहगुहोश्च यस्य विभाषेति प्रतिषेध एव भवति। पुरस्तात्प्रतिषेधस्य ह्येतदेव प्रयोजनम्-इण्मात्रस्य प्रतिषेधो यथा स्यादिति। तेन प्रतिषेधबाधनार्थमेतन्न भवति। अथ वा आर्धधातुकस्येड्वलादेरित्यस्यानुवर्तनादयमर्थो भवति-यत्र पूर्वेण इड्विहितस्तत्रैवानेन भवति। पूर्वसूत्रेण (च) प्रतिषेधविषयपरिहारेण इड्विधानात्तत्रैवायं विधिः प्रवर्तमानो नियमाय संपद्यते। अथ वा 'आत्मनेपदनिमित्तत्वे न भवती'ति प्रसज्यप्रतिषेध आश्रीयत इति क्रिदादौ न दोषः। **प्रस्नवितेति।** य एवात्मनेपदविषयः स्नौतिः स एवात्रापि योग्यताश्रयणेन निमित्तव्यवहारदर्शनादात्मनेपदनिमित्तं भवतीति इण्न प्राप्नोतीति वचनम्। कर्मकर्तृविषयश्चाऽत्र स्नौतिरिति कर्मकर्तर्यात्मनेपददर्शनाद्भवति तद्योग्यः। एवं प्रस्नवितुं प्रस्नवितव्यमिति भावकर्मविषयत्वाद्भावकर्मणोरात्मनेपदोपलम्भादात्मनेपदनिमित्तं स्नौतिः। **प्रक्रमितेति।** आदिकर्मणोऽन्यत्र प्रशब्दो विज्ञेयः। आदिकर्मणि तु 'कर्तरि चात्मनेपदविषयात्कृती'ति प्रतिषेधेन भाव्यम्। **प्रक्रमितुं प्रक्र-**

---

उ.] **स्नुक्रमो। आत्मनेपदेति।** प्रस्नोषीष्ट प्रक्रंसीष्टेत्यादौ। ननु कित्सनोः 'श्र्युक'-इत्यादि निषेधे प्राप्ते विध्यर्थमेवेदं स्यादत आह-**किति सनि चेति।** 'श्र्युक' इत्यादिबाधनार्थत्वं तु नास्त्येवेत्याह-**पुरस्तादिति।** निषेधाऽविषये पूर्वेण सिद्ध्या निषेधविषये चाऽस्याऽप्राप्तावस्याऽचरितार्थत्वादनेन नियम इतिभावः। **अथवेति।** अन्यथा निषेधबाधकतया विधित्वमेव स्यान्न नियमत्वं। विधिनियमसंभवे विधेर्ज्यायस्त्वादिति भावः। **अनुवर्तनादिति।** तदनुवृत्तिश्च विषयनिर्देशार्था। तत्फलितमाह-**यत्रेत्यादि।** अनुवृत्तावेवं व्याख्याने च गौरवादाह—**अथवेति। प्रसज्यप्रतिषेध इति।** एवञ्च प्रतिषेधार्थमेव सूत्रं न विध्यर्थं नापि नियमार्थमिति क्रिदादौ न दोष इति भावः। एवं हि पूर्वसूत्रात्पूर्वमेव पठेदिति चिन्त्यम्। **योग्यताश्रणेनेति।** न तु कुर्वद्रूपताश्रयणेनैवेत्यर्थः। कुसूलस्थेष्वपि बीजेष्वङ्कुरनिमित्तानीति व्यवहारात्।

ननु कर्तरि तृचो विधानेन भावकर्मविषयत्वाऽभावात्कथमात्मनेपदयोग्यता स्नौतेरत आह-**कर्मकर्तृविषयश्चेति। अत्र-**प्रस्नवितेत्यत्र। **भावेत्यादि।** तुमुन्तव्ययोर्भावादौ

तावत्–**प्रसुस्नूषिष्यते। प्रचिक्रंसिष्यते।** सीयुटि–**प्रस्नोषीष्ट प्रक्रंसीष्ट।** एकादेशे–**प्रस्नोष्यन्ते । प्रक्रंस्यन्ते । एकादेशे कृते व्यपवर्गाऽभावान्न प्राप्नोति ॥ अन्तादिवद्भावेन व्यपवर्गः॥ उभयत आश्रये नान्तादिवत् ॥**

प्र.] **मितव्यमिति ।** भावकर्मविषयत्वात्प्रारम्भविषयत्वाद्वा आत्मनेपदनिमित्तत्वम् ।

**प्रसुस्नूषिष्यत इति।** आत्मनेपदपरः स्यस्तत्परः सन्निति स्येन व्यवधानात्सन इड्प्रतिषेधो न प्राप्नोति । ननु च व्यवहितेऽपि परशब्दस्य वर्तनात्प्रतिषेधो भविष्यति । नैतदस्ति । 'आत्मनेपदपरे ने'ति न सूत्रन्यासः, किं तर्ह्यर्थप्रदर्शनपरमेतत् । 'स्नुक्रमोर्नात्मनेपदे'इति तु सूत्रन्यासः । तत्र 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानाद्व्यवहितस्य प्रतिषेधाऽप्रसङ्गः । ननु च'सनिग्रहगुहोश्चे'ति प्रतिषेधो भविष्यति । न ह्ययमिड्विधिः पूर्वप्रतिषेधविषय इति प्रागेवोक्तम् । यदप्युक्तम्–अविशेषेणेति,–तस्याऽयमर्थः–पूर्वसूत्रेण यः स्नुक्रमोरविशेषेणेडुक्तस्तमनूद्यात्मनेपदपरे प्रतिषेधो विधेयः । एवं तर्हि 'प्रचिक्रंसिष्यते'इत्येतदेवात्रोदाहरणं, स्नौतिस्तु साहचर्यादुदाहृतः। **प्रस्नोषीष्टेति।** आत्मनेपदमेवाऽत्र सीयुडार्धधातुकं, सीयुटस्तद्भक्तत्वात्, न त्वात्मनेपदपरमिति प्रतिषेधाऽप्रसङ्गः। **प्रस्नोष्यन्त इति।** अत्राऽन्तरङ्गत्वान्नित्यत्वाच्च पूर्वमेकादेशेन भाव्यम् । इड्प्रतिषेधस्तु बहिरङ्गोऽनित्यश्च । 'वार्णादाङ्गं बलीय'इत्यनेन त्वेकनिमित्ता प्रवृत्तिर्वार्णस्य प्रतिषिध्यते, न तु भिन्ननिमित्तेति स्या-

उ.] विधानादिति भावः। **आदिकर्मणि क्त्विति।** वार्तिके कर्तरीति कृतो विशेषणम्, आदिकर्मणि प्रारंभविषयत्वादात्मनेपदविषयत्वं बोध्यम् । नन्वादिकर्मणोऽन्यत्र प्रशब्देऽपि नेदमुदाहरणं युक्तम् । अनात्मनेपदनिमित्तत्व एवेट् नात्मनेपदनिमित्तत्व इत्यर्थे हि आत्मनेपदनिमित्तत्वादिडागमाऽप्राप्तौ कृत्युपसङ्ख्यानं कर्तव्यमिति प्रक्रान्तम् । एवञ्चास्य कथमात्मनेपदनिमित्तत्वं, वृत्त्याद्यादायात्मनेपदनिमित्तत्वे तु वक्ष्यमाणवार्तिकेन निषेधो दुर्वार इति चेन्न, दृष्टान्तार्थं तत्सत्त्वात् । प्रक्रमितेतिवत् प्रक्रमितुमित्यादीष्यते तन्न सिध्येदिति 'कृती'ति वक्तव्यमित्याशयात् । वस्तुतस्तदपरामर्शेनेदं भाष्यमिति बोध्यम् । **प्रारंभविषयत्वाद्वेति ।** तत्र हि 'प्रोपाभ्यां समर्थाभ्या'मित्यात्मनेपदं, कर्तृकृतोऽभावान्निषेधविषयाऽभाव इति बोध्यम् ।

**अविशेषेणेति।** 'स्नुक्रमोरात्मनेपदे परे ने'ति न्यासे तात्पर्यम् । 'तत्परपरे'ति वार्तिकस्यात्मनेपदं परमस्मात् तत्परं यस्य तस्य प्रतिषेधो वक्तव्य इत्यर्थः । तदाह–**आत्मनेपदपर इति। ननु चेति ।** 'आत्मनेपदे परे ने'ति न्यासे परशब्दोपादानसामर्थ्येन 'तस्मिन्नि'ति परिभाषानुपस्थानादिति भावः । नन्वस्य कित्सनादिप्रतिषेधविषय आरम्भात्कथमेतद्विषये प्रतिषेधप्राप्तिरत आह—**न ह्ययमिति ।** नानेनेड्विधीयते किन्तर्हि निषेध एव, विधिस्तु पूर्वेणैवेति तस्य प्रतिषेधः स्यादेवेति भावः । अत्रार्थे भाष्यं योजयति—**यदपीति।** 'स्नुक्रमोर्वलाद्यार्धधातुकस्य आत्मनेपदे परत इण्ने'ति वाक्यार्थ इति भावः । **एकनिमित्तेति ।** यथा 'कारक' इत्यत्र

एवं तर्ह्येकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः ॥ तत्परपरसीयुटोस्तर्हि प्रतिषेधो वक्तव्यः ॥*॥ सिद्धंतु स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ [ 'स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात्' । ] । स्नोरात्मनेपदेन समानपदस्थस्य नेड्भवतीति वक्तव्यम् । यदि 'स्नोरात्मनेपदेन समानपदस्थस्येण्न भवती'त्युच्यते–प्रस्नवितेवाचरति 'प्रस्नवित्रीयते'–अत्र न प्राप्नोति ॥

॥*॥ बहिरङ्गत्वाच्च[3] ॥*॥ बहिरङ्गलक्षणमत्रात्मनेपदम् ॥

॥*॥ क्रमेश्च[4] ॥ * ॥ क्रमेश्चात्मनेपदेन समानपदस्थस्येण्न[5] भवतीति वक्तव्यम् ॥ अथ किमर्थं क्रमेः पृथग्ग्रहणं क्रियते न 'स्नुक्रमिभ्या'मित्येवोच्येत ?॥ 'कर्तरि चात्मनेपदविषयात्कृति ने'ति वक्ष्यति तत्क्रमेरेव यथा स्यात्स्नोर्मा

प्र.] देवेडागमः । अत एवेट्यपि कर्तव्ये 'वार्णादाङ्ग'मित्यस्याऽनुपस्थानम् । **एकादेशः पूर्वविधाविति** । ननु चार्धधातुकस्येड्प्रतिषेध उच्यते, न चार्धधातुकमेकादेशात्पूर्वं, व्यपवर्गाऽभावात् । अत्राहुः–'पूर्वस्मादपि विधिः पूर्वविधि'रिति समासाश्रयाददोषः। **प्रस्नवित्रीयत इति** । तृजन्तात् क्यङ् । 'रीङृत'इति रीङादेशः । **बहिरङ्गलक्षणमिति** । तृजन्तादाचारलक्षणे क्रियान्तरे क्यङ् । तत आत्मनेपदम् । इडागमस्तु पूर्वमेव तृजन्तावस्थायामुत्पन्नो न शक्यो निवर्तयितुमित्यर्थः। यद्येवं प्रचिक्रंसिष्यतइत्यत्रा(प्या)त्मनेपदस्य बहिरङ्गत्वात्प्रतिषेधो न प्राप्नोति । नैष दोषः । 'समानपदस्थस्ये'ति वचनादिडागमेन पदावस्थापेक्षणीया। तत्र तृचि विभक्तावुत्पन्नायां लब्धेऽपि पदत्वे आत्मनेपदस्याऽसन्निधानादिडागमः प्रवर्तते । 'प्रचिक्रंसिष्यते'इत्यत्र तु पदावस्थायामेवात्मनेपदसंनिधानात्प्रतिषेधप्रवृत्तिः । **आत्मनेपदविषयादिति** ।

उ.] यण्वृद्ध्योः । अत्र तु प्रत्ययस्येट्, तदवयवस्यैकादेश इति भिन्नाश्रयत्वमिति भावः । **निमित्तशब्दः**–षष्ठीनिर्दिष्टपरः । **ननु चार्धधातुकस्येति** । आदेशावस्थायां व्यपवर्गाऽभावादचः पूर्वत्वमार्धधातुकस्य न संभवति । स्थान्यवस्थायामपि न, द्वयोः स्थानित्वादिति चोद्याशयः । **पूर्वस्मादपीति** । व्यवहितेऽपि पूर्वशब्दस्य वृत्तेः, एकादेशात्तत्स्थानिनो वा पूर्वस्माद्धातोः परस्य विधिरस्तीति न दोषः । वस्तुतः षष्ठीसमासेऽपि किञ्चित्स्थानिनः पूर्वत्वमस्त्येवेति न दोष इति भाष्याशयः । स्थानिभूताच्त्वावैच्छिन्नात्पूर्वग्रहणे तु न मानं । ध्वनितं चेदं 'कृदतिङ्'सूत्रे भाष्ये ।

**स्नोरात्मनेपदेनेति** । स्नुघटितसमुदायघटकमात्मनेपदमादाय यावतः पदसंज्ञा तत्स्थस्य स्नोः परस्य वलाद्यार्धधातुकस्य नेडित्यर्थः । **अत्र न प्राप्नोतीति** । इडित्यर्थः। बहिरङ्गलक्षणत्वाच्चेत्यस्य 'अयं न दोष'–इति शेषः । चस्त्वर्थे। **न शक्य इति** । उत्पन्ननिवृत्तेरशक्यत्वादित्यर्थः । **प्रतिषेधप्रवृत्तिरिति** । वार्तिके प्रत्या-

१ 'विधिं प्रति' पा० । २ अयं पाठो लुप्तःसम्प्रति । ३ भाष्यमिदमित्यन्ये । ४ वार्त्तिकमिदं लुप्तं प्रायः । ५ 'इड्भव' पा०। ६ 'तत्र' पा०। ७ 'ताऽल्वा' पा०।

भूत् । व्यतिप्रस्नविता । व्यतिप्रस्नवितारौ । व्यतिप्रस्नवितारः ॥*॥ कर्तरि चात्मनेपदविषयात्कृति प्रतिषेधः ॥*॥ कर्तरि चात्मनेपदविषयात्कृति प्रतिषेधो वक्तव्यः । प्रक्रन्ता । उपक्रन्ता ॥ तत्तर्हीदं बहु वक्तव्यम्—'स्नोरात्मनेपदेन समानपदस्थस्येण्न भवती'ति वक्तव्यम् । 'क्रमेश्चे'ति वक्तव्यम् । 'कर्तरि चात्मनेपदविषयात्कृती'ति वक्तव्यम् । सूत्रं च भिद्यते ॥

यथान्यासमेवाऽस्तु । ननु चोक्तं–"स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसङ्ख्यान"मिति ॥ नैष दोषः । स्नुक्रमी एवात्मनेपदनिमित्तत्वेन विशेषयिष्यामः,—'न चेत्स्नुक्रमी आत्मनेपदस्य निमित्ते' इति ॥ कथं पुनर्धातुर्नामाऽऽत्मनेपदस्य निमित्तं स्यात् ? ॥ धातुरेव निमित्तम् । आह हि भगवान्–'अनुदात्तङित आत्मनेपदम्' 'शेषात्कर्त्तरि परस्मैपद'मिति ॥

यत्र तर्हि धातुर्नाश्रीयते–'भावकर्मणो'रिति ? ॥ अत्रापि धातुरेवाश्रीयते—'भावकर्मवृत्ताद्धातो'रिति ॥ कथ प्रक्रमितव्यम् उपक्रमितव्यम् ? ॥ सत्यात्मनेपदे निमित्तशब्दो वर्तते ॥ कथं–प्रक्रन्ता उपक्रन्ता ॥ तस्मादसत्यपि ॥

कथं प्रक्रमितव्यम् । उपक्रमितव्यम् । तस्मात्सत्येव ॥ कथं प्रक्रन्ता उपक्रन्ता ? ॥ वक्तव्यमेवैतत्—"कर्त्तरि चात्मनेपदविषयात्कृती"ति ॥

---

प्र.]तद्योग्यादित्यर्थः । **प्रक्रन्तेति** । प्रारम्भविषयत्वात्क्रमेः 'प्रोपाभ्यां समर्थाभ्या'मित्यात्मनेपदविषयत्वम् । **स्नुक्रमी एवेति** । 'अनात्मनेपदनिमित्ते'इति प्रथमाद्विवचनं न सप्तमी । सप्तम्यां हि भावादेरात्मनेपदनिमित्तस्याश्रयणात्प्रस्नवितव्यमित्यादावपि प्रतिषेधः स्यात् । **कथं पुनरिति** । वृत्त्यादिरर्थ आत्मनेपदस्य निमित्तं, न धातुरितिभावः । **धातुरेवेति** । वृत्त्याद्यर्थविशिष्टः । **भावकर्मवृत्तादिति** । भावकर्मणी धातोरेव विषयभावेन विशेषणे इत्यर्थः । **सत्यात्मनेपदे इति** । न योग्यतामात्राश्रयमिह निमित्त-

---

उ.]सत्तिन्यायेन स्नुक्रमिनिमित्तकात्मनेपदेन समानपदस्थस्येत्यर्थः कार्य इति भावः । बहिरङ्गक्यङादिनिमित्तमत्रात्मनेपदमिति भाष्यार्थः । प्रचिक्रंसिष्यत इत्यत्र 'पूर्ववत्सन' इत्यनेनात्मनेपदं स्नुक्रमिनिमित्तमेवेति भावः । एवञ्च 'प्रचिक्रमिषयते' इत्यत्र णिच आत्मनेपदनिमित्तत्वे इड्भवत्येव । एवं सनन्ताद्भावे कर्मणि वात्मनेपदे 'प्रचिक्रमिषिष्यते' इत्येव । 'पूर्ववत्सन' इत्यस्य तु तत्र न प्रवृत्तिः, 'कर्तरी'त्यनुवृत्तेः। अत एव वक्ष्यमाणप्रत्याख्यानेन न फलभेदः । सप्तम्यन्तस्याऽन्वयाऽयोग्यत्वादाह—**प्रथमाद्विवचनमिति** । 'स्नुक्रमोर्वलादेरिट् , यदि स्नुक्रमी अनात्मनेपदनिमित्ते भवत' इति सूत्रार्थ इति भावः । वस्तुतो भावप्रधानः सौत्रो निर्देशः, प्रसज्यप्रतिषेधश्च, स्नुक्रमोरात्मनेपदनिमित्तत्वाऽभावे सत्येव प्रत्यासत्त्या ताभ्यां परस्य वलादेरिडित्यर्थः। तत्फलितं भाष्ये उक्तम्–**न चेत्स्नुक्रमी इति** ।

ननु कर्मणि धातोर्वृत्त्यभावेन 'कर्मवृत्ता'दित्यसङ्गतमत आह—**भावकर्मणी**

---

१ इदं क्वचिन्न । २ 'भवान्' । ३ 'वृत्तेर्धातोः' । ४ अयं पाठः प्रायो लुप्तः ।

अथ वा 'कृती'ति वर्तते [ स्नुक्रमोरनात्मनेपदनिमित्ते ] ॥

**ग्रहोऽलिटि दीर्घः ॥७।२।३७॥**

॥ * ॥ ग्रहेर्दीर्घत्वे इड्ग्रहणम् ॥ * ॥ ग्रहेर्दीर्घत्वे इड्ग्रहणं कर्तव्यम् । 'इटो दीर्घ' इति वक्तव्यम् ॥ न वक्तव्यम्—प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'आर्धधातुकस्येड्वलादे'रिति ॥ एवमपि कर्त्तव्यमेव[1] ॥ * ॥ अकरणे[2] ह्यसंप्रत्ययः षष्ठ्यभावात् ॥*॥ अक्रियमाणे हीड्ग्रहणेऽसंप्रत्ययः स्यात् ॥ किं

---

प्र.] त्वमाश्रीयते किंतु कार्यं कुर्वतः। यद्येवमर्थेऽपि निमित्तत्वेनाश्रीयमाणेदोषाभावात्कस्मात्स्नुक्रमी एवेत्युक्तम्, उच्यते, अर्थे निमित्तत्वेनाश्रीयमाणे 'ऽनुपसर्गाद्वे'त्यात्मनेपदमर्थनिरपेक्षत्वादसङ्गृहीतं स्यादिति धातुरेव निमित्तत्वेनाश्रितः। यदि सति कार्ये निमित्तमाश्रीयते तदा निमित्तग्रहणं न कर्तव्यम्, 'अनात्मनेपद'इति सत्सप्तम्याश्रयणात् । नैतदस्ति । 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषायां सत्यां सत्सप्तम्याश्रयणस्याऽशक्यत्वात् । **अथवा कृतीति वर्तत इति** । तच्च कृद्ग्रहणं वाक्यभेदेन क्रमिणैव संबध्यते, न स्नौतिना । 'अनात्मनेपदनिमित्ते' इति च प्रसज्यप्रतिषेधः, तेनाऽयमर्थो—'यदाऽप्यात्मनेपदयोग्यः क्रमिस्तदा ततः परस्य कृत इण्न भवति' ॥

**ग्रहोऽलि। इड्ग्रहणमिति।** आदेशस्य स्थानिनिर्देशार्थं षष्ठ्यन्तमिड्ग्रहणं कर्तव्यम् । **एवमपीति** । सत्येव प्रथमान्त इड्ग्रहणे षष्ठ्यन्तमन्यत्कर्तव्यमित्यर्थः। **अक्रियमाणे हीति** । प्रथमान्तमिड्ग्रहणमयोग्यत्वान्न संबध्यते, अच्परिभाषोपस्थानाच्चाऽज्मात्रस्य ग्रहेः परस्य दीर्घप्रसङ्गः । **असंप्रत्यय इति** । 'ग्रहेः परस्य इटो दीर्घ'

---

उ.] इत्यादि। विषयसप्तमी[3]। भावकर्मविषयाद्धातोरित्यर्थः। ते अपि प्रत्ययद्योत्ये इति भावः । पञ्चकस्य प्रातिपदिकार्थत्ववत्सर्वस्य धात्वर्थत्वमिति तत्त्वम् । शत्रादिविषयत्वस्य तु 'सत्त्वप्रधानानि नामानी'त्युक्तेर्वाच्या एव भावादय इति बोध्यम् । एतदर्थमेव 'विषयभावेने'ति कैयटेन व्याख्यातं । तद्विषयत्वं च धातोस्तेषां स्वप्रकृतिकप्रत्ययार्थतया, स्वस्य तत्तद्विशिष्टक्रियावाचकत्वेन वेत्यन्यत् ।

**यद्येवमिति**। आत्मनेपदनिमित्तार्थविषयभिन्नस्नुक्रमिभ्यां परस्य वलादेरिडित्यर्थ आश्रयणीय इति भावः । **सत्सप्तमीति** । आत्मनेपदेऽसतीत्यर्थः । **अशक्यत्वादिति** । 'श्नान्नलोप' इत्यत्र तु लक्ष्यानुरोध'न्नैषा परसप्तमी। का तर्हि ?। सत्सप्तमी'-त्युक्तमिति न तद्विरोधः । 'सती'ति पदाध्याहारस्य दुर्ज्ञेयतया स्पष्टप्रतिपत्तये निमित्तग्रहणं कृतमिति तात्पर्यं । **तच्चेति**। अनुवृत्तं चाऽऽवृत्त्या कर्तृपरं, कृत्संज्ञकपरञ्चेति 'प्रक्रमितु'मित्यादौ न दोषः । **[ स्नुक्रमोरनात्मने ]** ॥

**ग्रहोऽलिटि । कर्तव्यमिति** । अनुवर्तमानन्तु प्रथमान्तत्वादन्वयाऽयोग्यमिति भावः । ननु इड्ग्रहणाऽभावे किमनिष्टमत आह—**अच्परिभाषेति । अज्मात्रस्येति** । 'ग्राहक' इत्यादावपीत्यर्थः । नन्वेवमसंप्रत्ययोऽनुपपन्नोऽत आह—**ग्रहेः**

---

१ 'वक्तव्यमेव' पा० । २ 'अग्रहणे' पा० । ३ 'भावकर्मणोरिती'त्यादिः ।

**कारणम् ? ॥ 'षष्ठ्यभावात्' । षष्ठीनिर्दिष्टस्य आदेशा उच्यन्ते न चात्र षष्ठीं पश्यामः ॥ क्रियमाणे चापि इङ्ग्रहणे-॥** ॥ ❀ ॥ चिण्वदिटः प्रतिषेधः ॥ ❀ ॥ **चिण्वदिटः प्रतिषेधो वक्तव्यः । ग्राहिष्यते** ॥❀॥ यङ्लोपे च ॥❀॥ **यङ्लोपे च प्रतिषेधो वक्तव्यः । जरीगृहिता जरीगृहितुम् जरीगृहितव्यम् ॥**

**यदि पुनरिड् दीर्घ आगमान्तरं विज्ञायेत ?** ॥ ❀ ॥ इड्दीर्घ इति चेद्विप्रतिषिद्धम् ॥❀॥ **इड्दीर्घ इति चेद्विप्रतिषिद्धं भवति । यदि इण्न दीर्घः,**

**प्र.]** इत्ययमिष्टः संप्रत्ययो न स्यात् । **क्रियमाण इति ।** प्राकरणिकमिटमनपेक्ष्येट इत्युच्यमाने सर्वस्येटो विशेषाऽभावाद्दीर्घप्रसङ्गाच्चिण्वदिटो दीर्घः प्रतिषेध्यः । **जरीगृहितेति ।** 'जरीगृह्य'शब्दात् तृच इट् । अल्लोपयलोपयोः कृतयोर्द्विःप्रयोगे द्विर्वचने स एव ग्रहिरिति इटो दीर्घप्रसङ्गः । दीर्घविधौ स्थानिवत्त्वनिषेधादकारेण व्यवधानाऽभावः । **यदि पुनरिति ।** 'इ'डिति वर्तते, 'दीर्घ' इति च निर्दिश्यते । तत्र 'दीर्घ इङ्भवती'ति सामर्थ्याद्व्यक्तिपरित्यागेनेकारजातिराश्रीयते । दीर्घग्रहणाच्च दीर्घव्यक्तिसमवेता सा विधीयते । 'टकारो देशविध्यर्थ' इति सामर्थ्यादीडागमविधिः । एवं च षष्ठीनिर्दिष्टमिङ्ग्रहणं न कर्तव्यम् । चिण्वदिट् चास्याऽपवाद इति तत्र दोषाऽभावः । न च कस्य चित्स्थानिनो दीर्घत्वं विधीयत इति स्थानिवत्त्वाऽनिषेधात्पूर्वस्मादपि विधौ स्थानिवत्त्वादकारेण व्यवधानाद्यङ्लोपे ईटोऽप्रसङ्गः । अथ त्वागमान्तरेऽपि दीर्घत्वमस्तीत्येवाऽयं दीर्घविधिस्तदा यङ्लोपे दोषो न परिहृतः ।

**उ.] परस्येति ।** नन्वत्र करणेनैतत्प्रकरणस्थेङ्ग्रहणं भविष्यतीत्यत आह-**प्राकरणिकमिति ।** प्राकरणिकेङ्ग्रहणे हि पूर्वप्रक्रान्तमेव विभक्तिविपरिणामेन संबध्येत इत्यपूर्वकरणात्प्रकरणानादर इति भावः । **विशेषाभावादिति ।** इट्त्वस्य समानत्वादिति भावः । **स एव ग्रहिरिति ।** उत्तरखण्डभूत इत्यर्थः । **स्थानिवत्त्वनिषेधादिति ।** पूर्वस्य विध्यभावाच्चेत्यपि बोध्यम् । पञ्चमीसमासस्तु क्वाचित्क इति तदनाश्रयेणेदं भाष्यमिति तत्त्वम् । नन्विट् दीर्घ इति सामानाधिकरण्यमसङ्गतमत-आह—**सामर्थ्यादिति ।** इट्त्वजात्याक्रान्तो दीर्घ इत्यर्थ इति भावः । **अपवाद इति ।** साप्तमिकस्येड्जातीयस्य नित्यत्वाद्बाधक इत्यर्थः । यङ्लोपे दोषाऽभावमत्र पक्षे उपपादयति—**न च कस्यचिदिति । दोषो न परिहृत इति ।** तस्मादेवं दीर्घविधिग्रहणमनुचितमिति भावः । वस्तुतोऽयं दोषः पक्षद्वयेऽप्योति सूत्रशेषे भाष्यकृद्वक्ष्यतीति आद्यदोषपरिहारफलक एवाऽयं पक्ष इति तत्त्वम् । यङ्लुगन्तात्तृजादौ ल्विटो दीर्घ इष्ट एव, स्थाने द्विर्वचनपक्षेऽपि अन्तरङ्गानपीतिन्यायेन लुगुत्तरमेव द्वित्वप्रवृत्तेः । स्थानिवद्भावेन ग्रहित्वाद्भवत्येव दीर्घो यदि यङ्लुगस्तीति तात्पर्यम् । प्रतिषिद्धस्य पुनर्विधानमुपपादयति—**सनि इटीति । उभयस्मिन्न-**

१ "इङ्ग्रहणे चिण्वदिटः प्रतिषेध" इत्येवं वार्त्तिकं, शेषं भाष्यमित्यन्ये ।
२ 'विज्ञायेत' पा० । ३ 'भवती'ति पा० ।

अथ दीर्घो नेट् , इड् दीर्घश्चेति विप्रतिषिद्धम् ॥*॥ प्रतिषिद्धस्य च पुनर्विधाने दीर्घत्वाऽभावः[1] ॥*॥ प्रतिषिद्धस्य च[2] पुनर्विधाने दीर्घत्वस्याऽभावः । वुवूर्षते विवरिषते विवरीषते ॥ अत्रापीड् दीर्घ इत्यनुवर्तिष्यते ॥

यत्तर्हि विदेशस्थं प्रतिषिध्य पुनर्विधानं तन्न सिध्यति । 'जॄव्रश्च्योः क्त्वि' 'श्र्युकः किती'त्यनेन प्रतिषिद्धे दीर्घत्वं न प्राप्नोति । जरित्वा जरीत्वा । ईटो विधिरिटः प्रतिषेधः । यथाप्राप्त[3] इड् दीर्घो भविष्यति ॥

यदि तर्हीटो ग्रहणे ईटो ग्रहणं न भवति,–जरीत्वा–'न क्त्वा से'डिति कित्त्वप्रतिषेधो न प्राप्नोति । इह चाऽग्रहीदिति–'इट ईटी'ति सिज्लोपो न प्राप्नोति । इह चाऽग्रहीत्–'नेटी'ति वृद्धिप्रतिषेधो न प्राप्नोति ॥ मा भूदेवं 'ह्यन्ताना'मित्येवं भविष्यति ॥ अत्रापि 'नेटी'त्येवानुवर्तते । तच्चावश्यमिड्ग्रहणमनुवर्त्यम्-अवाक्षीदि[4]त्येवमर्थम् । तथा–अग्रहीध्वम् अग्रहीढ्वम्[5]–'विभा-

प्र.] इतरो व्यक्तिपदार्थाश्रयेणाह–इड्दीर्घ इति चेदिति। विवरीषत इति। सनीटि प्राप्ते,'वृतो वे'त्यनेन पक्षे ईटि च प्रसक्ते 'सनि ग्रहगुहोश्चे'त्यनेनोभयस्मिन्नपि प्रतिषिद्धे 'इट्सनि वे'ति पक्षे इड्विधीयते, ततः पुनरीटो विधानाऽभावाद्दीर्घ ईकारः पक्षे न श्रूयेत । इटस्तु पक्षे दीर्घविधौ दोषाऽभावः। अत्रापीति । 'इट्सनिवे'त्यत्र दीर्घ इति वृत इति चानुवर्त्ततेइति सिद्धं त्रैरूप्यम् । विदेशस्थमिति । दीर्घग्रहणाऽनुवृत्तेरत्राऽसंभवः। जरीत्वेति। उदात्तत्वादिट् प्राप्तो 'वृतो वे'त्यनेन पक्षे ईट् च 'श्र्युकः किती'ति प्रतिषिद्धः । इकारजात्याश्रयणादीटोऽपि प्रतिषेधः प्रवर्तते । ततो 'जॄव्रश्च्योःक्त्वी' त्यनेनेटि विधीयमाने पक्षे दीर्घो न स्यात् । एतत्परिहरति–ईटो विधिरिटः प्रतिषेध इति । 'वृतो वे'त्यनेन पक्षे ईडागमो विधीयते । 'श्र्युकः किती'त्यनेन तु न । इडित्यधिकाराद्व्यक्तिपक्षाश्रयणाच्च निषेध इटो न त्वीटः । पाठान्तरं तु प्रकृतेऽर्थे दुर्योजत्वादस्माभिर्नोपन्यस्तम्। सन्मार्गसम्भवे को हि विमार्गं मतिमान् भजेत् ।

यदि तर्हीति । इट्प्रतिषेध ईटो यथा न भवत्येवं कार्यान्तरस्याऽप्यप्रसङ्गः ।

उ.]पीति। पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्याज्जातिपक्षाश्रयणाच्चेति भावः । सिद्धं त्रैरूप्यमिति । वाक्यभेदेन ईटोऽपि विधानादिति भावः । 'विदेशस्थ'मित्यस्य हेतुगर्भविशेषणत्वमुपपादयति—दीर्घेति । भाष्ये–तन्न सिध्यतीति । तद्विषये न सिध्यति दीर्घ इत्यर्थः । नन्विटो निषेधः कथमीटः स्यादत आह—जातीति । नन्वीट इति । एवञ्च जरीत्वा विवरीषत इति सिद्धमिति भावः । तस्माद्विहितस्येति । अनुवादे एव जातेर्ग्रहणं विधौ तु व्यक्तेरेवेति भावः । नन्वार्धधातुकस्य दीर्घविधाने कथमिटस्तत्सिद्धिरत आह—इडागमे इति । विशिष्यानुच्चारणा-

१ 'त्वस्याऽभावः' पा० । २ चः क्वाचित्कः । ३ 'यथाप्राप्तमिटो दीर्घः' पा० । ४ 'अवाक्षीत्' पा० । ५ इदं क्वचिन्न ।

षेट' इति मूर्धन्यो न प्राप्नोति। तस्मान्नैतच्छक्यं[1] वक्तुम्–'इटोग्रहणे ईटो ग्रहणं न भवती'ति ॥ भवति चेत्प्रतिषिद्धस्य च[2] पुनर्विधाने दीर्घाऽभाव [इत्येव]।

तस्मादशक्य इड् दीर्घ आगमान्तरं विज्ञातुम्। न चेद्विज्ञायते इटो ग्रहणं कर्तव्यम् ॥ न कर्तव्यम्। 'आर्धधातुकस्ये'ति वर्तते। ग्रहः परस्यार्धधातुकस्य दीर्घत्वं वक्ष्यामि ॥ इहापि तर्हि प्राप्नोति—ग्रहणम् ग्रहणीयम् ॥ 'वलादे'-रिति वर्तते॥ एवमपि ग्रहीता ग्रहीतुम् अत्र न प्राप्नोति ॥ भूतपूर्वगत्या भविष्यति। एवमपि ग्राहकः–अत्र प्राप्नोति ॥ किं चेद्वतिघातेन खल्वपि दीर्घत्व-मुच्यमानमिटं बाधेत[3]। तस्मादिटो[4] ग्रहणं कर्तव्यम् ॥ न कर्तव्यम्। प्रकृत-मनुवर्तते ॥ क्व प्रकृतम्? ॥ 'आर्धधातुकस्येड्वलादे'रिति ॥

ननु चोक्तम्–"एवमपि कर्तव्यमेव[5], अग्रहणे ह्यसंप्रत्ययः षष्ठ्यनिर्देशा"-दिति ॥ नैष दोषः। 'ग्रह' इत्येषा पञ्चमी 'इ'डिति प्रथमायाः षष्ठीं प्रकल्प-यिष्यति—'तस्मादित्युत्तरस्ये'ति ॥ एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं "चिण्वदिटः प्रतिषेध"इति ॥ कथम्? ॥ प्रकृतस्येट[6] इदं दीर्घत्वं, न च चिण्वदिद्वकृतः ॥ यङ्लोपे च[7] कथम्? ॥ यङ्लोपे चोक्तम्—"इटि सर्वत्र" ॥

---

प्र.]**तस्मान्नैतदिति**। इड्ग्रहणे इकाराकृतिराश्रयणीया न तु व्यक्तिः। **भवति चेदिति**। 'जॄव्रश्च्योः क्त्वी'तीड्विधौ दोष एवेत्यर्थः। नन्वनुवाद इव विधावपि इकाराकृत्याश्र-यणाज्जरित्वा जरीत्वेति रूपद्वयं भविष्यति। नैतदस्ति। विधौ जात्याश्रये 'लविते'-त्यादावपि दीर्घः स्यात्। तस्माद्विहितस्य दीर्घस्येड्ग्रहणेन ग्रहणं न तु विधेयस्य। **ग्रहइति**। इडागमे कृते तदादेरार्धधातुकस्यादेः परस्येटीट एव दीर्घः। **वलादे-रिति**। वलादि यद्दृष्टमित्याश्रीयते। इतरः सांप्रतिकं वलादित्वमाश्रितमिति मत्वाह **एवमपीति**। **भूतपूर्वगत्येति**। सांप्रतिकाऽभावादलिटीतिनिषेधाच्च। **इड्वतिघा-तेनेति**। येननाऽप्राप्तिन्यायेनेटं बाधित्वाऽकृतेड्कस्यैवार्धधातुकस्य दीर्घत्वमच्परि-भाषोपस्थानाद्यत्र तत्र स्थितस्याऽचः स्यात्। **नचेति**। 'जॄव्रश्च्योः क्त्वी'त्यनेन तु वलादिलक्षणमेवेट् प्रतिप्रसू(य)त इति अप्राकरणिकत्वाभावाद्दीर्घः सिध्यति। **यङ्लोपे चेति**। 'सन्यङन्तस्य स्थाने द्विर्वचन'मित्यत्र पक्षे प्रकृतिप्रत्ययसम्मोहान्नष्टः स ग्रहिः। ननु च 'द्विः प्रयोगो द्विर्वचन'मिति पक्षस्तत्रस्थितस्तत्कथमस्थितपक्षाश्रयेण परि-

---

उ.]न्निर्दिश्यमानपरिभाषाया अविषय इति भावः। भाष्ये—**इड्वतिघातेनेति**। येननाऽप्राप्तिन्यायाच्च तत्प्रतिघातेनाऽस्य विधानं बोध्यम्। ननु प्राकरणिकस्यैव दीर्घे 'जॄ-व्रश्च्यो'रित्यग्रोत्तरत्र विधानादप्राकरणिकत्वाज्जरित्वेत्यत्रपक्षे दीर्घो न स्यादत आह—**जॄव्रश्च्योरिति**। **प्रतिप्रसू(य)त इति**। 'श्युक' इति प्रतिषिद्धः प्रतिप्रसू(य)त इत्यर्थः।

---

१ 'नैवं शक्यं'। 'नैतदेवं' पा०। २ चः क्वाचित्कः। ३ बाधते' पा०। ४ 'तस्मादीटो' पा०। ५ 'कर्त्तव्यमग्रहणे'। 'कर्त्तव्यमेवेड्ग्रहणम् पा०। ६ 'स्येटो दीर्घ' पा०। ७ चः क्वचिन्न।

क सर्वत्र ? ॥ यद्येवं प्रकृतस्येटो दीर्घत्वमथापि ईड्दीर्घ आगमान्तरं विज्ञायेत ॥*॥ यङ्लोपे चोक्तम् ॥*॥ किमुक्तम् ? ॥ 'तदन्तद्विर्वचना'दिति ॥

## स्वरतिसूतिसूयतिधूञूदितो वा ॥ ७।२।४४ ॥

अथ 'वे'ति वर्तमाने पुनर्वावचनं किमर्थम् ? ॥ * ॥ पुनर्वावचनं लिङ्सिचोर्निवृत्त्यर्थम् ॥*॥ पुनर्वावचनं क्रियते ॥ [किमर्थं ?] ॥ लिङ्सिचोर्निवृत्त्यर्थम् ? ॥ [ लिङ्सिचोर्निवृत्तिर्यथा स्यात् ] ॥

प्र.]हारः। अत्राहुः-'यङ्लोपे चोक्त'मिति। अत्रायमभिप्रायो वार्तिककारस्य-द्विः प्रयोगे एव द्विर्वचने पूर्वस्मादपि विधावल्लोपस्य स्थानिवत्त्वादकारेण व्यवधानाद्दीर्घाऽभावः । 'न पदान्ते'त्यत्र 'पूर्वत्रासिद्धे न स्थानिव'दिति वक्तव्यम् । तस्मिन्नुच्यमाने 'पदान्तवरेयलोपस्वरवर्ज्जं द्विर्वचनादीनि न वक्तव्यानी'ति साप्तमिके दीर्घविधौ स्थानिवत्त्वं भवत्येव । सूत्रकारमतेऽपि ग्रहेर्विहितस्येत्येवं विहितविशेषणाश्रयणाद्यङ्लोपे दीर्घाऽभावसिद्धिः । भाष्यकारेण त्वस्थितमपि पक्षमाश्रित्य तदन्तद्विर्वचनादिति विवृतम् । अन्यत्राऽप्यस्य दोषस्य सम्यक्परिहाराभिधानादनादरात् । [ग्रहोऽलिटि]।

स्वर । अथेति । 'इण्नि वे'त्यतः । लिङ्सिचोर्निवृत्त्यर्थमिति । ननु

उ.] साप्तमिके इति । वस्तुतो वर्ज्यकोटौ दीर्घस्याप्युपलक्षणतायाः कमेर्णिङित्यादिसूत्रस्थभाष्यसंमततयेदं चिन्त्यम् । ननु वार्तिकमतेऽस्त्वयं परिहारः, सूत्रमते तु कथमत आह-सूत्रकारेति । इदं भाष्यकृतोऽप्युपलक्षणम् । अन्यत्रेति । 'एकाचो द्वे' इत्यत्र । तत्र हि ग्रहेरङ्गादिति भाष्यं । तृचो हि 'जरीगृह्ये'त्यङ्गं न तु ग्रहिः । नचाऽल्लोपयलोपयोरेकदेशविकृतन्यायेन 'जरीगृ'हित्यङ्गं, तस्य च ग्रहिरूपत्वमपि द्विः प्रयोगत्वाद्द्विर्वचनस्येति वाच्यं, विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणमिति न दोष इति कैयटेन व्याख्यातत्वात् । किञ्च समुदायस्य द्विःप्रयोगेऽपि न ग्रहित्वम्, उत्तरखण्डस्य तु कैयटरीत्या न तत्त्वं । न चात्र पक्षे यङ्लुगन्तात्तृच इटि दीर्घो न स्यात् । ततो यङ्लुक्सत्त्वे दृढतरमानाऽभावात् । अनैमित्तिकलुकः पूर्वमेव प्रवृत्तत्वेन द्विःप्रयोगद्विर्वचनेन च ग्रहेरेवाङ्गत्वेनाऽक्षतेश्च । यङ्लोपे तु जरीगृह्यशब्दात्तृचि विशिष्टस्याङ्गत्वेऽल्लोपयलोपयोरेकदेशविकृतन्यायेन 'जरीगृ'हित्यस्यैवाङ्गत्वं न,तु ग्रहेः। न च द्विः प्रयोगाद्ग्रहिरेव सः । अङ्गसंज्ञाप्रवृत्तिकाले ग्रहिरूपत्वाऽभावात् । यङ्लुगन्ते तु तत्कालेऽपि तथैव । यत्तु हरदत्तेनैकाज्ग्रहणानुवृत्त्या यङ्लोपे दोषपरिहार उक्तः, सतु यङ्लुकि अतिव्यापकत्वान्मानाऽभावाच्च हेय एव। यत्र इडाद्यार्धधातुकनिरूपिताङ्गसंज्ञाप्रवृत्तिवेलायां स्वतः, स्थानिवद्भावेन वा ग्रहिरूपत्वं तत्र ग्रहेः परस्येटो दीर्घ इति यथाश्रुतरूपाश्रयणमिति कैयटस्यार्थः । अतएव 'गृहीत'मित्यादिसिद्धिः । अन्यथात्रेडपेक्षया नित्यत्वात्संप्रसारणे यथाश्रुतरूपाऽभावः स्पष्ट एवेति

१ 'यद्येवं' पा० । २ 'इड् दीर्घ' पा० । ३ विज्ञायेत' पा० । ४ 'एकाच उपदेशे' ( ७-२-१० ) इत्यत्रोक्तम् । ५ इदं क्वचिन्न ।

**अथ किमर्थं सूतिसूयत्योः पृथग्ग्रहणं क्रियते ? ॥ सुवतेर्मा भूत् ॥**
**अथ किमर्थं धूञः सानुबन्धकस्य ग्रहणं क्रियते ? ॥ धुवतेर्मा भूदिति ॥**
**किं पुनरियं प्राप्ते विभाषा, आहो स्विदप्राप्ते ? ॥ कथं च प्राप्ते कथं चाऽप्राप्ते[1] ? ॥ यदि स्वरतिरुदात्तस्ततः प्राप्ते, अथाऽनुदात्तस्ततोऽप्राप्ते ।** ॥*॥ स्वरतिरुदात्तः॥*॥ **स्वरतिरुदात्तः पठ्यते ॥ किमर्थं तर्हि वावचनम् ? ॥**

**प्र.]** स्वरतिग्रहणाल्लिङ्सिचोरनुवृत्तिर्न भविष्यति, ऋतश्च संयोगादेरितीड्विकल्पस्य-सिद्धत्वात् । नैतदस्ति। नित्यार्थं स्वरतिग्रहणमित्यज्ञापकं लिङ्सिज्निवृत्तेः।**अथ किमर्थमिति** । 'सू' ग्रहणमेव[2] क्रियतामिति भावः। **सुवतेरिति** । 'अननुबन्धकग्रहणे न सानुबन्धकस्ये'ति सुवतेरेव ग्रहणं स्यात् । सूङ्ग्रहणेऽपि क्रियमाणे 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहण'मिति सूयतेरेव ग्रहणं स्यात् । अस्याश्च परिभाषायाः सूङ्ग्रहणे कर्तव्ये 'सूतिसूयती'ति भेदेनोपादानमेव ज्ञापकम् । **धूञ इति** । 'धूञ्कम्पने' इति स्वादिषु क्र्यादिषु च पठ्यत इति द्वयोरपि सामान्येन ग्रहणम् । 'धू विधूनने' इत्यस्मात्तु नित्यमिड्भवति । **किं पुनरिति** । स्वरत्युद्देशेनाऽयं विचारोऽन्येषां तूदात्तत्वात्प्राप्तविभाषाया निश्चयाद्दोषाऽभावाच्च । स्वरतेस्तूदात्तानुदात्तप्रतिज्ञाने दोषदर्शनाद्विचारः । 'ऋतां च वृङ्वृञा'विति परिगणनादस्योदात्तत्वं न प्रतिज्ञातम् । तत्र किमुदात्तत्वप्रतिज्ञानेन दोषः परिह्रियते अथानुदात्तत्वप्रतिज्ञाने न्यायेनेति प्रश्नः । **यदि स्वरतिरुदात्त इति** । ननु किति प्रत्यये 'श्र्युकः किती'ति प्रतिषेधात्तत्राऽप्राप्तविभाषेयं स्यात् । नैतदस्ति । अल्पविषयत्वप्रसङ्गात् । स्वरतेः प्राप्तविभाषायां तु महाविषयत्वं भवति । **किमर्थमिति** । यदि पक्ष इण्निवृत्त्यर्थं

**उ.]** दिक्। वस्तुतस्तदन्तद्विर्वचनादिति भाष्यं तत्रोक्तसकलपरिहारोपलक्षणं बोध्यम्।

**स्वरतिसूति।** भाष्ये–**लिङ्सिचोरिति** तत्सूत्रपरम् । तत्सूत्रानुवृत्तेर्निवृत्त्यर्थमित्यर्थः । अन्यथा परस्मैपदे सिचि विकल्पस्य चारितार्थ्येन 'ऋतश्च संयोगादे'रितीड्विकल्पस्य सिद्धत्वादिति कैयटाऽसङ्गतिः । **नित्यार्थमिति** । अत्र लिङ्सिच्सहितवाग्रहणानुवृत्तावपि लिङ्सिचोर्विकल्पे प्राप्ते स्वृग्रहणं संस्वृषीष्टेत्यादौ सामर्थ्यान्नित्यार्थं स्यादित्यर्थः । केचित्तु एवं सति सूत्रस्य वैरूप्यापत्तिस्तस्माल्लिङ्सिचोः परतः क्वचिद्विषये संस्वृषीष्टेत्यादौ पूर्वसूत्रस्य व्यवस्थितविभाषात्वबोधनद्वारा इटो निवृत्त्यर्थं वाग्रहणम्।एवञ्च लिङ्सिचोरित्यस्य क्वचिद्विषये निवृत्त्यर्थमितिभाष्याक्षरार्थमाहुः।**सुवतेरिति** । 'षू प्रेरणे' इति हि निरनुबन्धकः । 'षूङ् प्राणिगर्भविमोचने' इत्यदादिः । 'षूङ् प्राणिप्रसवे' इति च दिवादिः सानुबन्धकौ । **ज्ञापकमिति** । साहचर्य्यादलुग्विकरणस्यैव भविष्यतीति चिन्त्यमेतत् । 'धू विधूनने' इति कुटादिः । **किमुदात्तत्वप्रतिज्ञानेन दोष इति** । स्वृत्वेत्यादौ विकल्पप्रसङ्गरूप इत्यर्थः । **न्यायेनेति** । येन नाप्राप्तिन्यायेन, पुरस्तात्प्रतिषेधकाण्डारम्भन्यायेन वेत्यर्थः । **तत्राप्राप्तेति** ।

१ 'वाऽप्राप्ते' पा० । २ 'ग्रहणं क्रियताम्' पा० ।

॥*॥ **वावचनं निवृत्त्यर्थम्** ॥*॥ **वावचनं क्रियते ॥ [ किं प्रयोजनं ? ] ॥ 'निवृत्त्यर्थम्'** ॥*॥ अनुदात्ते हि किति वाप्रसङ्गः प्रतिषिध्य पुनर्विधानात् ॥*॥ **अनुदात्ते हि सति किति विभाषा प्रसज्येत । स्वृत्वा ॥ किं कारणम् ? ॥ 'प्रतिषिध्य पुनर्विधानात्' । प्रतिषिध्य किलाऽयं पुनर्विधीयते । स यथै-वैकाज्लक्षणं प्रतिषेधं बाधते एवं 'श्र्युकः किती'त्येतमपि बाधेत ॥**

**यदि तर्ह्युदात्तः स्वरतिः, पठिष्यति विप्रतिषेधं–"स्वरतेर्वेट्त्वाद्दतः स्ये विप्रतिषेधेने"ति स विप्रतिषेधो नोपपद्यते ॥ किं कारणम् ॥ ? स विधिरयं प्रतिषेधो, विधिप्रतिषेधयोश्चाऽयुक्तो विप्रतिषेधः ॥ सोऽपि विधिर्न मृदूनामिव कार्पासानां कृतः, प्रतिषेधविषय आरभ्यते, स यथैवैकाज्लक्षणं प्रतिषेधं बाधते एवमिममपि बाधिष्यते ॥ अथ वा येन नाप्राप्ते तस्य बाधनं**

---

प्र.]तदा 'ऋद्धनोः स्ये' इतीममपीटं पक्षे निवर्तयेदिति प्रश्नः । **निवृत्त्यर्थमिति** । निवृत्तिः कञ्चिदेव विधिं बाधते न सर्वमिति भावः । **स विधिरिति** । 'ऋद्धनोः स्ये' इत्येषः । **अयं प्रतिषेध इति** । प्राप्तविभाषापक्षे यथा वलादिलक्षण इड्प्रतिषिध्यते तथा स्यलक्षणोऽपि प्रतिषिध्यते । अनुदात्तप्रतिज्ञाने तु द्वयोरपि विधित्वाद्विप्रतिषेधोपपत्तिः । **सोऽपीति** । वैधर्म्येण दृष्टान्तो, यथा मृदुकार्पासकृतो रज्ज्वादिर्दुर्बलो नैवं ऋद्धनोः स्य इत्ययं विधिः । **स यथैवेति** । 'करिष्यती'त्यादौ । **एवमिममपीति** । न च स्वरतेरुदात्तत्वे येन नाप्राप्तिन्यायोऽस्ति येनैकाज्लक्षणमेव प्रतिषेधं बाधेत न स्वरतिलक्षणम् । यद्येवं विप्रतिषेधाऽनुपपत्तिः, स्यलक्षणस्य विधेरपवादत्वात् । अन्यथापीष्टस्य सिद्धत्वान्नोपपादि विप्रतिषेधः । अथ वा स विधिरयं प्रतिषेध इति विधेर्दुर्बलत्वं यदुक्तं तदनेन निराकृतम् । तत्र द्वयोस्तुल्यबलत्वादुपपद्यते विप्रतिषेधः । **अथ वेति** । परिभाषाश्रयणादुत्सर्गापवादभावेऽपनीते द्वयोर्विप्रतिषेधोपपत्तौ

---

उ.]भावतात्पर्यकतालोभेनेति भावः । **महाविषयत्वमिति** । व्याप्तिन्यायानुग्रहाय, साहचर्यानुग्रहाय च प्राप्तविभाषैव युक्तेत्यर्थः । वावचनस्य विकल्पार्थत्वात् प्रश्नाशयमाह–**यदीति । कंचिदेवेति**। वक्ष्यमाणेन न्यायेनेति भावः। नन्वस्य विकल्पत्वात्प्रतिषेधत्वोक्तिरसङ्गतेत्यत आह–**प्राप्तविभाषेति । प्रतिषिध्येतेति** । 'निषेधाश्च बलीयांस' इति न्यायादिति भावः । **कार्पासकृत** इति भाष्ये षष्ठी तु करणस्य शेषत्वविवक्षया । **न्यायोऽस्तीति**। स्वरतावुदात्तत्वपक्षे एकाज्लक्षणनिषेधाऽप्राप्तेरिति भावः । **स्यलक्षणस्येति** । एवञ्चोत्सर्गापवादयोरयुक्तो विप्रतिषेध इत्यर्थः । एवञ्च स्वरतेर्वेट्त्वाद्दतःस्ये विप्रतिषेधेनेत्युक्तविप्रतिषेधासङ्गतिरिति भावः । **अन्यथापीति**। इष्टसिद्धिरेव प्रार्थनीया । सा त्वपवादत्वादेव सिद्धेति किं विप्रतिषेधेनेत्यर्थः । एवं हि विप्रतिषेधवार्तिकं विरुध्येतेत्यत आह–**अथवेति । तदनेनेति** । न त्वपवादत्वमुक्तमिति भावः । स्यलक्षणावकाशः–करिष्यतीति, एतदवकाशः–'स्वर्ता' 'स्वरिते'ति ।

---

१ 'ऋद्धनोः स्ये' (७-२-७०) इत्यत्र पठिष्यतीत्यर्थः। २ 'तन्नोपप' पा० ।

भवति । न चाऽप्राप्तेवलादिलक्षणे इयं विभाषा आरभ्यते, स्यलक्षणे पुनः प्राप्ते चाऽप्राप्ते च ॥

अथ वा–'मध्येपवादाः पूर्वान्विधीन्बाधन्ते' इत्येवमियं विभाषा वलादिलक्षणमिटं बाधिष्यते, स्यलक्षणं न बाधिष्यते ॥

अथ वा पुनरस्त्वनुदात्तः ॥ ननु चोक्तम्–"अनुदात्ते हि किति वा-प्रसङ्गः प्रतिषिध्य पुनर्विधाना"दिति ॥ नैष दोषः । येन नाप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते एकाज्लक्षणे प्रतिषेधे इयं विभाषा आरभ्यते । 'श्र्युकः किती'त्येतस्मिन्पुनः प्राप्ते चाऽप्राप्ते च ॥ अथ वा 'श्र्युकः किती'त्येष योग उदात्तार्थश्च, येभ्यश्चाऽनुदात्तेभ्य इड्प्राप्यते तद्बाधनार्थश्च ॥ अथ वा 'श्र्युकः किती'तीहाऽनुवर्तिष्यते ॥ अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'नेयं विभाषा उग्लक्षणस्य प्रतिषेधस्य विषये भवती'ति–यदयं 'सनीवन्तर्धभ्रस्जदम्भुश्रि-स्वृयूर्णुभरज्ञपिसना'मिति स्वृग्रहणं करोति ॥ [ स्वरतिसूतिसूयति ] ॥

## इण्निष्ठायाम् ॥७।२।४७॥

इडिति वर्तमाने पुनरिङ्ग्रहणं किमर्थम् ? ॥*॥ इड्ग्रहणं नित्यार्थम् ॥*॥ [इडितिवर्त्तमाने पुनरिङ्ग्रहणं क्रियते॥ किं प्रयोजनं?॥'नित्यार्थम्']। नित्यार्थो-यमारम्भः॥ नैतदस्ति प्रयोजनं सिद्धाऽत्र विभाषा पूर्वेणैव, तत्रारम्भसामर्थ्या-न्नित्यो विधिर्भविष्यति ॥ नात्र पूर्वेण विभाषा प्राप्नोति॥ किं कारणम् ? ॥

---

प्र.]परत्वेन व्यवस्था । उदात्तत्वे दोषं प्रतिविधायाऽनुदात्तत्वे प्रतिविधत्ते—**अथ वेति । न चाऽप्राप्त एकाज्लक्षण इति** । अयमेव पाठो युक्तः । केचित्तु 'वलादिलक्षण' इति पठन्ति । वलादिमात्रविषयत्वाद्वलादिलक्षण इति व्याचक्षते । **श्र्युकः कितीत्ये-तस्मिन्निति** । तत्र 'स्वृत्वे'त्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधो भवतीति वक्तव्यम् । **येभ्यश्चानुदात्तेभ्य इति** । प्रतिषेधकाण्डस्य पुरस्तात्करणस्य सर्वेड्प्रतिषेधार्थत्वात् । **यदयमिति** । यद्युग्लक्षणं प्रतिषेधमयं विकल्पो बाधेत ततः 'सनि ग्रहगुहोश्चे'त्यस्य प्रतिषेधस्याऽभावादनेनैव सनि विकल्पस्य सिद्धत्वात्पुनस्तन्न विदध्यात् ॥

**इण्नि । सिद्धेति** । 'निरः कुष' इत्यनेन । [ **इण्निष्ठायाम्** ]।

---

उ.]**एवञ्चेममपि बाधिष्यत** इत्यत्र 'परत्वा'दिति शेषः । **परिभाषाश्रयणादिति** । येन नाप्राप्त इति, मध्येऽपवादा इति वेत्यर्थः । **वलादिमात्रेति** । अयं तु कित्त्व-लक्षणोऽपीति भावः । वलादिमात्रविषयत्वेन वलादिलक्षणशब्दस्यैकाज्लक्षणे लक्षणापत्त्याऽयं पाठो न युक्तः । **पूर्वविप्रतिषेध इति** । एवञ्च ('पूर्व')विप्रतिषेधेन निषेधो भवती'ति भाष्यं वाक्यशेषाध्याहारेण व्याख्येयमिति भावः । अत्र पक्षे पूर्व-विप्रतिषेधाश्रयणे गौरवात्समाध्यन्तरमेवाह—**अथवेति** । इदमेव मुख्यं समाधानम् ॥

---

१ 'एष' क्वचिन्न पा० । २ 'वे'ति क्वचिन्न पा० । ३ 'उगन्तलक्षणस्य' 'उगिल्लक्षण' पा० । ४ इदं क्वचिन्न ।

'यस्य विभाषे'ति प्रतिषेधात् । तत्रारम्भसामर्थ्याद्विभाषा लभ्येत । पुनरिङ्ग्रहणादिडेव[1] भवति ॥ [ इण्निष्ठायाम् ] ॥

**तीषसहलुभरुषरिषः[2] ॥७।२।४८॥**

॥*॥ इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः ॥*॥ **इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधो वक्तव्यः । इह मा भूत्—प्रेषिता प्रेषितुम् प्रेषितव्यम् ॥** [तीषसहलुभ] ॥

**वसतिक्षुधोरिट् ॥७।२।५२॥**

इडिति वर्तमाने पुनरिङ्ग्रहणं किमर्थम् ? ॥*॥ पुनरिङ्ग्रहणं नित्यार्थम् ॥*॥ **इडिति वर्तमाने पुनरिङ्ग्रहणं क्रियते ॥ [ किं प्रयोजनं ? ॥ ] 'नित्यार्थम्' । नित्यार्थोऽयमारम्भः ॥** [ वसतिक्षुधोरिट् ] ॥

**गमेरिट् परस्मैपदेषु ॥७।२।५८॥**

॥*॥ गमेरिड्वरस्मैपदेषु चेत्कृत्युपसङ्ख्यानम्[3] ॥*॥ **गमेरिट् परस्मैपदेषु[4] चेत्कृत्युपसङ्ख्यानं कर्तव्यम् । जिगमिषिता जिगमिषितुम् जिगमिषितव्यम् ॥ तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ? ॥ न कर्तव्यम् । अविशेषेण गमेरिडागममुक्त्वा**

---

प्र.] **तीष** । 'इषु इच्छाया'मिति केचित्तौदादिकमुदितमधीयते । अन्ये तूदित्त्वस्य प्रयोजनमपश्यन्त 'इष इच्छाया'मिति पठन्ति । ये त्विह 'तीषुसहे'ति पठन्ति तन्मतेनेह विशेषणार्थ उकारः।तत्र वार्तिककारमतेन त्रयोऽपीषयोऽननुबन्धकाः। इह च 'तीषसहे'ति पाठस्तदाह—**इषेरिति** । 'इष आभीक्ष्ण्ये' इत्यस्य क्रैयादिकस्य तु विकल्पमिच्छति वार्तिककारः । तौदादिकस्य तु उदित्त्वेऽभ्युपगम्यमाने 'तीषसहे'ति पाठेऽननुबन्धकपरिभाषया क्रैयादिकस्यैव ग्रहणं स्यात् । **इह मा भूदिति** । विकल्पः । तेन इष गताविल्यस्मात्तकारादौ नित्यमिड्भवति । **[तीषसहलुभ ]** ॥

**गमेः । सिद्धंत्विति** । इह तु जिगमिषितेवाचरति 'जिगमिषित्रीयते' इति

---

उ.] **इण्निष्ठायां** । भाष्ये—**आरम्भसामर्थ्याद्विभाषा लभ्येतेति** । प्रतिषेधबाधनद्वारेति भावः । न चैवं 'निरःकुषो निष्ठाया'मित्येव सूत्रमस्तु, 'यस्य विभाषे'त्यस्य प्राप्त्या निष्ठायां विकल्पाऽप्राप्तेरनिष्ठायामित्यस्य वैयर्थ्यापत्तेः । सामर्थ्येनानुमानिकवचनकल्पने तु न किंचिल्लाघवं, पर्युदासेन कृत्येव विकल्प इति शङ्कावारणाऽर्थं च तदित्याहुः । **[ इण्निष्ठायाम् ]** ॥

**तीषसह । केचिदिति** । वामनादयः । **अपश्यन्त इति** । न च 'उदितो वे'ति फलं, क्त इड्विकल्पस्यानेनैव सिद्धत्वादिति भावः । **तन्मतेनेति** । क्र्यादेर्विकल्पाऽसिद्ध्याऽयं पाठो न युक्तः । **क्रैयादिकस्यैवेति** । न तु तौदादिकस्येत्यर्थः । तस्मात्तौदादिकस्योदित्पाठो न युक्तः । **[ तीषसह ]** ॥

**गमेरिड । सिद्धन्त्वितीति** । सूत्रस्थपरस्मैपदग्रहणं फलोपहितात्मनेपद-

---

१ 'दिडेवेति' पा० । २ 'तीषुसह' पा० ।
३ वार्त्तिकमिदं क्वचिन्न । ४ 'पदे चेत्' पा० ।

**'आत्मनेपदपरे ने'ति वक्ष्यामि** ॥*॥ आत्मनेपदपरप्रतिषेधे उक्तम् ॥*॥ **किमुक्तम् ?** ॥ **"आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेध" इति ।** इहापि-॥*॥ आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधो वक्तव्यः॥*॥ तत्परपरे **तावत्—संजिगंसिष्यते** । सीयुटि–**संगंसीष्ट** । एकादेशे–**संगंस्यन्ते** । **एकादेशे कृते व्यपवर्गाऽभावान्न प्राप्नोति**॥*॥ सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ॥ * ॥ **सिद्धमेतत्** ॥ **कथम् ?** ॥ **'गमेरात्मनेपदेन समानपदस्थस्य [ इट्प्रतिषेधात्' । गमेरात्मनेपदेन समानपदस्थस्य ] इण्न भवतीति वक्तव्यम्** ॥ [ गमेरिड्परस्मैपदेषु ] ॥

## न वृद्भ्यश्चतुर्भ्यः ॥७।२।५९॥

॥*॥ वृतादिप्रतिषेधे च ॥*॥ **किम् ?** ॥*॥ कृत्युपसङ्ख्यानं ॥*॥ **[ कृत्युपसङ्ख्यानं ] कर्तव्यम् । विवृत्सिता । विवृत्सितुम् । विवृत्सितव्यम्** ॥ **तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ?** ॥ **न कर्तव्यम् ?** ॥ **अविशेषेण वृतादिभ्य इट्प्रतिषेधमुक्त्वा 'आत्मनेपदपर इड्भवती'ति वक्ष्यामि** ॥*॥ आत्मनेपदपरे इड्वचने तत्परपरसीयुडेकादेशेष्विड्वचनम् ॥ * ॥ **आत्मनेपदपर इड्वचने तत्परपरसीयुडेकादेशेष्विड्वक्तव्यः** । तत्परपरे **तावत्–विवर्तिषिष्यते** । सीयुटि–**वर्तिषीष्ट** । एकादेशे–**वर्तिष्यन्ते वर्द्धिष्यन्ते** ॥*॥ सिद्धं तु वृतादीनामात्मनेपदेन

प्र.]बहिरङ्गत्वादात्मनेपदस्य प्रतिषेधाऽभावः।केचित्तु योगविभागेनेष्टसिद्धिमाहुः।'गमेः सकारादाविड्भवती'त्येको योगः । ततः 'परस्मैपदे'ष्विति द्वितीयो योगो नियमार्थः । तुल्यजातीयापेक्षत्वाच्च नियमस्यात्मनेपदविषय एवेण्निवर्त्यत इति कृति, परस्मैपदलुकि चेड्भवत्येव—जिगमिषितुम् । जिगमिषितव्यम् । जिगमिष त्वमिति ॥

**न वृद्भ्यः । सिद्धं त्विति** । तेन परस्मैपदलुक्यपि प्रतिषेधो भवति–विवृत्स

उ.]निमित्तत्वाऽभावोपलक्षणं।तेन संजिगमिषितेत्यादौ तृजन्ते इट्सिद्धिरिति बोध्यम्। **बहिरङ्गत्वादिति** । वार्तिकेऽन्तरङ्गत्वाद्गमिनिमित्तात्मनेपदस्यैव ग्रहणमिति भावः ।

**नियमार्थ इति**। 'परस्मैपदे एवे'ति नियमार्थ इति भावः। तदाह–**तुल्येति** । **परस्मैपदलुकि चेति** । परस्मैपदे परे इत्यर्थे 'न लुमते'ति निषेधेन तत्परत्वाऽभावान्नस्यादिडिति भावः । यद्यप्यङ्गस्येत्यस्यानुवृत्तस्य आर्द्धधातुकस्येत्यादावङ्गनिमित्तस्येत्यर्थस्य क्लृप्ततया गमेः परस्याङ्गनिमित्तस्य सादेरार्धधातुकस्येत्यर्थाद्विनिरूपिताङ्गस्यात्रोद्देश्यकोटौ प्रवेशाऽभावेन 'न लुमते'त्यस्य न प्राप्तिस्तथापि परस्मैपदस्य प्रत्ययतया तदाक्षिप्ताङ्ग एव तत्प्रवृत्त्या प्रत्यये परतः पूर्वकार्यसत्त्वेन च स्यादेव निषेध इति भावः । भाष्ये—कृतीत्युपलक्षणं बोध्यम् । **[ गमेरिट् ]** ॥

१ 'व्यपवर्गभावान्न प्राप्नोति । अन्तादिवद्भावेन व्यपवर्गः । उभयत आश्रये नान्तादिवत् ।' पा० । २ अयं पाठो लुप्तः । ३ अयं पाठः सर्वत्र लुप्तः । ४ 'पदपरवचने' । ५ 'ष्विड्ग्रहणं' । ६ इदं क्वाचित्कम् ।

समानपदस्थस्येड्वचनात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'वृतादीनामात्मनेपदेन समानपदस्थस्ये[ड्वचनात्'। वृतादीनामात्मनेपदेन समानपदस्थस्ये–]ड्भवतीति वक्तव्यम् ॥*॥ चतुस्तासिक्लृपिग्रहणानर्थक्यं च ॥*॥ चतुर्ग्रहणं चानर्थकम्। सर्वेभ्यो हि वृतादिभ्यः प्रतिषेध इष्यते ॥ तासिग्रहणं चानर्थकम् ॥ किं कारणम् ? ॥*॥ निवृत्तत्वात्सकारस्य ॥*॥ निवृत्तं 'सकारादा'-विति। तास्ग्रहणे चेदानीमक्रियमाणे क्लृपिग्रहणेनापि नार्थः। एषोऽपि हि वृतादिः पञ्चमः ॥

भवेत्क्लृपिग्रहणं न कर्तव्यं, तास्ग्रहणन्तु कर्तव्यम्। यद्धि तत्सकारादाविति न तच्छक्यं निवर्तयितुं, तृच्यपि हि प्रसज्येत–वर्तिता वर्धिता ॥ तास्ग्रहणे चेदानीं क्रियमाणे क्लृपिग्रहणमपि कर्तव्यमन्येभ्योऽपि वृतादिभ्यस्तासौ मा भूदिति ॥ भवेत्तासिग्रहणं कर्तव्यं, क्लृपिग्रहणं तु नैव कर्तव्यम् ॥ अन्येभ्योपि वृतादिभ्यः तासौ कस्मान्न भवति ? ॥ 'परस्मैपदे'ष्विति वर्तते, क्लृपेरेव च तास्परस्मैपदपरो नान्येभ्यो वृतादिभ्यः ॥ यद्येवं तास्ग्रहणेनापि नार्थः ॥ तृचि कस्मान्न भवति ? ॥ 'परस्मैपदेष्वि'ति वर्तते ॥

प्र.]त्वमिति। अन्यथा 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधः स्यात्। विवृत्सित्रीयत इत्यत्र तु पूर्ववदात्मनेपदस्य बहिरङ्गत्वादिडभावः। चतुर्ग्रहणं चेति। 'कृपू सामर्थ्ये' इत्यस्यानन्तरं वृत्करणं पठ्यते तद्द्युतादीनां वृतादीनां च समाप्त्यर्थं भविष्यति। एकस्यानेकप्रयोजनाऽविरोधात्। सर्वेभ्य इति। संकल्प्स्यतीत्यादौ कृपेरपीत्यर्थः। भवेत्तासिग्रहणमिति। क्लृपिग्रहणाऽकरणपरमेतन्न तु तासिग्रहणकरणपरम्। तथा चाऽस्यापि प्रत्याख्यानं करिष्यते। परस्मैपदेष्विति वर्तत इति। वृतादीनामनुदात्तत्वात्स्यसनौ विहाय क्लृपेस्तासिं चार्द्धधातुकं वलादिपरस्मैपदपरं

उ.] न वृद्भ्यः। सिद्धन्त्विवतीति। अत्राऽपि परस्मैपदग्रहणं फलोपहितात्मनेपदनिमित्तत्वाऽभावलक्षकमित्यादि प्राग्वत्। समाप्त्यर्थमिति। एवञ्चेह चतुर्ग्रहणमुत्तरसूत्रं च न कर्तव्यमित्यर्थः। संकल्प्स्यतीति। 'तासि चे'ति चेन सादेरप्यनुकर्षणादिति भावः। एवञ्चतुर्ग्रहणाऽभावे 'तासि चे'ति चोऽपि व्यर्थ इति तात्पर्यम्।

भाष्ये–निवृत्तं सकारादाविति। 'न वृद्भ्य' इति सूत्र एवेत्यर्थः। अतएव वक्ष्यति–तन्निवृत्तौ वर्तितेत्यादावपि प्राप्नोतीति। 'परस्मैपदे'ष्वित्यनुवर्तमाने कथमन्येभ्यस्तासिनिवृत्तिस्तदाह–वृतादीनामिति। 'तासिं चार्धधातुक'मित्यत्र 'विहाये'ति शेषः। वृद्भ्यः स्यसनोर्लुटि च क्लृप इति परस्मैपदं स्यादिविषये विकल्पेन विधीयते इति तत्रैवेट्प्रतिषेध इति परस्मैपदग्रहणाऽनुवृत्तौ चतुर्ग्रहणं, तासि च क्लृप इति सूत्रञ्च न कार्यमिति भावः। न च 'स्यन्त्स्यती'त्यादौ उदिल्लक्षणविकल्पबाधनार्थं

१ अयं पाठो लुप्तः। २ 'सर्वेभ्यो वृतादिभ्यः प्रतिषेधः' इति वार्त्तिकमित्यन्ये। ३ 'तुः' क्वाचित्कः। ४ अपिः क्वचिन्न। ५ 'भ्योऽपि' पा०।

## उपदेशेऽत्वतः ॥७।२।६२॥

॥*॥ तासावत्वत्प्रतिषेधे घसेः प्रतिषेधप्रसङ्गोऽकारवत्त्वात् ॥*॥ **तासावत्वत्प्रतिषेधे घसेः प्रतिषेधः प्राप्नोति–जघसिथ ॥ किं कारणम् ? ॥ 'अकारवत्त्वात्' । सोऽपि ह्यकारवान् ॥*॥** सिद्धं तु हलादिग्रहणात् ॥*॥ **सिद्धमेतत् ॥ कथम् ? ॥ ['हलादिग्रहणात्'] । हलादिग्रहणं कर्तव्यम् । तच्चावश्यं कर्तव्यम्–अद्यशी प्रयोजयतः ॥ अद्यशी तावन्न प्रयोजयतः ॥ किं कारणम् ?॥ 'तासावनिट' इत्युच्यते सेटौ चेमौ तासौ ॥ अञ्ज्वशू तर्हि प्रयोजयतः॥ अञ्ज्वशू चापि न प्रयोजयतः॥ किं कारणम् ?॥ 'तासौनित्याऽनिट' इत्युच्यते, विभाषितेटावेतौ ॥ अदिस्तर्हि प्रयोजयति । आदिथ ॥ क्रियमाणेऽपि**

प्र.]नास्ति। एतच्च यथान्यासाश्रयेणोच्यते । यदा त्वात्मनेपदेन समानपदस्थस्येड्वतीत्युच्यते तदा परस्मैपदेष्विति नानुवर्त्यमिति। 'से' इत्येतदवश्याऽनुवर्त्यं, तस्मिन्ननुवर्तमाने 'तासि चे'त्यपि कर्तव्यम् । 'क्लृप' इत्येतत्तु न कर्तव्यं, क्लृपेरन्येभ्यो वृतादिभ्यस्तासेरात्मनेपदपरत्वादिटोऽभावात् । [ **न वृद्भ्यश्चतुर्भ्यः** ] ॥

**उपदेशे । तासाविति** । तासाविडभावे सत्यत्वतस्थलि प्रतिषेधो विधीयमान इत्यर्थः । **सिद्धं त्विति** । उपदेशग्रहणेन द्वयं संबध्यते। उपदेशे योऽत्वान्, हलादिश्चेति । न च घसिराद्युपदेशे हलादिः । **अञ्ज्वशू तर्हीति** । अशू व्याप्तावित्यस्यानुदात्तेत्त्वात्थलभावादुपन्यासोऽयुक्तः । **क्रियमाणेऽपीति** । यद्यपि स्थान्युपदेशे

उ.]चतुर्ग्रहणं । तत्र हि (सति) तत्सामर्थ्यात्पुनर्विधानकल्पनद्वारा, प्रत्येकं निषेधव्यापारबोधनद्वारा वा तस्याऽपि निषेध इति वाच्यम्,–'न वृद्भ्य' इत्यनेन परत्वात्तद्बाधसिद्धेः। 'निषेधाश्च बलीयांस' इति न्यायाच्च । नचैवमपि 'विवृत्सिते'त्यनुरोधेन परस्मैपदस्य फलोपहितात्मनेपदनिमित्तत्वाऽभावोपलक्षणत्वावश्यकत्वेन 'वर्तिते'त्यादावतिव्याप्तिवारणाय तत्र 'सादे'रित्यनुवृत्त्यावश्यकतया 'तासिचे'त्यावश्यकमिति वाच्यम्, इष्टापत्तेः । अत एव पूर्वमेव तास्ग्रहणं कर्तव्यं, क्लृपिग्रहणन्तु नैव कर्त्तव्यमिति भाष्ये उक्तम् । 'यद्येवं तास्ग्रहणेनापी'ति भाष्यन्तु सिद्धान्त्येकदेश्युक्तिरिति बोध्यं । तद्ध्वनयन्नाह—**एतच्चेति । से इत्येतदिति** । परस्मैपदग्रहणस्योक्तार्थोपलक्षणत्वाऽभावे चेत्येतदपि द्रष्टव्यम् । [ **न वृद्भ्यः** ] ॥

**उपदेशेऽत्वतः** । ननु हलादिग्रहणेऽपि घसेः प्रतिषेधः प्राप्नोत्येवेत्यत आह–**उपदेशग्रहणेनेति । नच घसिरिति** । उपदेशत्वावच्छेदेन यो हलादिरित्यर्थः । **आद्युपदेश इति** । आद्ये उपदेशे इत्यर्थः । आदिश्चासावुपदेशश्चेति विग्रहः । 'अद्युपदेश' इति पाठस्तु सुगम एव। **अनुदात्तेत्त्वादिति** । वस्तुतस्तु भाष्यप्रामाण्येनाऽस्यानुदात्तेत्त्वाऽभावमप्याश्रित्य परस्मैपदं थलस्त्येवेति बोध्यम्। भाष्ये–**आदिथेति** । केचित्तु

१ 'घसः' पा० । २ 'अद्यशी' पा० । ३ 'तासौ नित्यानिट इत्यु' । 'तासावनिडि' पा० । ४ तेटौ चैतौ' ।

**वै हलादिग्रहणेऽत्र प्राप्नोति—जघसिथ । एषोऽपि [हि] हलादिः** ॥*॥ तस्य चाभावात्तासौ ॥*॥ **'तासावनिट' इत्युच्यते न च घसिस्तासावस्ति ॥ ननु च यस्तासौ नास्त्यनिडप्यसौ तासौ भवति॥ नैवं विज्ञायते—'यस्तासावनि'डिति ॥ कथं तर्हि ? ॥ 'यस्तासावस्त्यनिट् चे'ति ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गंस्यते ?** ॥[ ॥*॥ सप्तम्यर्थे वतिः ॥*॥] । **सप्तम्यर्थेऽपि वै वतिर्भवति । तद्यथा मथुरायामिव मथुरावत् । पाटलिपुत्र इव पाटलिपुत्रवत् । एवं तासाविव तास्वत्** ॥ [ उपदेशेत्वतः ] ॥

---

प्र.] घसिर्हलादिर्न भवति तथापि स्वोपदेशे हलादिरेव। **तस्य चाऽभावादिति**। उपमाने दृष्टानां धर्माणामुपमेये भूतानां भाविनां वा संप्रत्ययः । तत्र 'तास्वत्थलि नेड्वती'त्युच्यमाने यदि घसिस्तासौ स्यात्ततस्थलि प्रतिषेधोऽतिदिश्येत। यतस्तु तासौ नास्ति ततोऽस्य तासावनिट्त्वमशक्यं प्रतिपत्तुमिति थल्यतिदेशो न प्रवर्तते ।

**अनिडप्यसाविति** । असत्त्वादेवेडभावात् । **सप्तम्यर्थे इति** । तासाविव तास्वदित्यौपश्लेषिकमधिकरणमाश्रीयते । तासौ परतः पूर्वस्य यथेण्न भवति तथा थल्यपीत्यर्थः । ननु चास्य स्थान्यदिस्तासावस्ति स चाऽनिट् चेति तदादेशस्यापि स्थानिवद्भावात्सत्वाऽनिट्त्वे स्याताम् । नैतदस्ति । स्थानिवद्भावः शास्त्रीयेष्वेव कार्येषु प्रवर्तते । न च तासौ सत्वं शास्त्रीयं कार्यम् । अतएव वयेस्थलि वयिथेति प्रतिषेधाऽभावः । क्रमेरपि च क्रमिथेति भाव्यम् । न हि तासौ नित्यानिट् क्रमिः । आत्मनेपद इडभावात्, परस्मैपदे सेट्त्वात् । **[ उपदेशेऽत्वतः ]** ॥

---

उ.] 'इडत्यर्तिव्ययती'नामिति नित्येटैव सिद्धेऽत्र 'हलादे'रित्यस्य प्रयोजनं चिन्त्यमित्याहुः।तत्राऽद्ग्रहणं न कार्यमिति भाष्याशयमन्ये। **तथापि स्वोपदेशेति** । अस्योपदेशग्रहणस्याऽचस्तास्वदित्यत्राप्यपकर्षणेन तत्र चक्षिङः ख्यादेशेऽजेर्व्यादेशे च 'चख्याथ' 'विवेथे'त्यादिसिद्धये उपदेशत्वसामानाधिकरण्येनैवान्वयावश्यकत्वेनात्राऽपि तथैवाऽन्वय उचितः । स्वोपदेश एव च मुख्य इति स एवाश्रीयते, न तु स्थान्युपदेश इति भावः । ननु घसेस्तासावभावेऽपि असत्त्वादेव तस्य तत्रेडभावोऽप्यस्तीत्यत आह—**उपमाने इति** । यथोशीनरवन्मद्रेषु यवाः संपन्नाः संपत्स्यन्त इति वा प्रतीतिः । सर्वथोपमाने दर्शनमवश्याश्रयणीयमिति भावः । **अशक्यं प्रतिपत्तुमिति** । स्थानिवत्त्वं तु न, तासौ सत्तायास्तत्सहस्रेणाप्यतिदेष्टुमशक्यत्वादिति भावः । एतदभिप्रायमजानतः प्रश्नो भाष्ये—**ननु च यस्तासाविति । तासौ परतः पूर्वस्येति** । तास्परधातोः परस्य वलाद्यार्धधातुकस्य अर्थात्तास्रूपस्यैव यथेण्न भवति तथेत्यर्थः । तासौ परतः पूर्वस्य धातोर्यथा इट्—इण्निमित्तत्वं न भवति तथेत्यक्षरार्थः।**शास्त्रीयेष्विति** । प्रत्यासत्तेः । **न चेति** । लौकिकत्वात् । **वयेरिति** । 'वेञो वयि'रिति लिटि वयादेशः । प्रतिषेधाऽभावाच्च क्रादिनियमान्नित्यमिड्वति । **नहि तासाविति** ।

---

१ इदं क्वचिदपि नास्ति ।

## ऋतो भारद्वाजस्य ॥७।२।६३॥

**किमर्थमिदमुच्यते न 'अचस्तास्वत्थल्यनिटो नित्य'मित्येव सिद्धम् ॥ एवं तर्हि नियमार्थोयमारम्भः–'ऋत एव भारद्वाजस्य नान्यतो भारद्वाजस्ये'-ति ॥ क्व मा भूत् ? ॥ ययिथ वविथेति** ॥*॥ ऋतो भारद्वाजस्येति नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य ॥*॥ **ऋतो भारद्वाजस्येति नियमानुपपत्तिः ॥ किं कारणम् ? ॥ 'अप्राप्तत्वात्प्रतिषेधस्य' । गुणे कृते रपरत्वे चाऽनजन्तत्वात्प्रतिषेधो न प्राप्नोति ॥ असति नियमे को दोषः ?** ॥*॥ तत्र पचादिभ्य इड्वचनम् ॥*॥ **तत्र पचादिभ्य इड्वक्तव्यः—पेचिथ शेकिथेति ॥**

**यदि पुनरयं भारद्वाजः पुरस्तादपकृष्येत—'अचस्तास्वत्थल्यनिटो नित्यं भारद्वाजस्य' । 'उपदेशेऽत्वतः' । 'भारद्वाजस्य' । तत 'ऋतः' । 'भारद्वाजस्ये'ति निवृत्तम् ?॥ सिध्यत्येवमयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो**

---

**प्र.]** ऋतो । **गुणे कृत इति** । 'जहर्थे'त्यादौ । न ह्ययमजन्तो नाप्युपदेशेऽत्वान् । **असति नियम इति** । 'जहर्थे'त्यादाविड्प्रतिषेधार्थ एव योगोऽस्त्विति भावः । **तत्र पचादिभ्य इति** । पूर्वयोगाभ्यां पचादिभ्यस्थलि नित्ये प्रतिषेधे प्राप्ते पक्षे इड्विधेयः । 'जहर्थे'त्यादौ च नित्यः प्रतिषेध इष्यते । तत्र 'भारद्वाजस्ये' ति वचनात् स्मृत्यन्तरानुसन्धानाद्विकल्पः प्राप्नोति । नियमफलमन्यथोपपादयितुमाह—**यदि पुनरिति** । पूर्वयोगे भारद्वाजग्रहणं कृत्वा तदेव द्वितीये योगेऽनुवर्त्यते । **स्वस्मा-**

---

**उ.]** अनिट इत्यत्राऽपि प्रत्यासत्त्या तासावित्यध्याह्रियते इति बोध्यम् । अजन्तस्य धातोः प्रयोगमात्रावच्छेदेन इड्रहितस्याप्रसिद्धेः क्वाऽनिडित्याकाङ्क्षोदयात् । एवञ्चाऽजेरिवाऽस्यापि स्नुक्रमेरिति नियमेन पदभेदेन विभाषितेट्त्वेन नित्यानिट्त्वाभावान्न प्रतिषेध इति भावः । **[ उपदेशेऽत्वतः ]** ॥

**ऋतो भार** । भाष्ये–**न अचस्तास्वदिति** । नच ऋकारान्ते विकल्पेन निषेधार्थमिदं सूत्रमिति वाच्यम् , भारद्वाजातिरिक्तैरपि 'अचस्तास्व'दिति सामान्यसूत्रप्रणयनेन निषेधस्यैवाङ्गीकृतत्वेन स्मृत्यन्तरानुसन्धानद्वारेण विकल्पस्य वक्तुमशक्यत्वादिति भावः । भाष्ये पेचिथेत्युलक्षणं 'पपिथे'त्यादेरपि । तदाह–**पूर्वयोगाभ्यामिति** । नियमपक्षे हि तास्वत्थल्यनिटो नित्यमित्यनुवर्त्य योऽयं तासौ नित्यानिटस्थलीण्निषेधः स भारद्वाजमते ऋकारान्तस्यैव नान्यस्य भारद्वाजमते इत्यर्थात् उभयोरपि नियमाङ्गीकारादिति भावः । इदञ्चाऽचस्तास्वदिति सिद्धे नियम इत्युपक्रमे उक्तेस्तत्र पचादिभ्य इड्वचनमित्युक्तेश्च विज्ञायते । एतेन सजातीयत्वादृकारान्ते तस्यैव प्राप्तेश्चाऽचस्तास्वदित्यस्यैव नियम इत्यपास्तं । स्वयं दोषान्तरमप्याह–**जहर्थेत्यादौ चेति** । 'अचस्तास्व'दित्यस्याऽप्राप्त्या पूर्वोक्तयुक्त्या विकल्पाऽसंभवस्य वक्तुमशक्यत्वादिति भावः । अत्रत्यं भारद्वाजग्रहणं कथं व्यवहितपूर्वयोगेऽपकर्षेण संबध्येते-

---

१ 'पपिथ' । २ 'निषेधस्य' पा० । ३ 'रेवं' पा० । ४ 'कृष्यते' पा० ।

भवति ॥ एवं तर्हि,—॥*॥ योगविभागात्सिद्धम् ॥*॥ **योगविभागः करि-ष्यते।** 'अचस्तास्वत्थल्यनिटो नित्यमुपदेशे' । ततः–'अत्वतः' । अत्वतश्चोप-देश इति ॥ [ ऋतो भारद्वाजस्य ]॥

**बभूथाततन्थजगृम्भववर्थेति निगमे ॥७।२।६४॥**

**वृग्रहणं किमर्थं न क्रसृभृवृस्तुद्रुस्रुश्रुवो लिटी'त्येव सिद्धम् ॥ एवं तर्हि** ॥*॥नियमार्थोऽयमारम्भः॥*॥ **निगमएव यथा स्यात्॥क्व मा भूत् ?॥ववरिथ॥**

**वस्वेकाजाद्धसाम् ॥७।२।६७॥**

**किमर्थमिदमुच्यते ?** ॥*॥ वस्वेकाजाद्धसांवचनं नियमार्थम् ॥*॥ **निय-**

---

**प्र.]न्मतादिति ।** भारद्वाजस्य मतं पेचिथ पपिथेति इड्भवत्येव । अन्येषां तु मतम्, पपक्थ पपाथेतीडभावः । न्यासविपर्यये तु मतविपर्ययः प्रदर्शितः स्यात् । ननु च नित्येषु शब्देषु विकल्पिते विधौ विकल्पमात्रं प्रदर्शयितव्यम् । तत्र कस्य किं मतं यत्प्रच्यावितं स्यात् ?। उच्यते–विकल्पप्रतिपादनाय वाग्रहणे एव कर्तव्ये पूजार्थमा-चार्या उपादीयन्ते । सा चैवं पूजा भवति–यदि येनाचार्येण यः शब्दः स्मृतः स तेनैव स्मृतत्वेनोपदिश्यते। एवं हि तस्य स्मर्तृत्वेन प्रमाणत्वेन स्तुतिः कृता भवति। एवं चाङ्गार्ग्यगालवयोरित्यादावनेकाचार्योपादानमर्थवद्भवति । विकल्पस्यैकाचार्योपादा-नेनापि सिद्धत्वात् । **योगविभाग इति ।** ततश्च हरत्यादीनां गुणरपरत्वयोःकृतयोर-नजन्तत्वेऽप्युपदेशेऽजन्तत्वात्सिद्धे प्रतिषेधे अस्य नियमार्थत्वोपपत्तिः । आदेशो-पदेशोऽप्याश्रीयते न तु स्थान्युपदेश एवेति अजत्यादेशस्य वीशब्दस्य, चक्षिङा-देशस्य च ख्यो विकल्पस्थलि भवति—विवेथ विवयिथ। आचख्याथ आचख्यिथ ॥

**बभू । वृग्रहणमिति ।** एकदेशाक्षेपद्वारेण ववर्थशब्दसमुदाय एवाक्षिप्यते ॥

**वस्वे । किमर्थमिति ।** यदि क्रादिनियमः प्रकृत्याश्रयस्य प्रत्ययाश्रयस्य च

---

उ.]त्यत आह—**पूर्वयोग इति।** 'अचस्तास्व'दित्यत्र। **मतविपर्यय इति।** भारद्वा-जस्येडभावोऽन्यस्येडित्याकारः । **ननु चेति ।** विकल्पप्रतिपादनमात्रफलत्वादाचार्य-ग्रहणस्येति भावः । **ततश्चेति ।** योगविभागद्वारा चोपदेशग्रहणापकर्षः कार्य इति बोध्यते । **न तु स्थान्युपदेश एवेति ।** यस्य यो मुख्य उपदेशस्तस्य स एवाश्रीयते तदभावे तु गौणोऽपीत्यर्थः । यद्यपि स्थान्युपदेशग्रहणेऽप्युपदेशेत्वत्त्वमस्ति तथापि तदुपदेशे तासौ नित्यानिट्त्वाऽभावः ।प्रत्यासत्त्या यदुपदेशेऽत्वान् तदुपदेशविशिष्ट-स्यैव तासौ नित्यानिट्त्वग्रहणमुचितमिति भावः । तुष्टोथेत्यादौ तु पुरस्तात्प्रतिषेध-काण्डारंभसामर्थ्यादस्यापि क्रादिनियमेन निषेध इति नेड्वशीत्यत्र भाष्य उक्तम् ॥

**बभूथात । भाष्ये–वृग्रहणं किमर्थमिति ।** भूविषये तु न शङ्कितम् । उकारान्तानां सेट्त्वात् । यथा चैतत्तथा 'एकाच उपदेशे' इत्यत्र निरूपितम् । अस्य तु क्रसभ्रितिनिषेधाल्लिट्यनिट्त्वमिति बोध्यम् । [ **बभूथाततन्थ** ]॥

---

१ भाष्यमिदमित्यन्ये । २ 'श्रुस्रुवो' पा० ।

मार्थोऽयमारम्भः–'वस्वावेकाजाद्धसामेव' ॥ क मा भूत् ? ॥ बिभिद्वान् ॥ किमुच्यते—'नियमार्थमिति, न पुनर्विध्यर्थमपि[1] स्यात् । प्रतिषेधोऽपि ह्यत्र[2] प्राप्नोति—'नेड्वशि कृती'ति, कृच्चैवाऽयं वशादिश्च ॥ एवं तर्हि—'कृसृभृवृ-स्तुद्रुस्रुश्रुवो लिटी'त्येतस्मान्नियमादत्रेड्भविष्यति ॥ नात्र तेन परिप्रापणं प्राप्नोति ॥ किं कारणम् ? ॥ प्रकृतिलक्षणस्य प्रतिषेधस्य स[3] प्रत्यारम्भः, प्रत्ययलक्षणश्चाऽयं प्रतिषेधः ॥ "उभयोः स प्रत्यारम्भः ।"[4] ॥ कथं ज्ञायते ? ॥ "वृङ्वृञोर्ग्रहणात्" ॥ कथं कृत्वा ज्ञापकम् ? ॥ इमौ वृङ्वृञावुदात्तौ, तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यति त्वाचार्यः–'उभयोः स प्रत्यारम्भ' इति, ततो वृङ्वृञोर्ग्रहणं करोति । न खल्वपि कश्चिदुभयवान्प्रतिषेधः प्रकृतिलक्षणः प्रत्ययलक्षणश्च । तुल्यजातीयेऽसति यथैव प्रकृतिलक्षणस्य नियामको भवत्येवं प्रत्ययलक्षणस्यापि नियामको भविष्यति ॥

अथ यावता वसावेकाजाद्धसिभ्य[5] इटा भवितव्यं को न्वत्र विशेषो नियमार्थे वा सति विध्यर्थे वा ? ॥ न खलु कश्चिद्विशेषः, आहोपुरुषिकामात्रं तु,–भवानाह 'विध्यर्थमिति, वयं तु ब्रूमो–'नियमार्थ'मिति ॥

अथैकाज्ग्रहणं किमर्थम् ? ॥ इह मा भूत्–बिभिद्वान् चिच्छिद्वानिति॥

प्र.]प्रतिषेधस्य निवर्तकस्तत इदं नियमार्थम् । अथ प्रकृत्याश्रयस्यैव, ततो 'नेड्वशि कृती'ति प्रतिषेधे प्राप्ते विध्यर्थमित्युभयसंभवात्प्रश्नः । **न खलु कश्चिदिति** । उभयथैकाजाद्धसिभ्य इटा वसौ भाव्यं नान्येभ्यो बिभिद्वानित्यादावित्यर्थः । **आहोपुरुषिकामात्रमिति** । अहोऽहं पुरुष इति यस्याभिमानः सोऽहोपुरुष उच्यते । यथा 'यर्वाणस्तर्वाणो नामर्षयो बभूवु'रित्युक्तम् । तस्य भावः । मनोज्ञादित्वाद्वुञ् । क्वस्वभिप्रायेणैतदुच्यते– **न खलु कश्चिद्विशेष इति** । अन्यत्र विशेषोऽस्त्येव । यदि क्रादिनियमः प्रकृत्याश्रयस्य प्रतिषेधस्य स्यात्ततो 'युयुविवे'-त्यादौ 'श्र्युकः किती'ति प्रतिषेधः स्यात्, वृग्रहणं च क्रादिसूत्रेऽनर्थकं स्यादिति प्रत्ययाश्रयोऽपि प्रतिषेधः क्रादिनियमेन निवर्त्यतइतिसूत्रमिदं नियमार्थमेव। **अथैका-**

उ.] **वस्वेकाजात्** । विधिनियमयोर्विशेषाऽभावं दर्शयति–**उभयथेति** । कथं तदभिमानवांस्तच्छब्दवाच्यो भवतीत्यत्राह—**यथा यर्वाण इति** । यथा तत्प्रयुञ्जानाः साहचर्यात्ताभ्यां शब्दाभ्यामभिधीयन्ते तथाऽहोऽहं पुरुष इत्यभिमानवान् तेन शब्देनाभिधीयत इत्यर्थः । **तस्य भाव इति** । स चाभिमान एव । कृस्रित्यस्य उभयप्रत्यारंभत्वं नैतस्य निमार्थत्वार्थत्वायैव किन्त्वन्यार्थमपीत्याह–**अन्यत्र विशेषोऽस्त्येवेति** । **नियमार्थमेवेति** । अत एव भाष्ये उक्तं–**वयन्तु ब्रूमो नियमार्थमिति** ।

१ 'विध्यर्थोऽपि' पा० । २ 'ह्ययं' पा० । ३ 'स'इति क्वचिन्न।
४ ॥*॥ उभयोः स प्रत्यारम्भो वृङ्वृञोर्ग्रहणात् ॥*॥ इति वार्त्तिकमित्यन्ये ।
५ 'एकाज्भ्यः' 'जाम्य' 'जाद्धसिभ्यः' पा० ।

क्रियमाणेऽपि वै एकाज्ग्रहणेऽत्र प्राप्नोति, एषोऽपि ह्येकाच् ॥ एवं तर्हि कृते द्विर्वचने य[1] एकाच् ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गंस्यते ? ॥ एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति यदर्थमेकाज्ग्रहणं क्रियते ॥ ननु चायमस्ति जागर्तिः—जागृवांसोऽनुग्मन्[2] ॥ यत्तर्ह्याकारग्रहणं करोति । न हि कश्चिदकृते द्विर्वचने आकारान्तोऽनेकाजस्ति ॥ ननु चायमस्ति,-दरिद्रातिः ॥ न दरिद्रातेरिटा भवितव्यम् ॥ किं कार-

प्र.] ज्ग्रहणमिति । क्रियमाणमप्येकाज्ग्रहणमनिष्टनिवृत्तये नाऽलमिति मत्वा प्रश्नः। बिभिद्वानिति । कृतद्विर्वचनानामनेकाचां निवृत्त्यर्थमित्यभिप्रायः । एकाज्ग्रहणसामर्थ्यादिति । यद्यपि नित्यत्वाद्विर्वचने कृतेऽनेकाच्त्वादिण्न भवतीति परिहारोऽस्ति तथापि परिहारान्तरसद्भावान्नोक्तः । तथा हि—द्विर्वचनस्यावकाशः,—पपाचेति । इटोऽवकाशो यत्र कृते द्विर्वचने एकाच्त्वं,—पेचिवान् आदिवानिति । 'बिभिद्वा'नित्यादौ तु नित्यत्वाद्विर्वचनं पूर्वम् । जागर्तिरिति । 'उषविदजागृभ्योन्यतरस्या'मिति विकल्पितत्वादामो जागर्तेः परः क्वसुः । चिरिजिरिचकास्यादिभ्यस्तु 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थ'मिति आमा भाव्यमिति क्वसोः परस्याऽसंभवः । जागृवांस इति । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्य'मिति द्विर्वचनाऽभावः। न दरिद्रातेरिति। दरिद्रातेरनित्य आमित्यात औ णल इति ओकारे विधा-

उ.] न्यायसिद्धत्वादित्यर्थः। पपिवानित्यादावालोपसिद्धिस्तु सन्निपातपरिभाषाया अनित्यत्वादिति बोध्यम् । अनिष्टनिवृत्तये नालमिति । भिद्वसित्यस्यामवस्थायामेकाच्त्वान्नियमव्यावर्त्यविषयाऽभावादनर्थकं तदित्यर्थः । इड्द्विर्वचनयोरन्यतरस्य निरवकाशत्वे तदेव स्यान्न तु नित्यमत उभयोरवकाशत्वं दर्शयति-तथाहीति । विषयभेदात्फलभेदाच्चापवादत्वं नेत्याशयः । नित्यत्वाद्विर्वचनमिति । इट् तु कृते द्विर्वचनेऽनेकाच्त्वादप्राप्तेरनित्यः । शब्दान्तरात्प्राप्नुवत इव शब्दान्तरेऽपि प्राप्नुवतोऽप्यनित्यत्वान्नायं नियतः परिहार इति परिहारान्तराश्रयणमिति तत्त्वम् । चिरीत्यादि । मन्त्रे तेषां क्वस्वन्तानां प्रयोग एव नास्तीति भावः । 'जागृवांस' इत्यत्र लिटि धातोरितिद्विर्वचनं स्यादत आह—द्विर्वचनप्रकरण इति। ननु दरिद्रातेः क्वसौ 'कास्यनेकाज्ग्रहण'मित्यामा भाव्यमिति कथमिडुपक्षिप्तोऽत आह—दरिद्रातेरिति । अकारलोपे इति । न च परत्वादौत्वे सन्निपातपरिभाषया लोपो दुर्लभः । आर्धधातुके विवक्षिते तद्विधानेन लोपस्यान्तरङ्गत्वात् । नन्वेवमादन्तत्वाभावादौत्वस्याऽप्राप्तिः । औविधानसामर्थ्यादेव भूतपूर्वगत्या आकारान्तत्वमाश्रित्य णल आदेशप्रवृत्तेः । अनित्यत्वमिति । अत एव 'कास्प्रत्यया'दिति सूत्रे दरिद्राञ्चकारेति भाष्यप्रयोगः सेङ्गच्छते इति बोध्यम् । भाष्ये-सिद्धोऽसाविति । एवञ्चादन्तत्वाभावान्नास्य तत्र प्रवृत्तिरिति भावः । एकस्य सिद्धशब्दस्य पौनरुक्त्यपरिहारायाह—

१ 'य' इति क्वाचित्कम् । २ 'सो अनु' पा० ।

णम् ? ॥ उक्तमेतत्–"दरिद्रातेरार्धधातुके लोपः, सिद्धश्च प्रत्ययविधा'विति। यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धोऽसाविड्विधौ । एवमपि भूतपूर्वगतिर्विज्ञायेत–'आकारान्तो यो भूतपूर्व'इति ॥ एकाज्ग्रहणमेव तर्हि ज्ञापकम् ॥ ननु चोक्तं–'जागर्त्यर्थमेतत्स्यात् ॥ नैकमुदाहरणमेकाज्ग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्या'ज्जागर्तेर्नेत्येव' ब्रूयात् ॥

**अथ घसिग्रहणं किमर्थं, न 'एका'जित्येव सिद्धम् ॥***॥ घसिग्रहणमन-

---

प्र.] तव्ये औकारविधानेन ज्ञापितम्।ओकारस्य प्रश्लिष्टावर्णत्वादुच्चारणे लघवं भवति, औकारस्य तु विश्लिष्टावर्णत्वादोकाराद्विवृततरत्वाच्च गौरवमित्योकार एव विधेयः । तत्र वृद्धिरेचीति वृद्धौ कृतायां ययावित्यादि सिध्यति । ददरिद्राविति त्वाकारलोपे न सिध्यति । तदर्थमौकारविधानमनित्यत्वमस्मादामो ज्ञापयति । **सिद्धोऽसाविड्विधाविति** । क्वचित्तु'सिद्धसिद्ध' इति पाठः । सिद्धश्चासौ सिद्ध इति विशेषणसमासः । अत्यन्तसिद्ध इत्यर्थः । एकेन सिद्धशब्देन सामान्यसिद्धिः प्रतिपाद्यते, द्वितीयेन तु विशेषसिद्धिः । **एवमपीति** । सांप्रतिकस्याऽकृतद्विर्वचनस्याऽनेकाच आकारान्तस्याऽभावाद्दरिद्राग्रहणे कर्तव्ये लाघवार्थमाद्ग्रहणं स्यादिति 'नैकमुदाहरणमाद्ग्रहणं प्रयोजयती'ति नोक्तम् । **नैकमुदाहरणमिति** । ऊर्णोतेर्णुवद्भावादेकाच्त्वादेकाज्ग्रहणेनाऽनिवृत्तिः । **जागर्तेर्नेति** । सूत्रमिदं नियमार्थम् । तत्र यद्यस्य जागर्तिरेव निवर्त्यः स्यात्तस्यैव साक्षात्प्रतिषेधं कुर्यात् । लघीयसी हि साक्षात्प्रतिपत्तिः । न च दरिद्रातिर्द्वितीयो निवर्त्यः,अस्यां ह्यवस्थायामाद्ग्रहणस्याऽकृतद्विर्वचनानेकाजाकारान्तार्थत्वाद्भूतपूर्वकारान्ताश्रयणात्स्यादेव तत इडागमः । यदात्वेकाज्ग्रहणेन कृतद्विर्वचना एकाचो गृह्यन्ते तदाऽऽद्ग्रहणं कृतद्विर्वचनानेकाजाकारान्तार्थं—'पपिवा'-निति । सांप्रतिकाकारान्तसद्भावे भूतपूर्वगतिरयुक्ताऽऽश्रयितुम् ।

**अथ घसिग्रहणमिति** । 'द्विर्वचने चे'ति स्थानिद्भावः पूर्वविप्रतिषेधाश्रयेण प्रत्याख्यायते—'द्विर्वचनं यणयवायावादेशाऽल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य'

---

उ.]**अत्यन्तसिद्ध इति**। कथमेतदर्थलाभस्तत्राह–**एकेनेति**।एवं सिद्धिद्वयप्रतिपादनेऽत्यन्तसिद्धिरुक्ता भवतीत्यर्थः । **आकारान्तस्याभावादिति** । एकाच्पदस्य कृतद्विर्वचनैकाच्परत्वे लक्षणायां तात्पर्यग्राहकत्वापेक्षया भूतपूर्वाश्रयणं लघीयइति भावः।

ननूर्णोतेः सत्त्वान्नैकमित्ययुक्तमत आह–**ऊर्णोतेरिति** । **प्रतिषेधमिति** । 'वसोर्जागु'रिति न्यासः कार्य इति भावः। ननु तदपेक्षया एकाज्ग्रहणं नियमपरं लघ्वत आह—**लघीयसी हीति** । **अवस्थायामिति** । एकाच्ग्रहणेन कृतद्विर्वचनैकाचामग्रहणे इत्यर्थः। **अकृते इति**। आद्ग्रहणस्य तज्ज्ञापकापेक्षया भूतपूर्वानेकाजाकारान्तार्थत्वं युक्तमिति भावः। **सांप्रतिकेति** । तत्र हि इडागमं विना आकारलोपो दुर्लभ इति भावः । एवञ्च दरिद्रातेर्द्ददरिद्रावित्येव । **प्रत्याख्यायते इति**। स्थानिवत्त्वं

---

१ 'इद्दरिद्रस्य' (६-४-११४) इत्यत्रोक्तम् ।

च्कत्वात् ॥*॥ घसिग्रहणं क्रियते, लोपे कृते[1]ऽनच्कत्वादिण्न प्राप्नोति ॥ इदमिह संप्रधार्यमिट् क्रियतां लोप इति, किमत्र कर्तव्यम् ?॥ परत्वादिडागमः॥ नित्यो लोपः । कृतेऽपीटि प्राप्नोत्यकृते ऽपि ॥ इडपि नित्यः । कृतेऽपि लोपे प्राप्नोत्यकृतेऽपि ॥ अनित्य इट् । न हि कृते लोपे प्राप्नोति ॥ किं कारणम् ?॥ अनच्कत्वात्' ॥ एवं तर्हि द्विर्वचने कृतेऽभ्यासे योऽकारस्तदाश्रय इड्भविष्यति ॥ न सिध्यति ॥ किं कारणम् ? ॥ द्वित्वाल्लोपस्य परत्वात् । द्विर्वचनं क्रियतां लोप इति किमत्र कर्तव्यम् ? ॥ परत्वाल्लोपः । लोपे कृतेऽनच्कत्वाद्विर्वचनं न प्राप्नोति । घसिग्रहणे पुनः क्रियमाणे न दोषो भवति ॥ कथम् ? ॥ वचनादिड्भविष्यति ॥ इटि कृते द्विर्वचनं क्रियतां लोप इति यद्यपि परत्वाल्लोपः, स्थानिवद्भावाद्विर्वचनं भविष्यति ॥ [वस्वेकाजाद्धसाम्] ॥

**विभाषा गमहनविदविशाम् ॥७।२।६८॥**

॥*॥ दृशेश्च[2] ॥*॥ दृशेश्चेति वक्तव्यम् । ददृश्वान् । ददृशिवान् ॥

प्र.]इति । तत्र घस्-घस् इति स्थिते 'घसिभसोर्हलि चे'ति परमप्युपधालोपं पूर्वविप्रतिषेधेन बाधित्वा द्विर्वचनं भवति । तत्र कृते पुनः प्रसङ्गविज्ञानादुपधालोपः, ततः कृतद्विर्वचन एकाजेव भवतीति सिद्ध इडागम इति मत्वा प्रश्नः। इतरस्तु-स्थानिवद्भावारम्भात्पूर्वविप्रतिषेधो नाश्रितस्ततः परत्वान्नित्यत्वाद्वोपधालोपे कृत एकाच्त्वाभावान्न द्विर्वचनं स्यान्नापीडागम इति मत्वाह—**घसिग्रहणमनच्कत्वादिति** । **नित्यो लोप इति** । हल्यचि च विधानात् । इट् तु लोपे कृतेऽनच्कत्वान्न प्राप्नोतीत्यनित्यः। पूर्वविप्रतिषेधवाद्याह—**इडपि नित्य इति** । कृते द्विर्वचने उपधालोपे चाऽभ्यासाकाराश्रयेणैकाच्त्वात् । स्थानिवद्भाववाद्याह–**अनित्य इडिति** । पूर्वविप्रतिषेधवाद्याह—**एवं तर्हीति** । 'पूर्वस्मादपि विधौ स्थानिव'दिति सर्वत्र नाश्रीयत इति स्थानिवद्भावादनेकाच्त्वमिति न चोदनीयम् । स्थानिवद्भाववाद्याह—**न सिध्यतीति** । **परत्वादिति** । नित्यत्वादित्यपि बोद्धव्यम् । **वचनादिति** । 'अपवादत्वा'दिति न बोद्धव्यम्, सत्यपि संभवे बाधनं भवतीति लोपद्विर्वचनयोरिटा बाधप्रसङ्गात् । किं तु क्रमः प्रदर्श्यते–घसिग्रहणे क्रियमाणे कृताकृतप्रसङ्गित्वादिडामगो नित्यः, कृतयोरपि लोपद्विर्वचनयोः प्रवर्तनात्सावकाशश्च । लोपोऽपि नित्यः । तत्र परत्वादिडागमः, ततो लोपः, ततो द्विर्वचनमिति सिद्धं–'जक्षिवा'निति ॥ **[वस्वेकाजा]** ॥

**विभाषा गमहनविद** । **दृशेरिति वर्तत इति** । 'विभाषा सृजिदृशो'-

उ.]तु न, द्वित्वनिमित्ताज्निमित्तादेशाभावादिति भावः। **स्थानिवद्भावादिति**। 'अचः परस्मि'न्नित्यनेन सावकाशयोरेव नित्यत्वेन व्यवस्थेत्यत इटः सावकाशत्वं दर्शयति–**कृतयोरपीति** । इदं चिन्त्यं, तत्प्राप्तिकालेऽवश्यं तयोः प्राप्तेः । तस्माद्धलि लोपं बाधित्वाऽपवादत्वादिटि पश्चादचि लोपः । तत आतिदेशिकं द्विर्वचनम् औपदेशिकस्य

१ 'कृते' इति क्वचिन्न । २ इदं वार्त्तिकं लुप्तम् ।

तर्त्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । दृशेरिति वर्तते ॥ [ विभाषा गमहन ]

## ऋद्धनोः स्ये ॥ ७।२।७० ॥

॥*॥ स्वरतेर्वेट्त्वादृतः स्ये (इति) विप्रतिषेधेन ॥*॥ स्वरतिलक्षणाद्वावचनादृतः स्य इत्येतद्भवति विप्रतिषेधेन । स्वरतिलक्षणस्य वावचनस्यावकाशः स्वर्ता स्वरिता । ऋतः स्य इत्यस्यावकाशः–करिष्यते हरिष्यते । इहोभयं प्राप्नोति–स्वरिष्यति । अस्वरिष्यत् । 'ऋतः स्ये' इत्येतद्भवति विप्रतिषेधेन ॥

## यमरमनमातां सक्च ॥७।२।७३॥

किमुदाहरणम् ? ॥ अयंसीत् अनंसीत् अयासीत् अवासीत् ॥ नैतदस्ति, नास्त्यत्र विशेषः सति वा इड्यसति वा ॥ इदं तर्हि–अयंसिष्टाम् अयंसिषुः । व्यरंसिष्टां व्यरंसिषुः । अनंसिष्टाम् अनंसिषुः । अयासिष्टाम्अयासिषुः । अवासिष्टाम् अवासिषुः ॥ इदं चाप्युदाहरणम्–अयंसीत् व्यरंसीत् अनंसीत् अयासीत् अवासीत् ॥ ननु चोक्तं–'नास्त्यत्र विशेषः सति वेड्यसति वे'ति ॥ अयमस्ति विशेषः–यद्यत्रेण्न स्याद्वृद्धिः प्रसज्येत । इटि पुनः सति 'नेटी'ति प्रतिषेधः सिद्धो भवति ॥ मा भूदेवं 'ह्यन्ताना'मित्येवं भविष्यति ॥ अत्रापि[3] 'नेटी'त्यनुवर्तते । तच्चाऽवश्यमिड्ग्रहणमनुवर्त्यम्–'अधाक्षी'दित्येवमर्थम् ।

आकारान्तैश्चापि[4] पदपूर्व एकवचन उदाहरणं–मा हि यासीत् । यद्यत्रेण्न स्यादनुदात्तस्य ईटः श्रवणं प्रसज्येत । इटि पुनः सत्युक्तमेतत्—"अर्थवत्तु सिचश्चित्करणसामर्थ्याद्धीट उदात्तत्व"मिति । तत्रैकादेश उदात्तेनोदात्त इत्युदात्तत्वं सिद्धं भवति ॥ [ यमरमनमातां सक्च ] ॥

---

प्र.]रित्यतः । 'इडत्यर्तिव्ययतीना'मिति योगं प्रयोजनाऽभावादुल्लङ्घ्य 'वस्वेकाजाद्घसा'मित्यत्र विभाषाग्रहणसंबद्धं दृशिग्रहणमनुवर्तते । [ विभाषागम ] ॥

**यमरमनमातां सक्च । किमुदाहरणमिति ।** वृत्तिकारैरेकवचनान्तान्युदाहरणान्युपन्यस्तानि । तत्र विशेषं सगिटोरबुध्वा पृच्छति । इतरस्तु वृद्ध्यभावं स्वरे च विशेषं मत्वैकवचनमेवोदाहरति—**अयंसीदिति । अयंसिष्टामिति ।** न केवलमत्र वृद्ध्यभावो विशेषो यावत्सगिटोःश्रवणमपि । **मा हि यासीदिति ।** अयासीदित्यत्रा-

---

उ.]बाधेऽपीति भाष्यार्थमन्ये । **ततो द्विर्वचनमिति ।** 'द्विर्वचनेची'ति रूपस्थानिवत्त्वात् ॥

**विभाषा ग । अनुवर्तते इति ।** एकदेशे स्वरितत्वप्रतिज्ञानान्मध्ये फलाऽभावाच्च मण्डूकप्लुत्या दृशिग्रहणमात्रमनुवर्तत इति भावः । 'विभाषाग्रहणसंबद्ध'मित्यनेन मध्ये प्रयोजनाऽभावो दर्शितः । केवलस्याऽनुवृत्तौ हि नित्यविधानार्थं तत्रापि संबन्धः स्यात् । थलि विकल्पस्तु पूर्वसूत्रेणैव सिद्ध इति भावः ॥

**यमरमनम । तत्र विशेषमिति ।** सिजीड्भ्यां रूपस्य सिद्धत्वादिति भावः ।

---

१ 'ऋतः स्येड्विप्रति' 'ऋतः स्ये विप्र' 'ऋतःस्यो' पा० । २ इदं क्वचिन्न । ३ 'तत्रापि' पा० । ४ 'आकारान्ताश्चापि' पा० ।

**ईशः से ॥७।२।७७॥ ईड्जनो[1]र्ध्वे च ॥७।२।७८॥**

**किमर्थो योगविभागो न—'ईशीड्जनां स्ध्वे' इत्येवोच्येत ॥ ईशो ध्वे मा भूदिति ॥ इष्यत एव[2] ईशिध्वे इति ॥ ईड्जनोस्तर्हि से मा भूदिति[3] । इष्यते एव—ईडिषे जनिषे इति[3] ॥ ईशस्त[4]र्हि स्वे मा भूदिति[3] ॥ इष्यते एव**

प्र.]ट्स्वरो भवतीति तन्निवृत्त्यर्थो माङ्प्रयोगः । 'हि'शब्दप्रयोगो 'हि चे'ति निघातप्रतिषेधार्थः । इट्यसत्याद्युदात्तं पदं स्यात् । सति तु तस्य सिज्भक्तत्वादुदात्तत्वादेकादेश उदात्तेनोदात्त इत्यन्तोदात्तं पदं भवति । तत्रा'दिः सिचोऽन्यतरस्या'मिति पक्ष आद्युदात्तं पदं, पक्षेऽन्तोदात्तम् । एतच्चा'ऽनिटः पित उपसङ्ख्यान'मित्युपसङ्ख्यानमनपेक्ष्य प्रयोजनमुक्तम् । तेन यथा 'मा हि कार्ष'मित्यत्र पर्यायेणाद्यन्तयोरुदात्तत्वं भवत्येवं 'मा हि यासी'दित्यत्राऽसत्यपीटि भविष्यतीतीटो भावाऽभावयोः स्वरे भेदाऽभावः । [ **यमरमनमातां सक्च** ] ॥

**ईशः से ॥ इष्यत ईशिध्वे इति** । एतदर्थमेव चकारेणेशिरनुकृष्यते । **इड्जनोस्तर्हीति** । कथं पुनरीड्जनोर्ध्वे चेति सूत्रपाठे योगविभागेनेड्जनोः सेशब्दे इट् शक्यते निवर्तयितुम् ?। उच्यते । चकारेणेशेरनुकर्षणात्सकारादौ सेशब्द इति इटि सिद्धे 'ईशः से' इति नियमार्थं विज्ञायते–'ईशेरेव सेशब्द इण्न त्वीड्जनो'रिति । **स इति**—'थासः से' इत्यस्यानुकरणं—'सुपां सुलु'गिति सप्तमीलुका निर्दिष्टम् । **इष्यत इति** । न चाऽनिष्टार्थो योगविभागः । **जनिष इति** । व्यत्ययेन शप् । तस्य 'बहुलं छन्दसी'ति लुक् । छान्दसत्वादुपधालोपाऽभावः। 'जायसे' इत्यत्र तु नित्यत्वाद्विकरणे कृते तेन व्यवधानादिडभावः । **ईशेस्तर्हि स्वे मा भूदिति** । चकारेणेशेरनुकर्षणात् सकारादौ ध्वशब्दे चेटि सिद्धे इशः स इति नियमः क्रियते–'ईशः सेशब्द एव सकारादाविण्नाऽन्यस्मिन् सकारादा' विति। यद्यप्येकदेशविकृतमनन्यवदिति स्वशब्दः सेशब्द एव भवति तथाप्यन्यस्य सकारादेर्व्या-

उ.] **वृद्ध्यभावमिति**। 'अयंसी'दित्यत्र हलन्तलक्षणाया 'नेटी'ति प्रतिषेधेन । स्वरविशेषस्तूत्तरत्र स्फुटीभविष्यतीति आदन्तोदाहरणे पदपूर्वत्वस्य फलं दर्शयति–**अयासीदित्यत्रेति । तत्रादिरिति** । अन्तोदात्ते प्राप्ते इदमारभ्यते । **अनिटः पित इति** । अनिटः सिचः परस्य पित उदात्तत्वं भवतीति तदर्थः । एवञ्च यथास्थितसूत्रमतेऽयं दोष इति भावः । [ **यमरमनमातां सक् च** ] ॥

**ईशः** । अत्र'इड्जनोः स्ध्वे चे'ति पाठे भाष्यम् । तत्र सादेः सार्वधातुकस्य सूत्र एवोपादानाच्चकारेणेशिरेवानुकृष्यत इत्याह–**एतदर्थमित्यादि** । अत एवाह—**कथं पुनरिति** । अत्र पाठे विपरीतं प्राप्नोत्येवेति भावः । **चकारेणेशेरनुकर्षणादिति** । एकयोगेनेति वक्तुमुचितं । ननु 'से'इत्यस्यानुकरणे सयीति युक्तमत आह–**सुपां सुलुगिति** । जनेर्दैवादिकत्वादाह–**व्यत्ययेनेत्यादि** । **लुगिति** । अत एव

१ 'जनोः स्ध्वे च' पा०। २ एवः क्वचिन्न। ३ इतिः क्वचिन्न। ४ 'ईशेस्तर्हि' पा०।

ईशिष्वेति ॥ से तर्हि यः स्वशब्दस्तत्र यथा स्यात्, क्रियासमभिहारे यः स्वशब्दस्तत्र मा भूदिति ॥ अत्रापीष्यते–'स भवानीशिष्वेशिष्वेत्येवायमीष्ट' इति । आतश्चेष्यते—एवं ह्याह–"सिद्धं तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचना"दिति ॥ [ ईड्जनोर्ध्वे ] ॥

अतोयेयः[2] ॥७।२।८० ॥

किं सार्वधातुकग्रहणमनुवर्तत उताहो न ? ॥ किं चार्थोऽनुवृत्त्या ? ॥ बाढमर्थः[3] ॥ यद्यकारात्परो याशब्द[4]–आर्धधातुकमस्ति ॥ ननु चायमस्ति

प्र.]वत्त्र्यस्याऽभावादन्यत्वमाश्रीत्य स्वशब्दो व्यावर्त्यते। से तर्हीति । ईड्जनोर्ध्वे चे'-त्यनेन सर्वसकारादेरिटि विहिते ईशः स इत्यनेन नियमः क्रियते–'सेशब्द एव सकारादा'विति। तेनेशिष इत्यत्र भवति । ईशिष्वेत्यत्रापि, स्थानिवद्भावात्। यस्तु लोट एव स्थाने स्वशब्दो नासौ सेशब्द इति व्यावर्त्यते । अत्रापीति । लोड्धर्माणौ हिस्वौ लोटो भवत इत्युक्तम् । तेन यथाऽन्यलोडादेशस्य स्वशब्दस्य सेग्रहणेन ग्रहणादिड्भवत्येवं क्रियासमभिहारे समुच्चये च लोडादेशस्य स्वस्य । अत्रैवार्थे वार्तिककारवचनं साक्षित्वेनाह–आतश्चेष्यत इति । तदेवं दोषवान् गुरुश्च योगविभाग इत्येक एव योगः कर्तव्यः–'ईडीशिजनां सेध्वयो'रिति । [ ईड्जनोर्ध्वे च ] ॥

अतो । केषां चित्–'अतो या इय'इति सकारान्तानुकरणत्वात्पाठः। अन्येषां तु सौत्रत्वान्निर्देशस्य यलोपस्यासिद्धत्वानाश्रयणादतो येय इति । किं चार्थ इति–आचार्यदेशीय आह । प्रयोजनाधीना ह्यधिकारानुवृत्तिरिति मन्यते। आचार्य आह-बाढमर्थ

उ.]च जादेशो न। नन्वेवं 'से'शब्दे ङिति परतो 'जनसनखना'मिति लोपः स्यादत आह–छान्दसत्वादिति । अन्यत्वमाश्रित्येति। नियमविधानसामर्थ्याद्रूपभेदमात्रेणाऽन्यत्वमाश्रीयत इत्यर्थः। नन्वस्य सेशब्दविकारत्वाभावात्कथमिष्यतेऽत आह–लोड्धर्माणाविति । योगविभागेन तत्राऽयमर्थः साधितः । आतश्चेति । लोण्मध्यमपुरुषस्येत्युक्त्या लोड्धर्मत्वन्तयोरुक्तमिति भावः । [ ईशः से ] ॥

अतो येयः । सकारान्तेति। अनुकार्येणाऽर्थवत्त्वात्षष्ठ्या जातायाः सुपां सुलुगिति लुकि रुत्वयत्वयलोपेषु तस्याऽसिद्धत्वाद्गुणाऽभावे 'अतो या' इति रूपम् । अन्येषान्त्विति । अत्र पाठे आकारान्तानुकरणं, ततः षष्ठ्यामात इति योगविभागादालोपे ततो रुत्वादिषु सौत्रत्वाद्गुणः ॥ 'या' इत्याकारान्तानुकरणेऽविभक्तिको निर्देश इति परे। एतदेवाभिप्रेत्य'याशब्द आर्धधातुक'मिति निर्विसर्गपाठो भाष्ये । क्वचित्तु सविसर्गः पाठः । नाऽयं प्रश्नः सिद्धान्तिनः, तेनानुवृत्तेरङ्गीकारादत आह–आचार्यदेशीय इति । 'बाढमर्थ' इति वदतो 'यदि'गर्भं वाक्यमयुक्तमत आह–चोदक इति । ननु पर इयादेश इति कथं लोपस्य बाधकत्वमत आह–कृताकृतेति ।

१ 'देशः' पा० । २ 'अतो या इयः' पा०। ३ 'बाढमयमर्थो यद्यकारात्परो' पा० । ४ 'याःशब्दः' पा० ।

चिकीर्ष्यात् जिहीर्ष्यात्[1] ॥ लोपोऽत्र बाधको भविष्यति ॥ किं तर्ह्यस्मिन्योग उदाहरणम् ? ॥ पचेत्[2] यजेत् ॥ अत्राप्यतो दीर्घो यञीति दीर्घत्वं प्राप्नोति । स यथैवेयादेशो दीर्घत्वं बाधते एवं लोपमपि बाधेत । तस्मात्सार्वधातुकग्रहणमनुवर्त्यम् ॥ [ अतो येयः ] ॥

## आने मुक् ॥ ७।२।८२ ॥

॥*॥ मुकि स्वरे दोषः[3] ॥*॥ मुकि सति स्वरे दोषो भवति—पचमानः यजमानः । मुका व्यवहितत्वादनुदात्तत्वं न प्राप्नोति ॥ ननु चायं मुगदुप-

प्र.] इति। चोदक आह—यद्यकारादिति। किं तु नास्तीति भावः। चिकीर्ष्यादिति । 'लिङाशिषी'त्यार्धधातुकसंज्ञा । लोपोत्रेति । कृताऽकृतप्रसङ्गित्वान्नित्यो लोपः, इयादेशस्तु लोपे कृतेऽनकारान्तत्वान्न प्राप्नोतीत्यनित्यः । इतरस्त्वियादेशस्य सावकाशत्वे लोपस्य नित्यत्वं वक्तुं शक्यं नान्यथेति मत्वाह—किं तर्ह्यस्मिन्निति । स यथैवेति । न च येननाप्राप्तिन्यायेन दीर्घस्यैव बाधक इति शक्यं वक्तुम् । यस्मात्स दीर्घः सार्वधातुके विधीयत इति सिद्धान्तः। तथा च 'ज्ञाजनोर्जा' इत्यत्र वक्ष्यते—'जानातीत्यत्राऽप्यतो दीर्घो यञीत्येव दीर्घो भविष्यती'ति । यदि तिङि दीर्घो विधीयेत कथं जानातीत्यत्र स्यात्। यत्तु वक्ष्यते—'तिङीत्येवं त'दिति नासौ सिद्धान्तः। मध्येऽपवादा इत्यनाश्रित्यैतदुक्तं, तस्मिन्नाश्रीयमाणे लोपमेवेयादेशो बाधेत न दीर्घम् । दीर्घस्तु परत्वात्स्यादिति सर्वथा सार्वधातुकानुवृत्तिः सप्रयोजना । [ अतो येयः ] ।

आने । मुकीति । पूर्वान्तकरणे दोष इत्यर्थः । 'अदुपदेशा'दिति स्वरो न सिध्यति । 'अग्निचित्वा'नित्यादौ 'ह्रस्वनुड्भ्यां मतु' बित्याद्युदात्तत्वं प्राप्नोतीति 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति दूषयित्वा 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानव'दिति परिभाषा भाष्यकारेण व्यवस्थापितेति व्यवधातैव मुमागमः । ननु चायमिति । अकार उपदेश इत्याश्रीयते न त्वाकारान्त उपदेश इति । मुक्चाऽकारमात्रभक्त इति

उ.] ननु प्रत्युदाहरणप्रश्ने प्रकृते उदाहरणप्रश्नो न युक्तोऽत आह—इतरस्त्विति। नचेति।'तिङी'त्येवं तद्विधानात्सर्वत्र प्राप्त इति मन्यते। उत्तरयति—यस्मात्स इति। अनाश्रयणे हेतुः। सार्वधातुकानुवृत्तेरावश्यकतेत्याह—सर्वथेति। तदभावे 'पचे'दित्यत्रेष्टस्येयोऽनापत्तिः । 'चिकीर्ष्या'दित्यत्राऽनिष्टस्य तस्यापत्तिः। तदनुवृत्तौ तु दीर्घस्य बाधः । अत्र विषयभेदेऽप्यानर्थक्यप्रतिहतानां विप्रतीतं बलावलमिति दीर्घादेर्बाधः। बाधकत्वसामान्याच्चाऽपवादत्वव्यवहार इति सर्वेष्टसिद्धिः । [ अतो येयः] ॥

आने मुक् ।ननु स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वान्न दोषोऽत आह—ह्रस्वनुड्भ्यामिति । दूषयित्वेति । स्वरानुद्देश्यकस्वरविधिविषये इत्यर्थः । पचमानादौ चित्स्वरं बाधित्वा परत्वात्तास्यनुदात्तेदित्यनुदात्तत्वमिष्यते । अकार उपदेश इति। विशेषणत्वेऽपि उपदेशशब्दस्य सौत्रत्वात्परनिपात इत्यभिमानः । मुक्चाऽकारेति ।

१ इदं क्वचिन्न । २ 'पचेत' 'यजेत' पा० । ३ क्वाचित्कमदः ।

देशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते॥न सिध्यति–अङ्गस्य मुगुच्यते,विकरणान्तं चाऽङ्गम् । सोऽयं[1] सङ्घातभक्तोऽशक्योऽदुपदेशग्रहणेन ग्रहीतुम् ॥ एवं तर्ह्यभक्तः करिष्यते । ॥*॥ अभक्ते च[2] ॥*॥ किं ? ॥ स्वरे दोषो भवति पचमानो यजमानः । मुका व्यवहितत्वादनुदात्तत्वं न प्राप्नोति ॥ एवं तर्हि परादिः करिष्यते ॥ ॥*॥ परादौ दीर्घप्रसङ्गः ॥*॥ यदि परादिः क्रियते, 'अतो दीर्घो यञी'ति दीर्घत्वं प्राप्नोति ॥ नैष दोषः । 'तिङी'त्येवं तत् । सिध्यति ॥ सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्तं "मुकि स्वरे दोष" इति ॥परिहृतमेतत्–'अदुपदेशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते"॥ ननु चोक्तम्"अङ्गस्य मुगुच्यते विकरणान्तं चाङ्गं सोऽयं सङ्घातभक्तोऽशक्योऽदुपदेशग्रहणेन ग्रहीतु" मिति । अथा[3]ऽयमभक्तः[4] स्याद्गृह्येताऽदुपदेश-ग्रहणेन ?॥ बाढं गृह्येत[5] ॥ अभक्तस्तर्हि भविष्यति ॥ तत्कथम् ?॥ अतो येयँ[6] इत्यत्र अकारग्रहणं पञ्चमीनिर्दिष्टं, अङ्गस्येति च षष्ठीनिर्दिष्टं, तत्राऽशक्यं

प्र.]व्यवधानाऽभावः। अङ्गस्येति।अङ्गाधिकारादङ्गस्य मुग्विधीयमानोऽङ्गमेव न व्यवदधाति, अवयवान्तरन्तु व्यवदधात्येव । एवं तर्हीति। ककारमनुबन्धमकृत्वा विकरणवदकारान्तादङ्गात्पर आने परतो मध्ये मः करिष्यते । मुकेति । यथान्यासाश्रयेणोक्तम् । 'अभक्तत्वात्तु मकारेणे'ति युक्तं वक्तुम् । एवं तर्हीति । 'आनस्य मु'डिति सूत्रन्यासेन । तिङीत्येवं तदिति । मुटि क्रियमाणे सार्वधातुकमननुवर्त्त्य तिङीत्यनुवर्त्त्यमेवेति भावः । पञ्चमीनिर्दिष्टमिति । पूर्वसूत्र एवाऽत इत्यनेनाङ्गं न विशे-

उ.]अङ्गावयवस्याऽतो मुगित्यर्थ इति भावः। यद्यपि वर्णग्रहणे 'यदागमा' इति नास्ति, अत एव प्रकृते सवर्णदीर्घो न । तथापि अकारान्तोपदेश इत्यर्थस्य स्वरविधौ सिद्धान्तितत्वेन तत्र वर्णग्रहणाऽभावान्न दोष इति भावः । 'अकार उपदेश इत्याश्रीयते नत्वकारान्त उपदेश' इति कैयटोक्तं चिन्त्यमेव । तथाश्रयणेऽपि व्यपदेशिवद्भावेनाऽकारस्यैव तदन्तोपदेशत्वमादाय दोषाऽभावात् । किंच तदनाश्रयणे 'हतो' 'हथ' इत्यादावप्यनुदात्तत्वापत्तेः । एवञ्च विशेष्यत्वादुपदेशशब्दस्य परनिपातोऽपि युक्त एव । अनित्यत्वेन क्वचिदेव वर्णग्रहणे प्रवृत्तिर्न सर्वत्रेति तत्त्वम् । अङ्गाधिकारादिति । सामानाधिकरण्यानुरोधेन तस्य विशेष्यतैवेति तदन्तविधिरिति भावः । अङ्गमेव न व्यवदधातीति ।कुतश्चित्पूर्वस्याङ्गस्य कार्ये वाऽङ्गात्परस्य कार्ये वेति भावः। अवयवन्त्विति । ततः परस्य कार्ये कर्तव्ये इत्यर्थः । 'अवयवान्तर'मिति पाठस्तु चिन्त्यार्थः । कस्यचिदवयवस्य प्रसङ्गे हि तथा वक्तुं युक्तं, नचाऽत्र तथा, अङ्गस्यावयविन एव पूर्वं प्रसङ्गात् । अकारान्तादिति । 'अत' इति पञ्चम्यन्तानुवृत्तेस्तदनुरोधेनाऽङ्गस्येत्यपि पञ्चम्या विपरिणम्यत इति भावः । अभक्तत्वपक्षे मुको-

१ 'सोऽसौ' पा० । २ अस्य व्याख्या लुप्तेति मन्ये । ३ 'अथवा' पा० । ४ 'अभक्तः' पा० । ५ 'गृह्यते' पा० । ६ 'या इय' पा० ।

**विविभक्तित्वादत इति पञ्चम्या अङ्गं विशेषयितुं, तत्प्रकृतमिहाऽनुवर्तिष्यते ॥ एवमपि षष्ठ्यभावान्न प्राप्नोति ॥ 'आने' इत्येषा सप्तम्यत इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति–'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति ॥** [ आने मुक् ] ॥

**अष्टन आ विभक्तौ ॥ ७।२।८२ ॥**

॥*॥ अष्टन्जनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकप्रसङ्गः ॥ * ॥ **अष्ट-**

---

**प्र.**]षितमिति तदन्तविध्यभाव इत्युक्तं भवति। ततोऽङ्गस्य योऽकारस्तस्मात्परस्य यास इय् इत्यङ्गं यथा पूर्वसूत्रे विशेषणं तथेहापीत्यङ्गाऽवयवस्याऽकारस्याने मुग् भवति। **तत्प्रकृतमिति** । विशेष्यं सत्प्रधानमेवेत्यर्थः। **आन इत्येषेति** । अकृतार्था सप्तमी पूर्वत्र कृतार्थायाः पञ्चम्याः षष्ठीं प्रकल्पयति न तु पञ्चमी सप्तम्याः । यद्येवमङ्गस्यात इति समानविभक्तित्वात्तदन्तविधिप्रसङ्गः । नैष दोषः । विशेषणविशेष्यभावे कामचारादङ्गेनाऽतो विशेषणात्। ततो मुगकारमात्रभक्तत्वान्न व्यवधायकः। यद्यपि मुकि कृतेऽध्यर्धमात्रोकारस्तथाप्युपदेशग्रहणादुपदेशे मात्रिकत्वाश्रयः स्वरः प्रवर्तते । तथा च 'पचाव'इत्यादौ दीर्घेऽपि कृते भवति•। 'पचमान' इत्यादौ त्वातो ङित इतीयादेशाऽभावोऽत इति तपरकरणात्। [ **आने मुक्** ] ॥

**अष्टनः** । सौत्रत्वान्निर्देशस्याऽल्लोपोन इत्यकारलोपो न कृतः । समानविचारत्वात्प्रकरणान्तरविहितमपि अनुनासिकस्थानिकमाकारमिहैवोपन्यस्यति–**अष्टन्निति** । यत्र तपरत्वमस्ति तत्र तपरस्तत्कालस्येति वचनाद्गुणान्तरयुक्तस्य तत्कालस्य ग्रहणात्स्थानेऽन्तरतम इति वचनाच्चाऽनुनासिकस्यस्थानेऽनुनासिक एवाकारः प्राप्नोति । यत्रापि तपरत्वाऽभावस्तत्राऽप्याकृतिनिर्देशाद्दीर्घोच्चारणसामर्थ्याच्च ह्रस्वप्लुताऽग्रहणा-

---

**उ.**] ऽभावादाह—**यथान्यासेति** । 'मु'गिति मकारोपलक्षणमिति भावः। **तिङीत्यनुवर्त्त्यमिति** । 'भूसुवोस्तिङी'त्यतः । इदं न युक्तमित्युक्तम् । **पूर्वसूत्र एवेति** । एवञ्चार्थाधिकारानुरोधादिहाप्यङ्गेनाऽकारो विशेष्यत इति भावः । **'तत्प्रकृत'**मित्यस्य यद्धर्मकं प्रकृतं तद्धर्मकमेवेहानुवर्तयिष्यत इत्यर्थ इत्याह–**विशेष्यं सदिति** । ननु विपरीतं किं न स्यादत आह–**अकृतार्थेति** । **उपदेशग्रहणादिति** । वस्तुतस्तत्परसूत्रस्य विध्यर्थत्वपक्षे 'तपरस्तत्कालस्य सवर्णस्य ग्राहक' इत्यर्थो नत्वन्यनिवर्तकमेतदिति कोऽत्र दोषः। नियमपक्षेऽतत्कालसवर्णमेव व्यावर्तयेन्न तु 'यदागमा' इत्येतल्लब्धमिति चिन्त्यमिदम् । नचैवं 'पचमान' इत्यत्रा'ऽऽतो ङित' इति दुर्वारम् । अनित्यत्वेन क्वचिद्वर्णग्रहणे 'यदागमा' इत्यस्याऽप्रवृत्तेरदोषात् । **तपरकरणादिति** । उपदेशग्रहणस्याऽत्राऽभावादिति भावः । [ **आने मुक्** ] ॥

**अष्टन आ** । ननु पथ्यादीनामप्रकृतत्वादुपन्यासोऽसङ्गतोऽत आह–**समानेति**। **यत्रेति** । जनादिविषये 'विड्वनो'रित्यत 'आ'दित्यनुवृत्तेः । पथ्यादिसूत्रे 'आ'दित्युच्चारणाच्चेति भावः । **गुणान्तरेति** । तपरसूत्रेऽणिति नानुवर्तते, विध्यर्थञ्च सूत्रमिति भावः । **यत्रापीति** । यथा प्रकृतसूत्रे । **नन्वाकृतिनिर्देशे ह्रस्वप्लुतयो-**

न्जनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकः प्राप्नोति । अष्टाभिः अष्टाभ्यः । जातः जातवान् । पन्थाः मन्थाः ॥*॥ सिद्धमनण्त्वात् ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ 'अनण्त्वात्' ॥ कथमनण्त्वम् ? ॥ 'अण्सवर्णान्गृह्णाती'त्युच्यते न चाऽऽकारोऽण् । ॥*॥ उच्चारणसामर्थ्याद्वा ॥*॥ अथ वा शुद्ध[1] उच्चारणसामर्थ्याद्भविष्यति ॥ नैतौ स्तः परिहारौ । यत्तावदुच्यते—'अनण्त्वा'दिति । न ब्रूमोऽण्सवर्णान्गृह्णातीति ॥ कथं तर्हि ? ॥ 'तपरस्तत्कालस्ये'ति । यदप्युच्यते "उच्चारणसामर्थ्याद्वे'ति । अस्त्यन्यदुच्चारणे प्रयोजनम् ॥ किम् ? ॥ उत्तरार्थं 'रायो हली'ति ॥ एवं तर्हि नेमौ पृथक् परिहारौ । [*॥ एकपरिहारः ॥*]॥

प्र.] त्सर्वदीर्घव्यक्तिप्रसङ्गेऽन्तरतमपरिभाषोपस्थानादनुनासिकस्य प्रसङ्गः। **सिद्धमनण्त्वादिति**। 'अणुदित्सवर्णस्ये'त्यत्राऽण्ग्रहणेन प्रत्याहारसन्निविष्टा अकारादयो गृह्यन्ते, न त्वाकारादयोऽसन्निविष्टत्वात्। न च प्रत्याहारेऽकारादिभिराकारादयो गृह्यन्ते, नाप्यणुदित्सूत्रे, अङ्गेषु स्वात्मनि च ग्रहणकशास्त्रस्यानभिनिर्वर्तनात्। स्वात्मनि क्रियाविरोधाच्च, ग्रहणकशास्त्राऽन्तराऽभावाच्च। **कथमनण्त्वमिति**। अकारेण गृह्यमाण आकारोऽण् भवतीति मत्वा प्रश्नः । पूर्वोक्तेनाऽभिप्रायेणाह—**अण्सवर्णानिति** । अनण्त्वादेव 'भाव्यमानोऽण्सवर्णान्न गृह्णाती'ति परिहारो नोक्तः । ग्राह्याऽसद्भावाच्चान्तरतमपरिभाषा नोपतिष्ठते । **उच्चारणसामर्थ्याद्वेति**। यद्यनुनासिकोऽभविष्यत्स एवोदचारयिष्यतेति निरनुनासिक एवोच्चारणसामर्थ्यात्प्रवर्तते । तत्र पूर्वः परिहारोऽष्टन्शब्दाऽऽकाराभिप्रायेणोक्तः । उत्तरस्तु जनाद्याकाराभिप्रायेण । चोदकस्तु विषयविभागमबुध्वाह—**नैतौ स्त इति** । **कथं तर्हीति** । अणिति च तत्र नानुवर्तते । **उत्तरार्थमिति** । इहाऽनुनासिक उच्चार्यमाणेऽनुनासिक उत्तरत्र कर्तव्य इति लाघवायाऽननुनासिकोच्चारणं स्यादित्यर्थः । इतरः स्वाभिप्रायमाह—**एवं तर्हीति** ।

उ.] योरपि ग्रहणं स्यादत आह–**दीर्घेति** । अन्यथा ह्रस्वमेवोच्चारयेदिति भावः । दीर्घोच्चारणं दीर्घव्यक्तिसमवेतजातिग्रहणायेति तत्त्वम् । व्यक्तिपक्षाश्रयणेन समाधत्ते भाष्ये–**सिद्धमेतदिति** । अयं भावः -'अष्टन' इत्यादिसूत्रेष्वादिति व्यक्तिर्गृह्यते, व्यक्तिपक्षे च ग्रहणकशास्त्रारम्भात्तेनैव सानुनासिकग्रहणं वाच्यं, तच्चाऽनण्त्वान्न प्रवर्तत इति । तत्राऽनण्त्वं व्युत्पादयति—**अणुदिदिति** । इदञ्च प्रकृतसूत्राऽभिप्रायेण । **न च प्रत्याहारे इति** । चतुर्दशसूत्र्यामित्यर्थः ।

**स्वात्मनीति** । अत्राऽनभिनिर्वृत्तिमूलक एव स्वात्मनि क्रियाविरोधो द्रष्टव्यः । चस्तु वाक्यालङ्कारे । **ग्राह्यासद्भावाच्चेति** । यदि सानुनासिकस्याऽप्यत्र ग्रहणमभविष्यत्तदा तस्यैव प्रवृत्त्यर्थमन्तरतमपरिभाषाम्प्रावर्त्स्यत्, तदभावात्तु न प्रवर्तत इत्यर्थः । **स एवेति** । 'ॐ' इत्यादाविव प्रतिपत्तिलाघवायाऽनुनासिक एवोच्चारणीये शुद्धोच्चारणसामर्थ्येनान्तरतम्यं[2] बाध्यत इति भावः। ननु वाशब्दस्य विकल्पार्थत्वेन

१ 'शुद्धोच्चारणसामर्थ्यान्न भविष्यति' पा० । २ 'तम्यबाधः' पा० ।

**एकः[1] परिहारोऽयं–'सिद्धमनण्त्वादुच्चारणसामर्थ्याद्वे'ति ॥ इह तावदष्टाभिः अष्टाभ्य इति—अनण्त्वात्सिद्धम् । जातः जातवान् । पन्थाः मन्थाः,– उच्चारणसामर्थ्यात्सिद्धम् ॥ यद्येवं पृथक्परिहारयोरपि न दोषो यो यत्र परिहारः स तत्र भविष्यति ॥** [ अष्टन आ विभक्तौ ] ॥

## युष्मदस्मदोरनादेशे ॥७।२।८६ ॥

**'अनादेशग्रहणं[2] शक्यमकर्तुम्' ॥ कथम् ? ॥ हलीत्यनुवर्तते[3] । न चादेशो हलादिरस्ति ॥ तदेतदनादेशग्रहणं तिष्ठतु तावत्सांन्यासिकम्[4] ॥** [ युष्मद ] ।

---

प्र.]अष्टन आत्वे न द्वौ परिहारौ, नापि जनाद्यात्वे, किं तु विषयविभागेन । **एक इति ।** यद्यपि द्वावेतौ परिहारौ, 'वा'शब्दस्य समुच्चयार्थत्वात्तथापि समुदायापेक्षया संभवापेक्षया चैवमुक्तम् । अथ वैकोऽसहायः। क्व चित्कश्चिदन्यनिरपेक्षः परिहार इत्यर्थः । स एवाह—**यद्येवमिति ।** यदि भवान् संमन्यते परिहारसमुदाये यथासंभवमवयवौ परिहारत्वेन, तदा समुदायकल्पनया नाऽर्थः, पृथगेवैतौ परिहारौ यथाविषयमवतिष्ठेते । **[ अष्टन आ ] ॥**

**युष्म । हलीति वर्तत इति ।** 'रायो हली'त्यतः । **न चादेशो हलादिरिति ।** 'भ्यसोऽभ्य'मित्यभ्यमादेशो न तु भ्यमिति भावः। **तदेतदिति ।** उत्तरत्रोपयुज्यते । 'योऽची'ति यत्वमादेशेऽजादौ मा भूत् त्वमहमित्यादौ । शेषे लोप इति शेषव्यव-

---

उ.]प्रसिद्धत्वात्प्रतिज्ञातेऽर्थे पर्यायेण परिहारद्वयमिति भाति, तत्तु न, विरोधात् । विषयभेदे तु पृथक्परिहारत्वमेवेति 'नेमौ पृथ'गित्ययुक्तमत आह—**अष्टन आत्वे इति ।** एकैकत्र विषये पृथक्परिहारौ नेति भाष्यार्थः । एवञ्च 'वा'शब्दः समुच्चयार्थ इति भावः । नन्वेवं तर्ह्येकः परिहारोऽयमित्यसङ्गतमित्याह—**यद्यपीति । तथापीति ।** समुदाय एकः, स च यथासंभवं प्रतिज्ञातेऽर्थे प्रवर्त्तत इति भावः । **स एवेति ।** परिहारग्रन्थशेषत्वादिति भावः । एकग्रन्थत्वे योजनाप्रकारमाह—**यदि भवानिति ।** पूर्वसमुदायरूपत्वमुक्त्वा तत्र समुदायस्यावयवद्वारेण यथासंभवं प्रतिज्ञाते प्रवृत्तिरित्यर्थे परस्य संमतिं दृष्ट्वा पृथक् परिहारत्वेऽपि तथैव न दोष इति प्रतिपाद्यत इत्यर्थः॥

**युष्मद । अभ्यमादेश इति।** पक्षभेदेन लक्ष्यभेदस्याऽनिष्टतया 'अभ्य'मित्येव तत्र पदच्छेदः कार्य इत्यर्थः। 'भ्यसोऽभ्य'मिति सूत्रस्थं 'यथेच्छसि तथास्त्वि'ति भाष्यन्तु केवलयुष्मच्छब्दे रूपाऽविशेषमात्रपरं न तु तन्त्राश्रयणेनोभयादेशप्रतिपादनपरं, 'यथेच्छसी'त्युक्त्योभयत्र तात्पर्याऽलाभात् । तत्र 'भ्यम् भ्यस' इत्यकरणेनाऽभ्यमिति च्छेद एव युक्तः। यत्र भ्यमभ्यमोः फले विशेषस्तस्यानभिधानमेव बोध्यम् । **उत्तरत्र**—योऽचीत्यत्र । **शेषे लोप इति ।** आदेशविभक्तिर्हि तत्र शेषो यथा प्रकल्प्येतेति भावः । **[ युष्मदस्मद्भ्यां ङसोऽश् ] ॥**

---

१ 'एकपरिहारः' पा० । २ इदं वार्त्तिकमिति **गौडाः** ।
३ 'ति वर्त्तते' पा० । ४ 'सान्यासिकम्' ।

**योऽचि ॥ ७।२।८९ ॥**

**अज्ग्रहणं शक्यमकर्तुम् ॥ कथम् ? ॥ अविशेषेण यत्वमुत्सर्गस्तस्य हलादावात्वमपवादः ।** [ योऽचि ] ॥

**शेषे लोपः ॥७।२।९० ॥**

**शेषग्रहणं शक्यमकर्तुम् ॥ कथम् ? ॥ अविशेषेण लोप उत्सर्गस्तस्याऽजादौ[2] यत्वमपवादो हलादावात्वमपवादः[3] ॥** [ शेषे लोपः ] ॥

**मपर्यन्तस्य ॥७।२।९१ ॥**

**परिग्रहणं शक्यमकर्तुं, 'मान्तस्ये'त्येव सिद्धम् ॥ न सिध्यति ॥ किं कारणम् ? ॥ अन्तशब्दस्योभयार्थत्वात् ॥ कथम् ? ॥ अयमन्तशब्दोऽस्त्येव सह तेन वर्तते । तद्यथा–'मर्यादान्तं देवदत्तस्य क्षेत्रं' । सह मर्यादयेति**

---

प्र.] स्थार्थं च । [ युष्मदस्मदारनादेशे ] ॥

**योऽचि । यत्वमुत्सर्ग इति ।** अनादिष्टायां विभक्तौ विधीयमानं यत्वमुत्सर्गो, हलादौ त्वात्वमपवादः। आदेशे तु लोप इत्यसङ्करेणात्वयत्वलोपाः सिध्यन्ति । अज्ग्रहणे क्रियमाणेऽप्यनादेशग्रहणं यत्वलोपयोर्विषयविभागार्थं कर्तव्यमित्यनादेशग्रहणाश्रयेणाऽज्ग्रहणमुत्तरत्र च शेषग्रहणं प्रत्याख्यातम् । [ **योऽचि** ] ॥

**शेषे । अविशेषेणेति ।** 'विभक्ता'वित्यधिकाराद्विभक्तिमात्रे लोपो विधीयमान उत्सर्गो भवति । तस्याऽनादेशे विभक्तौ यत्वमपवादो, यत्वस्यापि हलादावात्वमिति शेषग्रहणं पूर्वत्र चाऽज्ग्रहणमन्तरेण विषयविभागेन कार्यत्रयसिद्धिः । **तस्याजादाविति ।** हलादावात्वविधानात्सामर्थ्यलभ्यमेतत् । [ **शेषे लोपः** ] ॥

**मप । अयमन्तशब्द इति ।** अन्यपदार्थविषयस्याऽन्तशब्दस्येदं व्याख्यानम् । क्वचिदन्तर्भूताऽन्तार्थोऽन्यपदार्थो बहुव्रीहेरभिधेयः, क्वचिदनन्तर्भूताऽन्तार्थ इत्यर्थः। **मर्यादान्तमिति।** मर्यादायाः क्षेत्रावयवत्वात्क्षेत्रेऽन्यपदार्थेऽनुप्रवेशः। **नद्यन्तमिति ।**

---

उ.] **योऽचि ।** अनादेशग्रहणं तु सर्वथावश्यकमित्यज्ग्रहणमाश्रित्य तन्न प्रत्याख्यातमित्याह—**अज्ग्रहण इति ।** [ योऽचि ] ॥

**शेषे।** भाष्ये 'तस्याऽजादौ यत्व'मित्युक्तेरचीत्यस्य कर्तव्यत्वमाभाति, तदपनयायाह–**तस्याऽनादेशे इति । हलादाविति च ।** शेषस्य लोप इत्येतदर्थमपि न, सन्निपातपरिषया टाबभावसिध्या फलाऽभावादिति तात्पर्यम् । एतत्सूत्रत्रयोक्त एव सिद्धान्तो, भाष्यकृदुक्तत्वात्। 'भ्यसोऽभ्यम्' 'शेषे लोपः' 'त्यदादीना'मिति सूत्रेषु तु एकदेश्युक्तिर्वार्तिककारोक्तिव्याख्यामात्रमित्याहुः । [ **शेषे लोपः** ] ॥

**मपर्यन्तस्य।** नन्वाङिव नाऽन्तशब्दोऽभिविधिमर्यादयोस्तस्यावयववाचित्वादतो भाष्याशयमाह—**अन्यपदार्थेति । मर्यादाया इति ।** 'अवयवावयविनोः समवायः संबन्ध' इति उपलक्षणस्याप्यवयवस्य कार्ययोग इत्यर्थः । सामीप्यादिनोपलक्षणस्य

---

१ इदं वार्त्तिकमिति गौडाः । २ 'जादावनादेशे' । ३ 'अपवाद' इति क्वा० ।

**गम्यते । अस्ति प्राक्तस्माद्वर्तते । तद्यथा–'नद्यन्तं देवदत्तस्य क्षेत्र'मिति । प्राङ्नद्या इति गम्यते ॥ तद्यः सह तेन वर्तते तस्येदं ग्रहणं यथा विज्ञायेत[1] ॥ नैतदस्ति प्रयोजनम् । सर्वत्रैवाऽन्तशब्दः सह तेन वर्तते ॥ अथ कथं 'नद्यन्तं देवदत्तस्य क्षेत्र'मिति ॥ नद्याः[2] क्षेत्रत्वे संभवो नास्तीति कृत्वा प्राङ्नद्या इति गम्यते** ॥[*॥ अवधिद्योतनार्थं तु परिग्रहणम् ॥*]॥**अवधिद्योतनार्थं तर्हि-परिग्रहणं कर्तव्यं । मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः**

प्र.]नद्याः क्षेत्रानवयवत्वादन्यपदार्थेऽनुप्रवेशाऽभावः। पर्यन्तशब्दस्त्वन्यपदार्थविषयः–सह तेन वर्तत इति,–परिग्रहणं कृतं। तेन युष्म् अस्म् इत्येतयोरादेशा भवन्ति, न युष् अस् इत्येतयोः । **सर्वत्रेति**। अन्तशब्दोऽवयववाचीत्यवयवेन विग्रहः, समुदायः समासार्थ इत्यवश्यावश्यमन्यपदार्थेऽन्तर्भावः । 'नद्यन्तं क्षेत्र'मित्यत्र त्वन्तशब्दः सामीप्य[3]वाचीत्यन्यपदार्थे नद्या अनन्तर्भावः । यत्तूच्यते–सर्वत्रैवाऽन्तशब्दः सह तेनेति वर्तत इति, तत्संभवापेक्षम् । यस्यावयवत्वं सामीप्यं च संभवति तस्यावयवत्वमेवाश्रीयते, अन्तशब्दस्यावयववाचित्वेन प्रसिद्धतरत्वात्। यस्य त्ववयवत्वासंभवस्तस्य सामीप्यमेवाऽन्तशब्देन प्रतिपाद्यते, यथा–'नद्यन्तं क्षेत्र'मिति । अन्ये त्वाहुः–सर्वत्रैवान्तशब्दोऽवयववाची, कस्य चिन्मुख्यमवयवत्वं, कस्य चित्सामीप्यादुपचरितमित्यभिप्रायेणेदं भाष्यम् । ततश्चाऽन्तशब्दस्यावयववाचित्वान्मपर्यन्तस्यादेशलाभान्नाऽर्थः परिग्रहणेन । **अवधिद्योतनार्थमिति** । यदि युष्मदस्मदी मान्ते

उ.]तु कार्ययोगाऽभावस्तदाह–**नद्या इति**। 'तद्य' इत्यादि भाष्यं व्याचष्टे–**पर्यन्तशब्दस्त्विति** । शब्दशक्तिस्वभावादिति भावः। **अन्यपदार्थविषय इति** । बहुव्रीहिभूत इत्यर्थः । एवञ्च 'परि'शब्दाऽभावेऽर्थसन्देहः स्यात् । पर्यन्तशब्दस्तु सह तेनेत्यर्थ एवेत्यसन्दिग्ध इति तात्पर्यम्। तत्फलन्दर्शयति–**तेनेति। सर्वत्रैवेति**। नियममुपपादयति–**अन्तशब्द इति** । तर्हि 'नद्यन्त'मित्यत्राऽपि नद्याः कार्ययोगः स्यादत आह—**नद्यन्तमिति** । तर्हि नियमोक्तिरयुक्तेत्यत आह—**यस्त्विति** । अन्तशब्दः समीपवाचीत्यन्यपदार्थे नद्या अनन्तर्भावः । यदुच्यते–सर्वत्रान्तशब्दः सह तेन वर्तत इति तत्संभवापेक्षम् । **यस्यावयवत्वमिति** । यथा मर्यादान्तमित्यादौ मर्यादायाः । **तस्यावयवत्वमिति**। अवयवत्वमेवेत्यर्थः। **यस्य त्विति** । यथा 'नद्यन्त'मित्यादौ-नद्यादेः । **अन्ये त्वाहुरिति** । एकं ह्येकशक्तिकल्पनाल्लाघवं भवति । 'अतो लोन्तस्ये'ति सूत्रे 'सामीप्ये वर्तत' इत्यस्य सामीप्योपचरितावयवे इत्यर्थः। 'अवयवे वर्तते' इत्यस्य मुख्यावयवे वर्तत इत्यर्थ इतिभावः । **अवधिद्योतनार्थमित्यस्याऽयमर्थः**–परिशब्दसमभिव्याहृतोऽन्तशब्दोऽवधिबोधक इति तस्याऽवधिवाचकत्वद्योतकत्वार्थमित्यर्थः। एवञ्च तस्य मावधेरित्यर्थः। एवमपि सामानाधिकरण्येनान्वये इष्टाऽसिद्धिरत आह—**यदि युष्मदिति** । परिग्रहणसामर्थ्याद्वैयधिकरण्यान्वय इति भावः ।

१ 'विज्ञायते' पा० । २ 'नद्यां क्षेत्रत्वेन' पा० । ३ 'समीप' पा० ।

**स्युः ॥ क्व च मान्ते युष्मदस्मदी ? ॥ युष्मानाचष्टे अस्मानाचष्टे इति [णिचि–युष्मयति अस्मयति । ] युष्मयतेरस्मयतेश्चाऽप्रत्ययः॥ [ मपर्यन्तस्य ] ॥**

**प्र.]**अथाप्यमान्ते सर्वथा आदेशा यथा स्युरेवमर्थं 'परि'ग्रहणम् । **यत्रैवेति** । सामानाधिकरण्येन विशेषणविशेष्यभावः स्यात् , अथापि वैयधिकरण्यमाश्रीयते–'युष्मदस्मदोरवयवस्य मान्तस्ये'ति, तथापि–यत्र मान्ते युष्मदस्मदी तत्र भेदाऽभावादादेशा न स्युः।न च व्यपदेशिवद्भावोऽस्ति, 'अप्रातिपदिकेने'ति निषेधात्। परिग्रहणे तु तदुपादानसामर्थ्याद्युष्मदस्मदवयवेऽपि युष्मदस्मच्छब्दौ वर्तेते इति सर्वत्रैवादेशसिद्धिः । वैयधिकरण्येन वा संबन्धे परिग्रहणोपादानसामर्थ्यादप्रातिपदिकेनेति प्रतिषेधाप्रवृत्त्या मान्तयोरपि युष्मदस्मदोरादेशसिद्धिः । **युष्मयतेरिति** । 'प्रत्ययोत्तरपदयोश्चे'त्यत्रैकवचनाधिकारात्त्वमौ न भवतः । इष्टवद्भावाट्टिलोपः। 'क्वौ लुप्तं न स्थानिव'दिति मान्ते युष्मदस्मदी। ततः कृदन्तत्वात्स्वादयः । एकदेशविकृतस्याऽनन्यत्वाद्युष्मदस्मदाश्रयकार्यप्रवृत्तिः।तत्र सौ त्वमहमिति भवति। द्विवचने'प्रथमायाश्च द्विवचने भाषाया'मिति मकारस्यात्वे प्राप्ते परत्वाद्युवावयोःकृतयोः पुनःप्रसङ्गविज्ञानादात्वे कृते–युवामावामिति भवति । तृतीयाद्विवचने–युवाभ्यामावाभ्यामिति । भिसि–युषाभिरसाभिरिति। ङेप्रत्यये–तुभ्यं मह्यम् । भ्यसि युषभ्यमसभ्यमिति । शेषे लोप इति लोपः । पञ्चमीभ्यसि युषदसदिति । मपर्यन्तापेक्षे तु शेषे आश्रीयमाणे मात्परस्यान्यस्याभावाल्लोपाभावाद्युष्मदस्मदिति भवति ।इह त्वामाचष्टे मामाचष्टे इति णिचि 'प्रत्ययोत्तरपदयो'-

**उ.]अथापि वैयधिकरण्यमिति** । इदं प्रौढ्या, संभवति सामानाधिकरण्ये वैयधिकररण्यस्याऽन्याय्यत्वात् । **निषेधादिति** । इदमपि प्रौढ्या, निषेधस्य प्रत्ययविधिविषयत्वात् । तस्मात्सामानाधिकरण्येनाऽन्वयः स्यादित्येव भाष्यतात्पर्यम् । अवधिबोधकपर्यन्तशब्दोपादाने तु वैयधिकरण्येनैव संबन्धः । एवञ्च युष्मदस्मदोर्मावधेरादेश इत्यर्थ इति भावः । **एकवचनाधिकारादिति** । एकार्थवाचिनोरेव तावादेशौ न त्वनेकार्थवाचिनोरिति भावः । ननु लोपस्य स्थानिवद्भावान्मान्तत्वमनयोरसिद्धमत आह—**क्वौ लुप्तमिति** । **युवावयोः कृतयोरिति** । आख्यानकर्तृद्वित्वे वर्तमानयोरपि युष्मदस्मदोर्द्व्यर्थवृत्तिताऽस्त्येवेति भावः । **युषमभ्यमसभ्यमिति** । भ्यम् तु 'युष्मदस्मदोरनादेशे' इति सूत्रस्थभाष्यप्रामाण्यान्नास्त्येव, मुख्ययुष्मदादिविषय एव वा । 'यथेच्छंसी'त्यनेन भाष्येण तयोः फलभेदाऽभावबोधनादिति भावः । वस्तुतो 'यथेच्छसी'ति भाष्यप्रामाण्येनाऽस्य चतुर्थीबहुवचने प्रयोगाऽभाव एवेति तत्त्वम् । **युष्मदस्मदिति** । एवं चतुर्थीबहुवचनेऽपि युष्मभ्यमस्मभ्यमिति । वस्तुतः 'शेषे लोप' इति सूत्रस्थ'शेष'ग्रहणप्रत्याख्यानपरभाष्यप्रामाण्याच्छेषस्य लोप इति नास्त्येवेति पञ्चमीबहुवचनेऽस्य प्रयोगाऽभाव एवाऽनाभिधानादिति तत्त्वम् । षष्ठीबहुवचने युषाकमसाकं, 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रेऽतित्वाकमतिमाक'मिति

१ इदं क्वाचित्कम् । २ 'अप्रत्यये' पा० ।

## प्रत्ययोत्तरपदयोश्च ॥ ७।२।९८ ॥

किमर्थमिदमुच्यते न त्वमावेकवचन इत्येव सिद्धम् ? ॥ न सिध्यति ॥ किं कारणम् ? ॥ एकवचनाऽभावात् । एकवचन इत्युच्यते न चात्रैकवचनं पश्यामः ॥ प्रत्ययलक्षणेन ॥ 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणस्य प्रतिषेधः ॥ एवं तर्हि इदमिह संप्रधार्यं–लुक्क्रियतामादेशा[1]विति, किमत्र कर्तव्यम् ?॥ परत्वादादेशौ ॥ नित्यो लुक् । कृतयोरप्या[2]देशयोः प्राप्नोत्यकृतयोरपि ॥—[3]अन्त-रङ्गा[4]वादेशौ ॥ एवं तर्हि सिद्धे सति यत्प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तज्ज्ञा-

प्र.]रिति त्वमयोः कृतयोः 'प्रकृत्यैका'जिति प्रकृतिभावादसति टिलोपे 'अत उपधाया' इति वृद्ध्या भाव्यम् । अथ लङ्गवृत्त इत्याश्रीयते तदा वृद्ध्यभावः। तत्र त्वद्-सु मद्-सु इति स्थिते मपर्यन्ताऽभावात्त्वाऽहौ सावित्यस्याऽप्रवर्तनाद्वृद्धिपक्षे 'त्वादम्' 'माद'मिति भवति । तदभावे 'त्वदं' 'मद'मिति। के चित्तु मान्तयोर्युष्मदस्मदोरादेशान्नेच्छन्ति । मपर्यन्तग्रहणं हि यत्र परिशिष्टसद्भावस्तत्रादेशार्थमिति परिशिष्टाऽभावेन भाव्य-मादेशैरिति ते ब्रुवन्ति । [ **मपर्यन्तस्य** ] ॥

**प्रत्ययोत्तरपदयोश्च** । **अन्तरङ्गाविति** । नित्यादप्यन्तरङ्गो बलीयान् । तथा

उ.]भाष्योदाहरणेन गौणेऽप्याकम्प्रवृत्तेः । **इह त्वामाचष्टे इत्यादि** । वस्तुतस्तु 'सावेकाच' इति सूत्रस्थभाष्यप्रामाण्येनैकवचनान्तप्रकृतिकण्यन्तप्रकृतिकक्विबन्तानाम-नभिधानस्य तत्रैव सूत्रेऽस्माभिरुक्तत्वेनेदं चिन्त्यम् । **केचित्त्विति** । परिग्रहणाऽ-भावे–'तत्रैवादेशा' इत्यस्य तत्रैवाऽनिष्टे आदेशा इत्यर्थः। तत्सत्त्वे तु तत्र नैवादेशा इति एतन्मते भाष्याऽक्षरार्थः । अत एवावधिद्योतनार्थमित्युपक्रमे उक्तम् । अग्रेऽपि देशस्य कालस्य वा सत्त्वे हि तयोरवधित्वव्यवहारो लोकप्रसिद्धः । किञ्च पूर्वव्या-ख्यायां परिग्रहणसामर्थ्यान्मणिमन्त्रादिन्यायेन वैयधिकरण्यान्वयो न तु वाच्यवृत्त्या, मम तु परिग्रहणसत्त्वेऽसंभवान्न सामानाधिकरण्येनान्वयः किन्तु वैयधिकरण्येनेति। एवमेव व्याख्यानं भाष्यसंमतम्। अत एवाग्रे भगवता रूपाणि न दर्शितानि । न चावध्यर्थत्वे मपर्यन्तेति बहुव्रीहेरतद्गुणत्वापत्तिः, अवयवस्य तत्त्वे तद्गुणताऽङ्गी-कारात् । अत एव 'द्विपर्यन्ताना'मित्यादौ न दोष इति तेषामाशयः । 'अङ्गुष्ठपर्यन्तं कुष्ठ'मित्याद्यसाध्वेव, 'अङ्गुष्ठान्त'मित्येव तूचितम् । [ **मपर्यन्तस्य** ] ॥

**प्रत्ययोत्तरपदयोश्च** । भाष्ये—**एकवचन इत्येव सिद्धमिति** । यद्यपि इद-मर्थग्रहणमित्युत्तरत्राऽत्रैव भाष्ये स्फुटं तथापि विभक्तावित्यधिकारात्सिद्धमित्या-शयः । **एकवचनाभावादिति** । एकवचनग्रहणं प्रत्ययोपलक्षणम् , एकार्थयो-र्युष्मदस्मदोर्विभक्तेरेकवचनस्यैव संभवेन भाष्ये 'एकवचन' मित्युक्तं । विभक्ता-वित्यधिकारफलं तु त्वं डित्थः पुत्रो यस्य स युष्मड्डित्थपुत्र इति त्रिपदबहु-

१ 'आदेशा इति' पा०। २ 'कृतेष्वप्यादेशेषु' पा०। ३ अयंपाठः क्वाचित्कः । ४ 'अन्तरङ्गा आदेशाः' पा० ।

पयत्याचार्योऽन्तरङ्गानपि विधीन्बाधित्वा बहिरङ्गो लुग्भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनं ? ॥ गोमान् प्रियो यस्य गोमत्प्रियः यवमत्प्रियः । गोमानिवाचरति गोमत्यते यवमत्यते । अन्तरङ्गानपि नुमादीन्बहिरङ्गो लुग्बाधत इति ॥ नैतदस्ति ज्ञापकम् , अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? ॥ येऽन्ये एकवचनादेशाः प्राप्नुवन्ति तद्बाधनार्थमेतत्स्यात् । तद्यथा— तव पुत्रः त्वत्पुत्रः, मम पुत्रो मत्पुत्रः। तुभ्यं हितं त्वद्धितं, मह्यं हितं मद्धितमिति ॥ यत्तर्हि मपर्यन्तग्रहणमनुवर्तयति ॥ यद्यत्राऽन्ये एकवचनादेशाः

---

प्र.]चोक्तम्—'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथःप्रसङ्गे परबलीयस्त्व'मिति। **गोमत्प्रिय इति**। अत्रान्तरङ्गा एकपदाश्रयत्वात्सुलोपादयः स्युः। पदद्वयाश्रयत्वाद्बहिरङ्गो लुगिति गोमान्प्रिय इति स्यात् । अस्मिंस्तु ज्ञापके सत्यन्तरङ्गाण्यपि कार्याणि बाधित्वा लुग्भवति । ततो 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधान्नुम्दीर्घाऽभावे 'गोमत्प्रिय' इति सिद्ध्यति । 'सुपो धातुप्रातिपदिकयो'रित्यस्यैव बाधकत्वमनेन ज्ञाप्यते, तस्यैवेह संभवात् । के चित्तु सामान्यापेक्षया ज्ञापकत्वाश्रयाल्लुङ्मात्रस्य बलत्त्वाश्रयेण व्यवहारदर्शनाल्लुङ्मात्रं बाधकं ज्ञाप्यत'इत्याहुः ।

**येऽन्य इति**। एकवचनाधिकारादेकवचननिमित्तानामादेशान्तराणां त्वमौ बाधकौ स्यातां न तु ज्ञापकावित्यर्थः । **यत्तर्हीति**। के चिद्व्याचक्षते-यद्यादेशान्तराणां त्वमौ बाधकौ स्यातां तदा मपर्यन्तग्रहणानुवृत्तिमन्तरेणोत्सर्गसमानदेशत्वादपवादानां मपर्यन्तस्य त्वमौ सिद्धाविति किं तदनुवृत्त्या। अनुवृत्त्या तु ज्ञाप्यते-प्रागेव लुकि कृते विभक्त्यभावादसत्स्वादेशान्तरेषु त्वमौ विधीयेते इति । एतच्चायुक्तम् । नायं नियोग 'उत्सर्गसमानदेशोपवाद'इति, श्नम्बहुजकचां भिन्नदेशानामप्यपवादत्वदर्शनात्। तत-

---

उ.]त्रीहावादेशाऽभाव इति दिक् । **अन्तरङ्गा इतीति** प्रतीकपाठः । ननु नित्यान्तरङ्गयोर्बाध्यबाधकत्वे विनिगमनाविरहोऽत आह—**नित्यादपीति** । विरुद्धयोर्द्वयोः श[illegible]त्रयोः**सन्निपाते** एकलक्ष्ये प्रवृत्तौ यत्परायन्यतमं तद्भवति, **तेषां** परनित्यादीनां मध्ये **मिथः** परनित्याद्योर्युगपत्प्रसङ्गे उपात्तक्रमेण यत्परं तद्बलवदिति तदर्थः। 'विरोधिसन्निपात' इत्यनेन भिन्नविषयागमादेशयोर्नापवादत्वमिति सूचितमिति केचित्तन्न, नुम्नुटोर्बाध्यबाधकत्वाऽनापत्तेः । **व्यवहारदर्शनादिति** । 'एङ्ह्रस्वात्संबुद्धेरित्यादौ भाष्यकृत' इत्यादिः । अतएव 'सनीस्रंस' इत्यादौ नलोपाऽभावः । 'पञ्चखट्व' इत्यादौ चैकादेशात्प्रागेव टापो लुक् । अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यात् । न च प्रत्ययग्रहणस्य प्रातिपदिकप्रकृतिकाचारक्विपि चारितार्थ्यात् कथं सम्पूर्णसूत्रस्य ज्ञापकत्वमुच्यते । एतद्भाष्यप्रामाण्येन नुड्विधायकभाष्यप्रामाण्येन चैताभ्यामाचारक्विपोऽभावात् । एतद्भाष्यप्रामाण्यादेव चैकार्थयोः प्रातिपादिकप्रकृतिकणिचोऽप्यनभिधानं बोध्यम् । इतोऽपि त्वादं मादमित्यादिरूपकल्पना प्रत्युक्ता । **एकवचनाधिकारादेकवचननिमित्तानामिति**। एकवचनरूपविभक्तिनिमित्तानामित्यर्थः।

**स्युर्मपर्यन्तानुवृत्तिरनर्थिका स्यात् ॥*॥** त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम् ॥ * ॥ **त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणं द्रष्टव्यम् ।**

त्रिचतुरोः स्त्रियां तिसृचतसृ । **यद्यपि समासः पुंसि नपुंसके वा वर्तते त्रिचतुरौ च स्त्रियां वर्तेते, भवत्येव तिसृचतसृभावः, प्रियास्तिस्रो ब्राह्मण्यो-**

---

**प्र.]** श्चाऽसत्यां मपर्यन्तानुवृत्तावादेशान्तराणामपि बाधकौ त्वमौ सर्वादेशौ स्यातामनेकाल्त्वादिति सप्रयोजना मपर्यन्तानुवृत्तिः । तस्मादन्यथा व्याख्यायते—तवममादय आदेशाः स्थानिप्रक्लृप्त्यर्थमिहाऽनुवर्तन्ते । तत्र तवादीनां प्रसङ्गे सिद्धयोस्त्वमयोर्मपर्यन्तानुवृत्तिस्त्वया कृतं त्वत्कृतमित्याद्यर्था भवन्ती लुको बाधकत्वं ज्ञापयति । ततश्च तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्ज्ञापनाय भवति । केवला हि मपयन्तानुवृत्तिर्लाघवाय स्यात् । गरीयसी हि तवाद्यनुवृत्त्या स्थानिप्रतीतिः, ततो ज्ञापनाय न प्रभवेत् । तस्मात्तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्यथोक्तार्थज्ञापनायाऽलम् । **त्रिचतुरिति ।** स्त्रियां द्विवचन एकवचन इति येऽर्था निर्दिष्टास्ते श्रूयमाणानामेव शब्दानां विशेषणं न त्वङ्गस्येत्यर्थः । प्राप्तविशेषणसंबन्धैस्त्रिचतुर्युष्मदस्मद्भिरङ्गं विशेष्यते । तत्र 'पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य(च)ग्रहणं भवती'ति केवलानां तदन्तस्य चादेशप्रवृत्तिः । द्विवचनैकवचने च पारिभाषिके न गृह्येते, किं तर्हि द्वयोर्वचनमभिधानं द्विवचनमेकस्य वचनमेकवचनमित्यर्थनिर्देशः । **प्रियतिसेति ।** 'अन्तरङ्गानपि विधीन्बहिरङ्गो

---

**उ.]** इदं व्यर्थं । **श्रम्बहुजकचामिति ।** वस्तुतस्तेषु मित्त्वपुरस्ताद्ग्रहणप्राक्टेर्ग्रहणैस्तस्य बाधेऽप्यन्यत्र तत्त्यागे किं मानमिति चिन्त्यम् । यद्यपि असंभवे एव बाधकत्वमिति वार्तिकमते 'उत्सर्गसमानदेशा अपवादा' इति न्यायो, भाष्यमते तु सत्यपि संभवे बाधस्वीकारस्तथापि भाष्यमते वाचनिक्येवैषा । ज्ञापकोपन्यासस्तु वार्त्तिकरीत्येति बोध्यम् । ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाऽभावेन मपर्यन्तस्यैवादेशार्थं तदनुवृत्तिश्चरितार्था । अनेन च न्यायेनाऽन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनाञ्च प्राबल्यं बोध्यत इति दिक् । भाष्ये—**यद्यत्राऽन्ये** इत्यादि । **स्युरित्यस्य**—प्राप्नुयुरित्यर्थः । 'तद्बाधनार्थं चेदं स्यात्तदे'ति शेषः । **तस्मादन्यथेत्यादि ।** इदं चिन्त्यमेव अतिगुरुत्वात् , ज्ञापितेऽपि तवाद्यनुवृत्तेः सार्थक्यस्योपपादयितुमशक्यत्वाच्च । **श्रूयमाणानामेवेति ।** भाष्ये शब्दशब्देन श्रूयमाणशब्दो लक्ष्यते इति भावः । **प्राप्तेति ।** 'गुणः कृतात्मसंकार' इति न्यायादिति भावः । नन्वेकवचन इत्येव सिद्धमित्युपक्रमस्थभाष्यादेकवचनादिशब्दानां प्रत्ययपरत्वप्रतीतेर्युष्मदादिष्वर्थग्रहणमप्रसिद्धमत आह—**द्विवचनैकेत्यादि ।** उपक्रमस्थभाष्यन्तूपलक्षणपरतया व्याख्यातमेव । ननु 'प्रियतिसे'त्यादावन्तर्वर्त्तिनीं विभक्तिमाश्रित्य तिसृभाव इति तन्निरूपितमङ्गं स्त्रियामेवेति अङ्गविशेषणत्वेऽपि क्षत्यभावोऽत आह—**अन्तरङ्गानपीति ।** नन्वङ्गस्य सर्वस्य तिस्रादेशः प्राप्नोती-

---

१ इदं क्वचिन्न । २ इदं भाष्यवार्तिकमित्यन्ये । भाष्यमित्यपरे ।

ऽस्य ब्राह्मणस्य,–प्रियतिसा प्रियतिस्रौ प्रियतिस्रः । प्रियचतसा प्रियचतस्रौ प्रियचतस्रः ॥ प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणकुलस्य–प्रियतिसृ प्रियतिसृणी प्रियतिसृणि । प्रियचतसृ प्रियचतसृणी प्रियचतसृणि ॥ यदा हि समासः स्त्रियां वर्तते त्रिचतुरौ च पुंसि नपुंसके वा तदा मा भूतामिति, प्रियास्त्रयो ब्राह्मणा अस्या ब्राह्मण्याः प्रियत्रि ब्राह्मणी प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियाणि त्रीणि ब्राह्मणकुलानि अस्या ब्राह्मण्याः–प्रियत्रिः प्रियत्री प्रियत्रयः। प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः॥

युवावौ द्विवचने । यद्यपि च समास एकार्थो वा भवति बह्वर्थो वा भवति, द्व्यर्थे च युष्मदस्मदी, भवत एव युवावौ ॥ किमविशेषेण ? ॥ 'ने'त्याह । 'यूयवयौ जसि' 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि' 'तवममौ ङसि' इत्येतान्विधीन्वर्जयित्वा । अतिक्रान्तो युवामतित्वम्, अत्यहम् । अतिक्रान्तौ युवाम्अतियुवाम्अत्यावाम् । अतिक्रान्ता युवाम्अतियूयम् अतिवयम् । अतिक्रान्तं युवाम् अतियुवाम्अत्यावाम् । अतिक्रान्तौ युवाम्अतियुवाम्अत्यावाम् । अतिक्रान्तान्युवाम् अतियुवान् अत्यावान् । अतियुवयाऽत्यावया । अतियुवाभ्याम्–अत्यावाभ्याम् । अतियुवाभिः, अत्यावाभिः । अतितुभ्यम्अतिमह्यम् । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवभ्यम् अत्यावभ्यम् । अतियुवत् अत्यावत् । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवत् अत्यावत् । अतितव अतिमम । अतियुवयोः अत्यावयोः । अतियुवाकम्—अत्यावाकम् । अतियुवयि अत्यावयि । अतियुवयोः, अत्यावयोः । अतियुवासु अत्यावासु ।

---

प्र.] लुग्बाधते' इत्यकृत एव तिस्रभावे लुकि कृते समासाद्या विभक्तिस्तस्यां तिस्रभावः। स च 'निर्दिश्यमानस्यादेशा भवन्ती'ति त्रिशब्दस्यैव भवति । **प्रियतिस्राविति** । 'अचि र ऋत' इति रादेशः । **प्रियतिसृ इति** । कथं पुनरत्र तिस्रभावो यावता नित्यत्वात्स्वमोर्नपुंसकादिति लुकि कृते 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधेन भाव्यम् ?। उच्यते । 'इकोऽचि विभक्ता'वित्यत्राऽज्ग्रहणं ज्ञापकं क्वचिल्लुमता लुप्तेऽपि प्रत्ययलक्षणस्य । तथा च 'हे त्रपो' इति संबुद्धिगुणो भवति । क्वचि'त्प्रियत्री'ति पाठः, स प्रत्ययलक्षणप्रतिषेधाश्रयः । **इतीति** । एते विधयः परत्वाद्युवावयो-

---

उ.] त्यत आह–**स चेति**। **रादेश इति**। 'गुणं बाधित्वे'ति शेषः। **नित्यत्वादिति** । 'अन्तरङ्गानपी'ति न्यायाच्चेत्यपि बोध्यम् । भाष्ये–**प्रियतिसृणीति** । अत्र परत्वात्तिस्रादेशे पुनःप्रसङ्गविज्ञानान्नुम्न । नतिस्रिति निषेधेनागमविषये रादेशो नेति सामान्यतो ज्ञाप्यते भाष्योदाहरणादिति बोध्यम् । एतद्वर्जनं च न वचनेन किन्तु युक्त्यैवेत्याह—**एते विधय इति** । त्वाहादीनामवकाशो बह्वर्थे युष्मदस्मदी, युवा-

---

१ चः क्वाचित्कः । २ 'ब्राह्मणी'ति क्वचिन्न । ३ इदं बहुत्र नास्ति । ४ अत्र वार्तिकं लुप्तमिति गौडाः । कैयटनागेशौ तु भाष्यं मन्येते । ५ 'युवान्' पा० ।

त्वमावेकवचने-यद्यपि समासो द्व्यर्थो भवति बह्वर्थो वा, एकार्थे च युष्मदस्मदी,भवत एव त्वमौ॥किमविशेषेण?॥'ने'त्याह। तानेव विधीन्वर्जयित्वा । अतिक्रान्तस्त्वाम्अतित्वम्अत्यहम्। अतिक्रान्तौ त्वामतित्वाम् अतिमाम्।अतिक्रान्तास्त्वाम् अतियूयम्अतिवयम् । अतिक्रान्तं त्वाम् अतित्वाम्अतिमाम् । अतिक्रान्तौ त्वाम् अतित्वाम्अतिमाम् । अतिक्रान्तान् त्वाम्-अतित्वान् अतिमान् । अतित्वयाऽतिमया । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वाभिः, अतिमाभिः । अतितुभ्यम्, अतिमह्यम् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वभ्यम् अतिमभ्यम् । अतित्वत् । अतिमत् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वत् अतिमत् । अतितव अतिमम । अतित्वयोः अतिमयोः । अतित्वाकम् अतिमाकम् । अतित्वयि अतिमयि । अतित्वयोः अतिमयोः । अतित्वासु अतिमासु ॥ यद्येवं यूयवयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसीत्येतेभ्यो विधिभ्यः परत्वात्त्वमावेकवचन इति प्राप्नोति, सावकाशा ह्येते विधय इदानीं भवन्ति ॥ कोऽवकाशः ? ॥ अनेकार्थे युष्मदस्मदी ॥ त्वमावेकवचन इत्यस्यावकाशः-अन्यानि वचनानि । एकार्थयोर्युष्मदस्मदोरेतेषु वचनेषूभयं प्राप्नोति । परत्वात्त्वमावेकवचन इति प्राप्नोति ॥ नैष दोषः। 'शेष' इति वर्तते ॥ कश्च शेषः ?॥ जसादिभिरव्याप्तं यदेकवचनं, तस्मिन् शेषे । अशेषत्वान्न भविष्यति ॥ अथ वा 'त्वमावेकवचन' इत्यत्र यूय-

प्र.]बाधकाः । शेष इति वर्तत इति । अन्यथा अतिक्रान्तो युष्मानतित्वमत्यहम् । अतिक्रान्ताय युष्मानतितुभ्यमतिमह्यम् । अतिक्रान्तस्य युष्मानतितवअतिममेत्यनेकार्थत्वे युष्मदस्मदोः समासे सावकाशास्त्वाहादयोऽसमासे समासेऽपि युष्मदस्मदोरेकार्थत्वे परत्वात्त्वमाभ्यां बाधनान्न प्राप्नुवन्ति—त्वमहं तुभ्यं मह्यं तव ममेति । शेषग्रहणानुवृत्तौ तु यत्र यूयादयो न भवितारस्तत्र त्वमौ भवतो नतु यूयादिविषये। तच्च शेषग्रहणंलोपग्रहणसंबन्धानुवृत्त्या यूयादिभिर्न संबध्यते। त्वमावेकवचन इत्यत्र तु लोपग्रहणं निवृत्तं, शेषग्रहणमनुवर्तत इति न कश्चिद्दोषः । अथ वेति । वाक्यभेदेन त्वमयोर्विषये यूयादयो विधीयन्ते । [ प्रत्ययोत्तरपदयोश्च ] ।

उ.]वयोरवकाशो युवामावामिति। अतियुवाकमतित्वाकमित्यादावत एव भाष्यप्रयोगात्सुट इव नुटोऽप्याकमा निवृत्तिर्यथा भवति तथोक्तमाकम्सूत्रे । ननु शेषपदानुवृत्तौ 'यूयवयौ जसी'त्यादावपि तत्संबन्धः स्यादत आह—तच्चेति । भाष्ये-जसादिभिरव्याप्तं यदेकवचनमिति। जसादिनिमित्तादेशैरव्याप्तो य एकार्थो युष्मदादिरित्यर्थः । यद्वा एकार्थयुष्मदादिप्रकृतिकविभक्तिरित्यर्थः । शेषग्रहणस्य मध्ये विच्छिन्नत्वादाह-भाष्ये-अथवेति । नन्वेकवाक्यतायां जसादिविषये एवोभयं स्यादत आह—वाक्यभेदेनेति । पुनर्विधानाच्च तद्विषये त्वमयोर्बाधः । वस्तुतः पूर्व-

१ 'मह्यम्' । २ इदं वार्त्तिकमित्यन्ये । ३ 'शेषत्वात्' पा० । ४ वेति क्वचिन्न ।

वयौ जसि त्वाहौ सौ तुभ्यमह्यौ ङयि तवममौ ङसीत्येतदनुवर्तिष्यते ॥

## त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ७।२।९९ ॥

॥*॥ तिस्रभावे संज्ञायां कन्युपसङ्ख्यानम्[1] ॥ * ॥ **तिसृभावे संज्ञायां कन्युपसङ्ख्यानं कर्तव्यम् । तिसृका नाम ग्रामः** ॥*॥ चतसर्याद्युदात्तनिपातनं च ॥*॥ **चतसर्याद्युदात्तनिपातनं कर्तव्यम् ॥ त्रिचतुरोः स्त्रियां तिसृ चतसृ ॥ किं प्रयोजनम् ? ॥ चतस्रः पश्य । शसि स्वरो मा भूदिति ॥ किं चान्यत् ?** ॥*॥ उपदेशिवद्वचनं च ॥*॥ **उपदेशिवद्भावश्च वक्तव्यः ॥ किं प्रयोजनम् ?** ॥*॥ स्वरसिद्ध्यर्थम् ॥*॥ **उपदेशावस्थायामेवाद्युदात्तनिपातने कृते विभक्तिस्वरेण बाधनं यथा स्यात्—चतसृणामिति[2] ॥ स तर्ह्युपदेशिवद्भावो वक्तव्यः ?॥ न वक्तव्यः।** ॥*॥ उक्तं[3] वा ॥*॥ **किमुक्तम् ?**॥*॥ 'विभ-

प्र.] **त्रिच । तिसृकेति** । तिस्र एव तिसृका । स्वार्थे कन्प्रत्ययः, ह्रस्वत्वे कुत्सितत्वे वा विवक्षिते, 'संज्ञायां क'निति (कैन्) वा । तत्र विभक्तेर्लुकि कृते विभक्तौ विधीयमानस्तिस्रभावो न प्राप्नोतीति वचनम् । तत्र केचिद्बहुवचनान्तः तिसृकाशब्दः संज्ञेत्याहुः। अपरे त्वेकवचनान्त इति । ग्रामस्य ह्येकस्य 'तिसृके'ति संज्ञेति नास्ति बहुवचनप्रसङ्गः । **चतस्र इति** । 'चतुरः शसी'त्यनेन स्थानिवद्भावादन्तोदात्तत्वं प्राप्नोति । तत 'उदात्तयणो हल्पूर्वा'दिति शस उदात्तत्वप्रसङ्गः । **चतसृणामिति** । उपदेशावस्थायामाद्युदात्ते चतस्रादेशे कृते 'षट्त्रिचतुर्भ्यो हलादि' रिति सतिशिष्टस्वरः प्रवर्तते । यद्येवं 'चतस्रः पश्ये'त्यत्रापि 'चतुरः शसी'ति सतिशिष्टत्वात्प्राप्नोति । नैष दोषः । आन्तरतम्यादाद्युदात्तत्वे सिद्धे पुनराद्युदात्तत्वं निपात्यमानं 'चतुरः शसी'त्यनेन विधीयमानं स्थानिवद्भावात्प्राप्तमन्तोदात्तत्वं बाधते। तत्र बाधितत्वात्पुनःप्रसङ्गाऽभावात्कुतः सतिशिष्टत्वम् । **उक्तमिति** । 'चतुरः शसी'त्यत्र । हलादिग्रहणं 'चतस्रः पश्ये'त्येतद्व्यावृत्त्यर्थमेव क्रियते । यदि च निपातनस्वरेण विभक्तिस्वरो बाध्येत तदा हलादिग्रहणमन्तरेणापि विभक्तिस्वरो न भविष्यतीति किं हलादिग्रहणेन ?। तत्क्रियमाणं 'निपातनस्वरस्य विभक्तिस्वरो बाधक' इति ज्ञापयति।

उ.] विप्रतिषेधः कल्प्य इति एतद्भाष्यतात्पर्यम् । [ **प्रत्ययोत्तरपदयोश्च** ] ॥

**त्रिचतुरोः । विभक्तेर्लुकीति** । 'अन्तरङ्गानपी'ति न्यायादिति भावः । **शस उदात्तत्वेति** । आद्युदात्तं च पदमिष्यते । **आन्तरतम्यादिति** । चतेरुरनन्तत्वेन चतुःशब्दस्याद्युदात्तत्वादिति भावः । **पुनःप्रसङ्गाऽभावादिति** । आद्युदात्तनिपातनसामर्थ्यात्स्वाश्रये प्राप्तान्तोदात्तत्वबाधः । विभक्तिस्वरस्तु बाधक एवेत्याद्युदात्तनिपातनोपदेशिवद्भाववचनाभ्यां कल्प्यते इति तत्त्वं। क्वोक्तं तदाह—**चतुरःशसीत्यत्रेति** । 'षट्त्री'ति सूत्रस्थहलादिग्रहणसामर्थ्यमुपपादयति—**हलादिग्रहणमिति** । 'निपातनमेव न कर्तव्य'मिति पाठः । इयमेव व्याख्या 'आद्युदात्तनिपातने ह्री'ति

१ इदं क्वचिन्न । २ इतिः क्वचिन्न । ३ अस्य व्याख्या लुप्ता ।

क्तिस्वरभावश्च हलादिग्रहणात् । आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम्'॥*॥ इति । [ त्रिचतुरोः स्त्रियाम् ] ॥

## अचि र ऋतः ॥ ७।२।१०० ॥

॥*॥ अचि रादेशे जस्युपसङ्ख्यानं गुणपरत्वात् ॥*॥ **अचिरादेशे जस्युपसङ्ख्यानं कर्तव्यम् । तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्ति ॥ किं पुनः कारणं न सिध्यति ? ॥ 'गुणपरत्वात्' । परत्वाद्गुणः प्राप्नोति ॥ तत्तर्हि वक्तव्यम् ? ॥** ॥*॥ न वाऽनवकाशत्वाद्रस्य ॥*॥ **न वा वक्तव्यम्**[2] **॥ किं कारणम् ? ॥ 'अनवकाशत्वाद्रस्य' । अनवकाशो रादेशो गुणं बाधिष्यते ॥ सावकाशो रादेशः ॥ कोऽवकाशः?॥ तिस्रः पश्य चतस्रः पश्य ॥ नैषोऽस्त्यवकाशः,अत्रापि पूर्वसवर्णदीर्घः प्राप्नोति। स यथैव पूर्वसवर्णं बाधते एवं गुणमपि बाधिष्यते ॥ गुणोऽप्य-**

---

प्र.] अथ वा हलादिग्रहणेनाद्युदात्तनिपातनमेव न कर्तव्यमिति प्रतिपाद्यते।यदि 'चतस्रः पश्ये'त्यत्र 'चतुरः शसी'त्यनेनाऽन्तोदात्तत्वं स्यात्तत 'उदात्तयणो हल्पूर्वा'दिति स्यादेव विभक्तेराद्युदात्तत्वमिति तद्व्यावृत्तये हलादिग्रहणमनर्थकं स्यात्। तस्माद्धलादिग्रहणाच्चतस्रः पश्येत्यत्र 'चतुरः शसी'त्यस्याऽप्रवृत्तिरध्यवसीयते । ततश्चाद्युदात्तस्य चतुःशब्दस्याद्युदात्त एवान्तर्याच्चतस्रादेशो भवति । चतुःशब्दो 'त्रः संख्याया' इति वा 'चतेरुर'न्निति नित्त्वाद्वाऽऽद्युदात्तः । 'चतसृणा'मित्यत्र तु 'षट्त्रिचतुर्भ्यो' इति विभक्तेरुदात्तत्वं भवति । [ **त्रिचतुरोः स्त्रियां तिसृचतसृ** ] ॥

**अचि र ऋतः । अचि रादेश इति ।** 'मध्येऽपवादा' इति पूर्वसवर्णदीर्घस्य, 'ऋत उ'दित्युत्त्वस्य च बाधः प्राप्नोति, न तु 'जसि च' 'ऋतो ङिसर्वनामस्थानयो'रिति गुणस्येति भावः । **न वेति ।** 'मध्येऽपवादा' इति परिभाषाऽनाश्रयेणोच्यते । विध्यन्तरपूर्वकत्वादस्य सर्वापवादत्वमित्यर्थः । **गुणोऽप्यनकाश इति ।** सोऽपि विध्यन्तरपूर्वकः। कर्तारावित्यत्र पूर्वसवर्णदीर्घः प्राप्नोति। कर्तार इत्यत्र जसि चेति गुणः

---

उ.] भाष्यस्वरससिद्धेति बोध्यम्। **हलादिग्रहणादिति ।** वस्तुतः परत्वाद्रादेशे तस्य स्थानिवत्त्वात्तकारस्य न 'चतुरः शसी'त्यनेनोदात्तत्वं, स्वविधौ स्थानिवत्त्वाऽभावाच्च न ऋकारस्येति व्यर्थमेवाद्युदात्तनिपातनमिति पूर्वमुक्तम् । **विभक्तेरुदात्तत्वमिति ।** स्थानिवद्भावेन सतिशिष्टत्वादिति भावः । [ **त्रिचतुरोः स्त्रियान्तिसृचतसृ** ] ॥

**अचि र ।** ननु विध्यन्तरानाक्रान्तविषयाऽभावात्सर्वापवादोऽयमिति किं वचनेनेत्यत आह—**मध्ये इति ।** वार्तिके 'जसी'त्युपलक्षणं, प्रियतिस्रावित्याद्यर्थमप्युपसङ्ख्यानावश्यकत्वात् । ततश्च पूर्वबाधेन सावकाशं रादेशं सर्वनामस्थानगुणो जसि गुणश्च परत्वाद्बाधेते इत्युपसङ्ख्यानं कर्तव्यमित्यर्थः । **सर्वापवादत्वमिति।** बाध्यसामान्यचिन्ताश्रयणादिति भावः । इदमेवाऽऽचार्योक्तं समाधानं । ध्वनितं चेदं 'तृज्वत्क्रोष्टु'रित्यत्र भाष्ये । चोदक आह—**गुणोऽपीति ।** तदाशयमाह—**सोऽपि ।** सर्व-

---

१ 'कर्त्तव्यम्' पा० । २ 'कर्त्तव्यम्' पा० ।

**नवकाशः ॥ सावकाशो गुणः ॥ कोऽवकाशः ? ॥ हे कर्तः ॥ नैष सर्वनामस्थाने गुणः ॥ कस्तर्हि ? ॥ संबुद्धिगुणः ॥ अयं तर्हि—हे मातः !॥ एषोऽपि संबुद्धिगुण एव ॥ नाऽत्र संबुद्धिगुणः प्राप्नोति ॥ किं कारणम् ? ॥ 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वत्वेन भवितव्यम् ॥ भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यान्न स्यात्, ह्रस्वानां तु खलु ह्रस्वत्वं क्रियतां संबुद्धिगुण इति परत्वात्संबुद्धिगुणेन भवितव्यम् ॥ अथापि कथं चित्सावकाशो गुणः स्या-**

प्र.]सिद्धः। 'कर्तारे'मित्यत्रापि 'अमि पूर्व' इति प्राप्नोति।तत्र द्वयोर्विध्यन्तरापवादयोरपवादविप्रतिषेधात्परत्वाद्गुणप्रसङ्गः । इतरोऽन्यविधिपूर्वकत्वाऽभावं गुणस्य दर्शयति—**सावकाश इति**। **हे कर्तरिति**। संबुद्धौ 'ह्रस्वस्य गुण' इति गुणं परत्वादृतो ङीति गुणो बाधत इति मन्यते । तत्र कर्तारावित्यादौ यद्यपि परत्वात्पूर्वसवर्णादिकं बाधित्वा गुणो भवति तथापि विध्यन्तरपूर्वकेण रादेशेन बलीयसा न स्पर्द्धत इति भावः । **नैष इति**। एतदर्थो गुणस्य नारम्भो, लक्षणान्तरेण सिद्धत्वादित्यर्थः । हे **मातरिति** । संबुद्धिनिमित्तो गुणोऽत्र नास्ति, 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वेन बाधनात् । **एषोऽपीति** । गुणो ह्रस्वत्वं परत्वाद्बाधत इति भावः ।

**अम्बार्थेति**। अस्मिंश्च सति 'ऋतो ङी'ति गुणः प्रवर्तते । **भवेद्दीर्घाणामिति** । ननु दीर्घाणां ह्रस्वविधानं 'ह्रस्वस्य गुण' इति गुणविधानार्थमेव स्यात् । ह्रस्वानां तु ह्रस्वविधानं गुणबाधनार्थं स्यात् । नैतदस्ति । एवं तर्हि दीर्घाणामेव गुणं विदध्यात्—'नदीह्रस्वयोर्गुण' इति । प्रक्रियागौरवमेवं परिहृतं भवति । **परत्वात्संबुद्धिगुणेनेति** । गुणस्यावकाशः—अग्ने वायो । ह्रस्वस्याऽवकाशः—अम्ब अक्क । हे मातरिति परत्वाद्गुणः । एवं च सर्वनामस्थानगुणः पूर्वसवर्णापवाद एवेति अपवादविप्रतिषेधात्त्रिस्रस्तिष्ठन्तीति परत्वाद्गुणप्रसङ्गः । स च न 'जसि चे'त्यनेन, किं तर्हि 'ऋतो ङी'त्यनेन, 'जसि चे'त्यस्मात्परत्वात् । **अथापीति** । 'ह्रस्वस्य गुण' इति यदि

उ.] नामस्थानगुणोऽपि । द्वयोः—रादेशशसर्वनामस्थानगुणयोः । **इतर इति** । सिद्धान्त्येकदेशीत्यर्थः । ननु हे कर्त्तरित्यत्र संबुद्धिगुण एव प्राप्नोति न सर्वनामस्थानगुणोऽत आह—**संबुद्धाविति** । **विध्यन्तरपूर्वकेणेति** । उदाहरणमात्रे विध्यन्तरपूर्वकेणेत्यर्थः । गुणस्तु हे कर्तरित्यत्र न विध्यन्तरपूर्वक इति भावः । **एतदर्थ इति** । यदर्थो यस्यारम्भः स एव तस्यावकाशो युक्त इति भावः । **संबुद्धिनिमित्त इति** । एवञ्च सर्वनामस्थानगुण एवाऽत्र प्राप्नोतीत्ययं तस्यावकाश इति भावः ।

ननु हे मातरित्यत्र ह्रस्वप्राप्तेः कथं संबुद्धिगुणोऽत आह—**गुणो ह्रस्वत्वमिति**। **अस्मिंश्च सतीति** । ह्रस्वश्च येन नाप्राप्तिन्यायेन संबुद्धिगुणस्यैव बाधको नाऽस्येति भावः । **गुणबाधनार्थमिति** । प्रयोजनान्तराऽभावादिति भावः । **एवं तर्हीति** । यदि ह्रस्वे कृते दीर्घान्ते गुणः स्यात्तर्हि नद्या एव गुणं विदध्यादिति दीर्घाणां-

१ 'ह्रस्वानान्तु ह्रस्वत्वं' 'ह्रस्वानां खलु ह्रस्व' पा० । २ 'ह्रस्वं' पा० ।

**देवमपि न[1] दोषः, 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त' इत्येवमयं रादेशो जसि गुणं बाधते सर्वनामस्थानगुणं न बाधिष्यते। तस्मात्सुष्ठूच्यते— "अचि रादेशे जस्युपसङ्ख्यानं गुणपरत्वा"दिति ॥[ अचि र ऋतः ] ॥**

## जराया जरसन्यतरस्याम् ॥ ७।२।१०१ ॥

[ ॥*॥ नुमोऽनङ्[2]जरसौ ॥*॥] **नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन। नुमोऽवकाशः—त्रपुणी जतुनी तुम्बुरुणी। अनङोऽवकाशः—प्रियसक्था ब्राह्म-**

---

प्र.]योगविभागः क्रियते। ('ह्रस्वस्य') अम्बार्थस्य ह्रस्वान्तस्य ह्रस्वो भवति। ततो 'गुण' इति। ततश्च 'हे मात'रित्यत्र ह्रस्वे कृते सर्वनामस्थानगुणः क्रियते। एतच्चाभ्युपगम्योच्यते, न तु योगविभागस्य किं चिदस्ति प्रयोजनम्। **सर्वनामस्थानगुणमिति।** यद्यप्यबाधिते सर्वनामस्थानगुणे जसि गुणः फलतो न बाधितस्तथापि लक्षणव्यवस्थानुसारेणैतदुच्यते। न ह्ययं रादेशोऽनवकाशो यत 'ऋतो ङिसर्वनामस्थानयो'रित्येतं गुणं बाधेत[3]। 'जसि चे'ति गुणबाधनेन 'ऋत उ'दित्युत्त्वबाधनेन शसि पूर्वसवर्णबाधनेन च सावकाशत्वात्। **तस्मादिति।** जसिग्रहणं ङिसर्वनामस्थानोपलक्षणमित्याहुः। तथा च प्रियतिस्राविति रादेशो भाष्य उदाहृतः। तेन 'प्रियतिस्रि निधेहि' इत्यत्रापि रादेशो भवति। के चित्त्वाहुः—'चतसर्याद्युदात्तनिपातन'मित्यत्र वार्तिके रादेशस्य ङावकरणाज्जसोऽन्यत्र गुणविषये रादेशं वार्तिककारो नेच्छतीति नोपलक्षणं जस्ग्रहणम् ॥

**जरायाः। प्रियसक्थेति।** नपुंसकेनाऽङ्गस्य विशेषणान्नुमोऽत्राऽप्राप्तिः। अन-

---

उ ] ह्रस्वविधानं गुणबाधनार्थमेवेति भावः। ननु 'जसि चे'ति गुणः प्राप्नोतीति 'ऋतो ङी'त्यस्यानवकाशत्वविचारो निष्फलोऽत आह—**स च नेति।** परस्परं गुणाभ्यां स्थानिरूपनिमित्तविघाताद्विरोधोऽस्तीति भावः। **योगविभाग इति।** तत्र ह्रस्वस्येत्येको योगः। तत्राम्बार्थग्रहणं ह्रस्व इति चानुवर्तते। तदयमर्थः—'अम्बार्थानां ह्रस्वस्य ह्रस्वो भवती'ति। एतच्च परत्वात्प्राप्तस्य ह्रस्वीयसंबुद्धिगुणस्य संबुद्धौ बाधनार्थमेवेति भावः। एवंच सर्वनामस्थानगुणो विध्यन्तराऽबाधेन प्रवृत्त्या सावकाश इति तात्पर्यम्। **नन्विति।** योगविभागेऽप्युपसङ्ख्यानस्य वक्ष्यमाणरीत्याऽवश्यकर्तव्यत्वादिति भावः। **फलतो न बाधित इति।** सर्वथा गुणस्य प्राप्तत्वात्। वस्तुतोऽथापि कथं चिदिति भाष्यस्यायमर्थः,—येन नाप्राप्तिन्यायेन सर्वनामस्थानगुणः पूर्वसवर्णदीर्घमेव बाधते न रादेशमित्यर्थः। एवञ्च बाध्यविशेषचिन्ताश्रयणेऽत्रापि तथैव दोषस्तस्माज्जस्युपसङ्ख्यानं कर्तव्यमिति चोद्यान्तमेवेदमेकदेश्युक्तिरूपं भाष्यं। समाधितत्वं तु लक्ष्यानुरोधात् 'ऋतो ङी'त्यत्र बाध्यविशेषचिन्ताश्रयणम्, अत्र तु बाध्यसामान्यचिन्ताश्रयणमिति **न वानकाशत्वादस्ये**त्यनेनोक्तमेवेति सुधियो विभावयन्तु। **केचित्त्वाहुरिति।** अत्रारुचिबीजं तु तत्र शब्दपरत्वाद्रादेशाऽप्राप्तिरिति ॥

**जराया जरसन्यतरस्याम्।** ननु प्रियसक्थेत्यत्राऽपि सक्थिशब्दस्य नपुंसकत्वा-

---

१ 'एवमपि दोषः' पा०। २ इदं प्रायो लुप्तम्। ३ 'बाधते' पा०।

**णेन । इहोभयं प्राप्नोति–दध्ना[1] सक्थ्ना । जरसोऽवकाशः—जरसा जरसे । नुमोऽवकाशः–कुण्डानि वनानि ॥ इहोभयं प्राप्नोति–अतिजरांसि ब्राह्मण-कुलानि ॥ अनङ्जरसौ नुमो भवतो विप्रतिषेधेन ॥**

**अथेह लुक्कस्मान्न भवति–अतिजरसं पश्येति ? ॥ किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न पुनः प्रथमैकवचनमपि—अतिजरसं तिष्ठतीति ? ॥ अस्त्यत्र विशेषो.–नाऽत्राऽकृतेऽम्भावे जरस्भावः प्राप्नोति ॥ किं कारणम् ? ॥ 'अची'त्युच्यते । यदा[3] च जरस्भावः कृतस्तदा लुङ्न भविष्यति-'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति ॥ यद्येवमतिजरसमति-**

---

**प्र.]**ङ्विधौ त्वस्थ्यादीनां विशेषणं नपुंसकमित्यनङ् भवति । **अतिजरांसीति** । अति-जर अस् इति स्थिते यदि पूर्वं नुमागमः स्यात्, स च पूर्वाङ्गभक्तोऽङ्गमेव न व्यवदध्यात्, अवयवस्य तु जराशब्दस्य व्यवधायक इति निर्दिश्यमानस्यादेशो विधीयमानो न प्राप्नोति। अथाऽपि स्यात्तथापि सकारात्परस्य नुमः श्रवणं स्यात्। तस्मात्परत्वात्पूर्वं जरस्भाव एष्टव्यः । तत्र कृते झलन्तलक्षणो नुमागमः । **अतिजरसं पश्येति** । 'अतिजर–अम्' इति स्थिते एकदेशविकृतस्याऽनन्यत्वाज्जरशब्दस्य जरसि कृते 'स्वमोर्नपुंसका'दिति स्वमोर्लुक् प्राप्नोति । ननु चाऽतिजरशब्दस्याऽदन्तत्वादतोमित्यम्भावेन लुग्बाधितः कथं प्राप्नोति?।नैतदस्ति। नात्राऽम्भावः प्रवृत्तः, परत्वान्नित्यत्वाद्वा जरसादेशेन बाधितत्वात् । जरसादेशे कृतेऽनकारान्तत्वादम्भावाऽप्रसङ्गाल्लुक्प्राप्तिश्चोद्यते । **न पुनरिति** । सोरपि हि लुङिष्यते । **यदा च जरस्भाव इति** । या पूर्वं लुक्प्राप्तिः साऽपवादेन बाध्यते । कृते तु जरस्भावे सन्निपातपरिभाषया अजादिसन्निपातेन जरस्भावो निष्पन्नो नोत्सहतेऽजाद्यानन्तर्यं विहन्तुम् । **यद्येवमिति** । सोर्भिसश्चाऽकारान्तसन्निपातेनाऽजादिरादेशोऽकारान्तविघा-

---

**उ.]**नुमः प्राप्त्या कथमनङोऽवकाशोऽत आह–**नपुंसकेनेति** । नुम्जरसोर्विप्रतिषेधस्य फलं दर्शयति—**अतिजर अमिति स्थित इति** । 'टाङसीतिसूत्रोक्तरीत्या जरसादेशापेक्षया पूर्वविप्रतिषेधेन विभक्त्यादेशशिभावे कृते' इति शेषः । अन्यथा सर्वनामस्थानपरत्वाऽभावेन नुमोऽप्राप्तिरेव स्यात् । **स चाऽङ्गभक्त** इति पाठ उचितः । **अथापि स्या**दित्यभ्युपगमवादः । **स्वमोर्लुगिति** । न चाऽस्यामवस्थायाममः प्रसङ्गः, अनदन्तत्वात् । ननु पूर्वममा बाधितस्य लुकः कथं पुनः प्रवृत्तिरिति शङ्कते–**ननु चेति । परत्वान्नित्यत्वाद्वेति** । चिन्त्यमेतत् । 'अन्तरङ्गानपी'ति न्यायेन लुको बलवत्त्वात्तद्बाधेनाऽमादेशप्रवृत्तिं विना जरसोऽप्रवृत्तेः।पुनर्लुगापादानं तु भिन्ननिमित्तकत्वान्न दोषायेति बोध्यम् । **सापवादेनेति** । अम्भावेनेत्यर्थः । **सन्निपातपरिभाषयेति** । 'बाध्यते' इत्यनुषङ्गः । तदुपपादयति–**अजादीति** । **अनिमित्तं**

---

१ अयं पाठो लुप्तो मुद्रिते । २ इतोऽग्रे 'अनङ्भवति विप्रतिषेधेन' इतिक्वचित्पाठः । ३ 'यदा चाऽम्भावः कृतस्तदा जरस्न प्राप्नोति' इति नागेशसंमतः प्राचीनः पाठः ।

जरसैरित्यत्र न प्राप्नोति, अतिजरमतिजरैरिति भवितव्यम् ॥ गोनर्दीय आह—"इष्टमेवैतत्सङ्गृहीतं भवति। अतिजरमतिजरैरिति भवितव्यं सत्यामेतस्यां[1] परिभाषायां—सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये"ति ॥[ जरायाजरस् ]॥

**त्यदादीनामः ॥ ७।२।१०२ ॥**

॥*॥ त्यदादीनां द्विपर्यन्तानामकारवचनम् ॥*॥ **त्यदादीनां द्विपर्यन्तानामत्वं वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ युष्मदस्मदन्तानां भवदन्तानां वा मा भूदिति ॥ तर्त्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥**

---

प्र.]तिनं जरसादेशं प्रत्यनिमित्तं स्यात्। **इष्टमिति**। सन्निपातपरिभाषावशात्। 'अतिजरसं पश्ये'त्यत्र तु नाऽकारान्तसन्निपातकृतमजादित्वं भवतीति भवत्येव जरसादेशः। स त्वजादिसन्निपातनिमित्तत्वादजादेर्लुकं प्रत्यनिमित्तमिति लुगभावः। **[जरायाजरस् ]॥**

**त्यदादीनामः । युष्मदस्मदन्तानामिति** । 'युष्मद्भवत्वस्म'दिति येषां गणपाठस्तदपेक्षयैतदुक्तम् । यद्यप्यस्मच्छब्द एवान्तस्तथाप्यत्यन्तसाहचर्याच्छास्त्रे युष्मदस्मदोर्युष्मच्छब्दो निर्दिष्टः । **भवदन्तानां वेति** । 'युष्मदस्मद्भव'त्विति

---

उ.]**स्यादिति** । 'इत्यत्र न प्राप्नोती'ति भाष्यस्य 'जरसादेश' इति शेषः। नन्वनयैव परिभाषया द्वितीयान्तत्वेऽपि जरस्भावो न स्यादत आह—**अतिजरसं पश्येति** । **नाकारान्तसन्निपातकृतमिति** । किन्तु तदभावेऽप्यजादित्वमस्तीति भावः । एवंच सन्निपातलक्षणविधिं विनाऽपि यस्य प्रवृत्तियोग्यता तत्र नायं न्याय इति तात्पर्यम् । केचित्तु लुकं बाधित्वा अमि कृते सन्निपातलक्षणविधिनिमित्त एव जरसादेश इति न भवत्येव इति द्वितीयैकवचनेऽपि जरस् । पूर्वं तु सर्वतो बलवल्लुक्प्राप्त्या न जरस् । कैयटोक्तार्थे तु न मानम्, अतएव साधारण्येनैव—'अतिजरमिति भवितव्य'मिति भगवतोक्तम् । अतएव टाङसीति सूत्रेऽतिजरेणेत्येव रूपं सन्निपातपरिभाषया कैयटेनोक्तमित्याहुः । एवञ्च तत्र लुक्प्राप्तिचोद्यमप्यर्थात्परिहृतमेवेति भगवता साक्षान्नोक्तः परिहारः । **परेतु** 'अतिजरसं पश्येत्यत्र लुक् कस्मान्न भवती'ति पूर्वपक्षे,परेणा'तिजरसं तिष्ठतीति कुतो नोदाह्रियते' इति प्रश्ने पूर्वपक्षिणा क्रियमाणविशेषोपपादने—'नात्राऽकृतेऽम्भावे जरस्प्राप्नोति, कृते च जरसि न लुकः प्राप्तिः, सन्निपातपरिभाषये' त्युक्तिरनुचिता । तथा सति स्वपूर्वपक्षस्याप्यपगमेनाऽस्त्यत्र विशेष इति प्रतिज्ञाहानेः । तस्मादेवं पाठउचितः—'अस्त्यत्र विशेषो नाकृतेऽम्भावे जरस्प्राप्नोति । किं कारणम्, अचीत्युच्यते । यदा चाम्भावः कृतस्तदा जरस् न प्राप्नोति । सन्निपाते'त्यादि । दृश्यते चातिचिरन्तनपुस्तकेषु तथा पाठः। एवञ्च प्रथमैकवचने इदं रूपमेव दुर्लभमिति भावः । एवं तर्हि द्वितीयैकवचनेऽपि-जरस् न प्राप्नोतीति शङ्कते—**यद्येवमतिजरसमित्यादि** । उक्त आशयः । सिद्धान्ती इष्टापत्त्या परिहरति—**इष्टमेवैतदित्यादिना** । एवं च द्वितीयैकवचने लुगापत्तिः समा-

---

१ 'मेव तस्यां' पा० ।

॥*॥ त्यदादीनामकारेण[1] सिद्धत्वाद्युष्मदस्मदोः ।
शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ॥*॥

**यदयं त्यदादीनामत्वेन[2] सिद्धे युष्मदस्मदोः शेषे लोपं[3] शास्ति तज्ज्ञापयत्याचार्यः–'प्राक्ततोऽत्वं भवतीति, न सर्वेषा'मिति ।**

॥*॥ अपि वोपसमस्तार्थमत्वाऽभावात्कृतं भवेत् ॥*॥[4]

**नैतदस्ति ज्ञापकम्, उपसमस्तार्थमेतत्स्यात्–अतियूयम् अतिवयम् ।**

प्र.]पाठापेक्षमेतत् । किंशब्दस्य तु कादेशेन भवितव्यमिति त्यदादीनामन्तेऽपि किमः पाठे 'किमन्ताना'मिति नोक्तम् । के चित्तु द्विशब्दात्पूर्वं किंशब्दमधीयते । तेन 'किंसर्वनामबहुभ्योऽद्व्यादिभ्य' इति किमो भेदेन ग्रहणं न कर्तव्यं भवति । तत्र भवच्छब्दस्याऽत्वापत्तिर्दोषः। युष्मदस्मदोस्त्वात्वयत्वलोपैरत्वं बाध्यत इति दोषाऽभावः । **शेषे लोपस्य लोपेनेति** । यः शेषे लोपः प्रसिद्धस्तत्संबन्धिना लोपशास्त्रेणेत्यर्थः । क चित्तु 'शेषे रूपस्य लोपेने'ति पाठः । तत्राऽयमर्थः–शेषे विषये रूपस्य लोपो विधीयते येन तेन । **ततोऽदिति** । वृत्तपूरणार्थस्तपरनिर्देशः । सूत्रे त्वतपर एवाऽकारो निर्दिष्टः । **अपि चेति**–ज्ञापकत्वं विघटयति । उपसर्जनानां त्यदाद्यत्वाऽभावादुपसर्जनयुष्मदस्मदर्थो लोपः स्यात् । **अतियूयमिति** । त्वामतिक्रान्ता इति

उ.] हिता । किं च 'द्वितीयैकवचने लुकुतो ने'ति प्रश्ने, परेण 'प्रथमैकवचनमपि कुतो नोदाह्रियते' इति शङ्किते पूर्वपक्षिणा–तत्र विशेषे उपपादिते 'यद्येव'मिति ग्रन्थः परस्य पूर्वपक्षिणं प्रतीति स्वरसतः प्रतीयते । अतस्तदुदाहृतद्वितीयैकवचनविषयतैवोचितेति मदुक्तपाठ एवोचित इत्याहुः ॥ **[ जराया जरस् ]** ॥

**त्यदादीनामः** । नन्वत्र पाठेऽस्मदन्तानामित्येव वक्तुं युक्तमत आह—**यद्यपीति** । केचित्तु 'भवतुयुष्मदस्म'दिति पाठाश्रयेणेदं भाष्यमित्याहुः। **अत्यन्तेति** । युष्मदस्मद्भ्यामित्यादौ । नन्वन्ते किमः पाठात्किमन्तानामिति वक्तुमुचितमत आह–**किंशब्दस्य त्विति** । नन्वेवमपि भवदन्तानामित्ययुक्तम् , अग्रे कस्याप्यभावे एवाऽन्तशब्दप्रयोगात् । अत्र च किंशब्दोऽग्रेऽस्ति, 'भवत्पर्यन्ता'नामिति वक्तुं युक्तम् । अत एव वार्तिके परिशब्दोच्चारणमत आह—**केचित्त्विति** । तन्मतानुसारेण तथोक्तमिति भावः । वार्तिकानारम्भे दोषं दर्शयति–**तत्रेति** । ननु 'लोपस्य लोपेने'त्ययुक्तं, लोपस्य लोपान्तराऽभावादत आह—**यः शेष इति** । लोपशब्देन तद्विधायि शास्त्रं लक्ष्यत इत्यर्थः । **वृत्तपूरणार्थ इति** । चिन्त्यमेतत् । 'ततोऽइती'ति पाठेऽपि वृत्तपूरणात् । 'मुखसुखार्थ' इति वक्तुमुचितम् । **सूत्रे त्वतपर एवेति** । नतु वार्तिकदर्शनेन सूत्रे तपरपाठ इति भ्रमितव्यमित्यर्थः । भाव्यमानस्य सवर्णाऽग्राहकत्वेन तपरत्वे फलाऽभावादिति तात्पर्यम् । **अपि चेति** दर्शनादुक्तेऽर्थे हेत्वन्तरत्वभ्रमं वारयति–**विघटयतीति** । 'अपिचे'ति पादपूरणार्थमिति भावः । **उप-**

१ श्लोकवार्त्तिकानि । २ 'मत्वे' पा० । ३ 'शेषलोपं' पा० । ४ 'चो' पा० ।

**उपसमस्तानां हि त्यदादीनामत्वं नेष्यते,—अतितत् अतितदौ अतितदः ॥**

॥*॥टिलोपष्टाबभावाऽर्थः कर्तव्य इति तत्स्मृतम् ॥*॥

**यस्तु शेषे लोपष्टिलोपः स वक्तव्यः ॥ किं प्रयोजनम् ? ॥ 'टाप्प्रतिषेधार्थम्' । टाम्भा भूदिति ॥ स तर्हि टिलोपो वक्तव्यः ? ॥ न वक्तव्यः ।**

॥*॥ अथ वा शेषसप्तम्या शेषे लोपो विधीयते ॥*॥

**इह युष्मदस्मदोर्लोप इतीयताऽन्त्यस्य लोपः सिद्धः, सोऽयमेवं सिद्धे सति यच्छेषग्रहणं करोति तस्यैतत्प्रयोजनम्—'अवशिष्टस्य लोपो यथा स्या'दिति।**

---

प्र.]प्रादिसमासः । **टिलोप इति** । अत्वे सति टाप्प्रसङ्गात्तदभावार्थः शेष लोपष्टिलोपः सति प्रयोजने न ज्ञापकम् । 'अलिङ्गे युष्मदस्मदी' इत्यनभ्युपगम्यैतदुच्यते । एकपदवाच्यस्याप्यर्थस्य शब्दान्तराभिव्यङ्ग्यत्वं दृश्यते 'अश्वस्त्वं ग्राम'मिति,—लिङ्गवत्त्वं कैश्चित्तयोरभ्युपगतम् । अत एव 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा' इति विप्रतिषेधः पठितः।, 'न षट्स्वस्रादिभ्य' इति च स्त्रीप्रत्ययनिषेधः षड्भ्यः कृतः । **स तर्हीति** । नन्वत्वेन सिद्धत्वाद्वचनाट्टिलोपो भविष्यति । नैतदस्ति । सर्वादेशः स्यात् । उपसर्जनस्य चाऽत्वाऽसिद्धिरुक्ता । **अथ वेति** । उक्तमेतल्लोपमुत्सर्गं विधायानादेशे हलादावात्वमजादौ तु यत्वमपवादो विधास्यत इति शेषग्रहणं विभक्तिविशेषणाऽर्थमनर्थकं तत्,—क्रियते लोपस्य विषयार्थं, मपर्यन्ताद्योऽन्यः स शेषः स च टिरेव। तस्य लोपस्य स्थानी विषयसप्तम्या निर्दिष्टः । नन्वेवं तव ममेत्यादावादेशेषु(कृतेषु)मपर्यन्ताभावात्तदपेक्षया अच्छब्दस्य शेषव्यपदेशाभावाल्लोपाऽभावप्रसङ्गः। नैष दोषः।प्रागादेशविधानादच्छब्दःशेषत्वेन परिच्छिन्नइतिपरिच्छेदायोपादानादतन्त्र-

---

उ.]सर्जनानामिति । तेषां पाठादेव पर्युदासादितिभावः । भाष्ये प्रयोजनान्तरमाह—**टिलोप इति** । मपर्यन्ताच्छेषविज्ञानं । शेष इति च स्थानिनोऽधिकरणत्वविवक्षया सप्तमीति भावः । नन्वहं ब्राह्मण इत्यादौ पदान्तरसमभिव्याहारादेव लिङ्गप्रतीत्युपपत्तौ किमर्थं तेषां लिङ्गवत्त्वाभ्युपगमः?।पदान्तरसमभिव्याहारं विना प्रतीतेरयुक्तश्चेत्यत आह—**एकपदेति** । **अश्वस्त्वमिति** । त्वं ग्रामं गतवानित्यर्थः । श्वयतेर्लुङि मध्यमपुरुषैकवचनं।यद्यप्यश्व इत्येतदेव क्रियावाचि तथापि तस्य जातिविशेषरूढत्वात्पदान्तरसमभिव्याहारादेव तत्त्वव्यक्तिः । एवं सत्त्वभूतस्याऽर्थस्य लिङ्गवत्त्वाऽव्यभिचारादेतावेव लिङ्गाभिधायिनौ। किन्तु शब्दान्तरप्रयोग एव तदभिव्यक्तिर्नान्यथा, रूपस्य साधारणत्वादिति भावः। **न षडिति**—दृष्टान्तार्थं। भाष्ये—**स तर्हि वक्तव्य इति** । टिग्रहणं कर्तव्यमित्यर्थः । तत्र तद्विनाऽपि सामर्थ्यात्तल्लोपो भविष्यतीति शङ्कते—**नन्विति**। 'न वक्तव्य' इत्यत्र भाष्ये हेतुः—**अथवेति**। 'यत' इत्यर्थः । निपातानामनेकार्थत्वात् । वार्तिकस्थ'शेषसप्तम्ये'त्यस्य शेषार्थपर्यवसायिन्या सप्तम्येत्यर्थः । तदाह—**विषयसप्तम्येति** । **आदेशेषु कृतेष्विति** । परत्वादिति भावः। **प्रागादेशेति**। सांप्रतिकाऽभावे भूतपूर्वगतिराश्रीयत इत्यर्थः। यद्यपि युष्मभ्य-

॥*॥ लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–'न सर्वेषां त्यदादीनामत्त्वं भवती'ति यदयं–'किमः कः' इति कादेशं शास्ति । इतरथा हि 'किमोऽद्भवती'त्येव ब्रूयात् ॥ सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति, न च किमोऽत्वेन सिध्यति । अत्वे हि सत्यन्त्यस्य प्रसज्येत ॥ सिद्धमन्त्यस्य पूर्वेणैव, तत्रारम्भसामर्थ्यादिकारस्य भविष्यति ॥ कुतो नु खल्वेतत्–अनन्त्यार्थ आरम्भे**

---

प्र.]त्वंमपर्यन्तस्य । **लुप्तशिष्टे हीति** । लुप्ते यःशिष्टस्तस्मिन्कार्यस्य टाबभावस्य सिद्धिः। तवममादिषु चादेशेष्वकार उच्चारणार्थो, हलन्ता एव त्वादेशा इति न क चिट्टाप्प्रसङ्गः । **यदयमिति** । 'किंसर्वनामबहुभ्य' इति किम्शब्दस्य भेदेनोपादानाद्दिशब्दात्परः किम्शब्दो गणे पठ्यत इति निर्णयः । यदि च द्विशब्दात्परेषामत्वं स्यात्किमः कं न विदध्यात्,'किम' इत्येव ब्रूयात् । पूर्वसूत्रादकारस्यानुवृत्त्या पूर्वेणान्तस्याऽत्वे कृते इकारस्य तु 'किम' इत्यनेन, द्वयोरकारयोः पररूपेण क इत्यादेः सिद्ध-

---

उ.]मित्यत्राऽभ्यम्पक्षे सांप्रतिकसंभवस्तथापि नैकमुदाहरणं योगारम्भं प्रयोजयतीति भावः । **लुप्तशिष्टे हीति** भाष्येण–पूर्वोक्तार्थस्यैव समर्थनं, तदाह–**लुप्ते य इति** । '**मनीषिण** आचार्यस्य **तस्य** शेषग्रहणस्य फलमाहु'रित्यन्वयः । कार्यशब्देन प्रकृतत्वाट्टाबभाव एवोच्यत इत्याह—**टाबभावस्येति** । नन्वेवं तवाद्यादेशे परत्वादाङ्गत्वाच्च पररूपात्पूर्वं टिलोपे टाबापत्तिरस्त्येवेत्यत आह–**तवममादिषु चेति** । 'त्वाहौ सा'विति गुरुनिर्देशस्तु 'श्वेतवहोक्थश'सितिवन्नार्थसाधक इति भावः । नचैवं ण्यन्तात्क्विपि 'युष्म्' इति प्रातिपदिकस्य तवाद्यादेशे शेषे लोपस्याऽन्त्यलोपत्वे वकारादिलोपे त्वं तवेत्यादिमपर्यन्तसूत्रकैयटोक्तरूपाऽसिद्धिः, तं तेत्याद्यापत्तिश्चेति वाच्यं, मपर्यन्तस्तत्र शेषे कैयटोक्ते केचिन्मते दोषाऽभावात् । अत्रत्यकैयटात्तदेव ग्रन्थकृदभिमतमिति लक्ष्यते । वस्तुतः सन्निपातपरिभाषया टाब्वारयितुं शक्यः । न च 'न यासयो'रिति लिङ्गाट्टाब्विषये न सेति वाच्यं, त्यदाद्यत्वविषयेऽनित्यत्वमात्रकल्पनेऽपि टाब्विषये सर्वथाऽप्रवृत्तिकल्पने मानाऽभावात् । अतएव 'बुद्धा'वित्यादौ टाब्व्यावृत्तिः सन्निपातपरिभाषया भाष्ये 'कृन्मेजन्त'सूत्रे उक्ता । इदमेव 'आहु'रित्यत्र भाष्येऽरुचिबीजमित्याहुः । ननु केषाञ्चिन्मते द्वेः पूर्वं किमः पाठात्कथं ज्ञापकत्वमत आह—**किंसर्वनामेति** ।अन्यथा'ड्यादिभ्य इति पर्युदासाऽभावात्किंशब्दो न सूत्रे पठनीयः स्यादिति भावः । **किम इत्येवेति** । भाष्ये तु 'किमोऽ'दित्यधिकारसिद्धोऽर्थो दर्शितः । **किम इत्यनेनेति** । 'अत्वे कृते' इत्यनुषङ्गः। **प्रयोजनाभावादिति** । यद्यप्यदमुयङ्ङित्यादिप्रयोजनानि सन्त्येव, तथापि तदनाश्रित्येयमेकदेश्युक्तिः। प्रकारान्तरेणाऽस्य ज्ञापकस्य खण्डनाच्च सिद्धान्तिनस्तदनादरः। भाष्ये–**यत्तर्हि किम इति** । पूर्वं–'किम' इत्येव सूत्रं कार्यं, विशिष्टादेशविधानं ज्ञापकमित्युक्तम् । इदानीं तु–'किम' इत्यंशोऽपि ज्ञापकमित्युच्यते इति

**सतीकारस्य भविष्यति न पुनः ककारस्य स्यात् ? ॥ यत्तर्हि किमो ग्रहणं करोति । इतरथा हि 'कादद्भवती'त्येव ब्रूयात् ॥ एवमपि ककारमात्रात्परस्य प्राप्नोति ॥ 'त्यदादीना'मिति वर्तते, न चाऽन्यत्किमस्त्यदादिषु ककारवदस्ति॥ एवमप्यनैकान्तिकं ज्ञापकम् । एतावत्तु[1] ज्ञाप्यते—'न सर्वेषां त्यदादीनामत्वं भवती'ति ; तत्र कुत एतद्–'द्विपर्यन्तानां भविष्यति न पुनर्युष्मदस्मद-दन्तानां वा स्याद्भवदन्तानां वा' ! ॥ किञ्चाऽवश्यं खल्वप्युत्तरार्थं किमो ग्रहणं कर्तव्यं–'कु तिहोः' 'क्वाती'ति ॥ कादेशः खल्वप्यवश्यं साकच्कार्थो वक्तव्यः—कः कौ के इत्येवमर्थम् । तस्माद्द्विपर्यन्तानामत्वं[2] वक्तव्यम् ॥**

॥*॥ त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः ।
शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ॥ १ ॥
अपि वोपसमस्तार्थमत्वाऽभावात्कृतं[3] भवेत् ।
टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम् ॥ २ ॥
अथ वा शेषसप्तम्या शेषे लोपो विधीयते ॥
लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥ ३ ॥*॥

---

प्र.] त्वात् । **न पुनः ककारस्येति** । 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति (तु) परिभाषा प्रयोजनाऽभावात्प्रत्याख्याता । **कादद्भवतीति** । ककारेऽकार उच्चारणार्थः। 'का'-दित्येतावत्सूत्रं क्रियते । अकारस्तु पूर्वसूत्रादनुवर्तते । स चादेः परस्येति इका-रस्य भवति । मकारस्य तु पूर्वेण । **ककारमात्रादिति** । 'कृकवाकु'रित्यादावपि । **न चान्यदिति** । यद्यपि सर्वाणि त्यदादीन्यकचा ककारवन्ति, तथापि तेषां कात्परोऽ-कार एवेति नास्ति विशेषः। 'द्वकि'शब्दस्य तु त्यदाद्यत्वं भवत्येव । **एवमपीति** । विशेषस्य निश्चेतुमशक्यत्वात्प्रमाणाऽभावात् । **साकच्कार्थ इति** । सर्वस्य साक-च्कस्य कादेशो यथा स्यादित्येवमर्थं 'किमः क' इति कर्तव्यम् । तेनाऽज्ञाताऽर्थविव-क्षायां 'क' इत्येव भवति, न तु 'कक' इति भवति । ननु निर्दिश्यमानस्यादेशा भवन्तीति साकच्कस्य कादेशो न प्राप्नोति । न च शक्यं वक्तुं 'किमः क इति वचनसामर्थ्याद्भवती'ति, 'किम' इति स्थानिनिर्देशस्योत्तरार्थत्वात् । एवं तर्हि तन्त्रा-श्रयणात्साकच्कस्यापि भवतीत्यदोषः । [ **त्यदादीनामः** ] ॥

---

उ.] विशेषः। ननु किम्शब्दे कशब्दोऽप्रसिद्धोऽत आह–**ककारेऽकार इति**। क **इत्ये-वेति** । प्रकरणादिवशाच्चाऽर्थविशेषावगतिरिति भावः। **तन्त्राश्रयणादिति** ।केचित्तु 'इम' इत्येव सूत्रं कार्यं, 'त्यदादीना'मित्यनुवर्तनाच्च नाऽतिप्रसङ्गः । सामर्थ्याच्च 'द्विपर्यन्ताना'मित्यस्याऽत्र त्यागः। 'नानर्थके' इति निषेधान्नाऽलोन्त्यविधिः।अकार-प्रश्लेषेणाऽनेकाल्त्वाद्वा सर्वादेशः । 'इमौ'इत्यादौ तु न,'अङ्गकार्ये' इति निषेधात्। 'कुति होः' 'क्वाती'त्यत्रापि 'उतिहोः' 'अती'त्येव पाठ्यम् । अङ्गवृत्तपरिभाषया

---

१ 'वत्तु' पा० । २ 'न्तानामिति अत्वं' पा० । ३ 'चोप' पा० ।

क्राऽति ॥ ७।२।१०५ ॥

किमर्थं क्वादेश उच्यते न 'कुतिहा[1]स्त्वि'त्येवोच्येत॥का रूपसिद्धिः क्व?॥ यणादेशेन सिद्धम् ॥ न सिध्यति–ओर्गुणः प्रसज्येत ॥ [ क्राति ] ॥

तदोः सः सावनन्त्ययोः ॥ ७।२।१०६ ॥

किमर्थमनन्त्ययोरित्युच्यते ?॥ अन्त्ययोर्मा भूदिति ॥ नैतदस्ति प्रयोजनम् , अत्वमन्त्ययोर्बाधकं भविष्यति ॥ अनवकाशा विधयो बाधका भवन्ति, सावकाशं चाऽत्वम् ॥ कोऽवकाशः ? ॥ द्विशब्दः ॥

सत्वमपि सावकाशम् ॥ कोऽवकाशः ? ॥ अनन्त्यः[3] ।

प्र.] क्राति । किमर्थमिति । कुभावे कृते 'अङ्गवृत्त' इति वचनादोर्गुणो न भवति । यणादेशस्त्वनाङ्गत्वाद्भविष्यतीति भावः । न सिध्यतीति । निष्ठितस्य दुर्ज्ञानत्वात् ॥

तदोः । किमर्थमिति । विशेषणविशेष्यभावे कामचारात्त्यदादीनां च द्विपर्यन्तानां मध्ये तकारान्तस्य कस्य चिदसंभवात्त्यदादिभिर्विशेषितयोस्तदोः सत्वं विधीयमानमनन्त्ययोः सावकाशमन्त्ययोरत्वेन बाधिष्यत इति प्रश्नः । अन्त्ययोरिति । परत्वात्प्राप्नोति । तकारस्यान्त्यस्याऽसंभवेऽपि सूत्रे द्वयोरुपादानादन्त्ययोरित्युक्तम् । नैतदस्तीति–पूर्वविप्रतिषेधमाश्रित्य चोदयति । द्विशब्द इति । उदाहरणमात्रमेतत् । अन्यत्र सोः सर्व एव त्यदादयोऽवकाशाः । सत्वमपीति । उभयोः सावकाशयोः परत्वात्सत्वप्रसङ्गः । कथं पुनरिति–आचार्यदेशीयः शिष्यबुद्धिपरिज्ञानाय पृच्छति । समुदायावयवसन्निधौ (तु) उभयोरनुग्रहायावयवेन समुदायो विशेष्यते । एवं हि समुदायस्यापि कार्येण संबन्धः प्रतिपादितो भवति । 'अलोन्त्यस्ये'ति वचनादवयवस्यापि । भवेदिति । व्याप्तिन्यायाश्रयणात्तकारान्ताऽसंभवाच्च त्यदादिभिस्तदौ विशे-

उ.] 'क्वे'त्यत्र गुणो न । एवं सिद्धे 'किमः क' इति सूत्रकरणान्निर्दिश्यमानपरिभाषाबाध इति, तन्न, 'उति ह्वो'रित्याद्युकारस्यान्त्यादेशत्वापत्तेः । तदर्थं 'नानर्थके' इति वचनारंभे तु विपरीतं गौरवम् । अङ्गवृत्तपरिभाषाया लक्ष्यसिध्यर्थत्वाऽभावाच्च । तस्मात्कैयटोक्तमेव सम्यक् । अनित्यत्वेन वा तत्परिभाषाऽप्रवृत्तिर्बोध्या ॥

क्राति । ननु वार्णादाङ्गपरिभाषया यणं बाधित्वौर्गुणः स्यादत आह–कुभावेति।

तदोः सः सौ । नन्वन्त्यव्यावृत्त्यर्थमनन्त्ययोरिति स्यादत आह—विशेषणेति । हेत्वन्तरमाह—त्यदादीनाञ्चेति । बाधिष्यत इति । पूर्वविप्रतिषेधाश्रयेणेति भावः । परत्वात्सत्वप्रसङ्ग इति । पूर्वविप्रतिषेधाश्रयणन्तु गुर्विति भावः ।

ननु 'तदो'रित्येतदङ्गविशेषणमिति पूर्वपक्षिसिद्धान्तिनोर्द्वयोरप्यसंमतमिति कस्येदं वाक्यमत आह–आचार्यदेशीय इति। 'तदो'रित्यस्याङ्गविशेषणत्वमेव युक्तमिति तदाशयमाह—समुदायावयवेति । चोदकीय–'भवेद्' इत्यादेराशयमाह—व्याप्तिन्यायेति । अथवेत्यादि पक्षद्वयेऽपि कथं नपुरित्यादिग्रन्थः सिद्धान्तिन

१ 'कुतिहास्वित्येवो' पा० । २ इदं वार्त्तिकमित्यन्ये । ३ 'अनन्त्यम्' पा० ।

**कथं पुनः सत्यन्त्येऽनन्त्यस्य सत्वं स्यात् ?॥ भवेद्यस्तकारदकाराभ्यामङ्गं विशेषयेत्तस्याऽनन्त्ययोर्न स्याद्वयं तु खल्वङ्गेन तकारदकारौ विशेषयिष्यामः ॥ एवमप्युभयोः सावकाशयोः परत्वात्सत्वं प्राप्नोति ॥ किं च स्याद्यद्यन्त्ययोः सत्वं स्यात् ?॥ इह 'हे स' इति ; 'एङ्ह्रस्वा'दिति संबुद्धिलोपो न स्यात् । इह च 'या' 'सा' ; 'अत' इति डाप्न स्यात् । तस्मादनन्त्ययोरिति वक्तव्यम्॥ न वक्तव्यम् ॥ एवं वक्ष्यामि–'तदोः सः सौ' । ततो'ऽदसः' । अदसश्च दकारस्य सो भवतीति ॥ इदमिदानीं किमर्थम् ? ॥ नियमार्थम्–'अदस एव दकारस्य नान्यस्य दकारस्ये'ति ॥ यदि नियमः क्रियते–द्वीयतेरप्रत्यये 'द्व' इति प्राप्नोति 'स्व' इति चेष्यते ॥*॥ यथालक्षणमप्रयुक्ते ॥*॥ [तदोः स सौ] ।**

प्र.]ष्येते । **एवमपीति**–सिद्धान्तवादी । 'अथ वा सत्वमपी'ति चोदकस्य ग्रन्थः। स च पूर्वविप्रतिषेधं मन्यते । **कथं पुनरिति**—चोदकमाचार्यो बुद्धिपरीक्षार्थं पर्यनुयुङ्क्ते । **भवेदिति**–चोदकः । **एवमपी**त्याचार्यः । **'अथ वा कथं पुन'**रित्यस्यायमर्थः–अनन्त्यस्यैव कथं सत्वं लभ्यते यावता अन्त्यस्यापि परत्वात्प्राप्नोति ?। चोदकस्त्वगृहीताभिप्राय आह–**भवेदिति** । आचार्यः स्वाभिप्रायमाह–**एवमपीति** । **किं च स्यादिति** । अन्त्यस्यापि दस्य सत्वे हल्ङ्यादिलोपेन सिध्यतीति मत्वा प्रश्नः । **लोपो न स्यादिति** । सत्वे सति ह्रस्वान्तत्वाऽभावात् । ननु त्यदाद्यत्वेऽपि कृते सन्निपातपरिभाषया संबुद्धिलोपाऽप्रसङ्गः । अनित्यत्वादस्याः परिभाषाया नाऽयं दोषः । **इह चेति** । 'न यासयो'रिति लिङ्ग आश्रीयमाणेऽनेकोऽर्थः कल्पनीयः स्यात् । **ततोऽदस इति** । तत्र 'तदोः सः सा'विति वर्तते । तकारोऽसंभवात्त्यज्यते । **द्वीयतेरिति** । द्वाविच्छतीति द्वीयति । ततः क्विप् । अकारयकाराऽपृक्तलोपाः । ततः सावीकारस्य त्यदाद्यत्वे सति 'स' इति भवति । तदभावे तु 'द्व' इति प्राप्नोति । **यथालक्षणमिति** । उपसर्जनत्वान्नावश्यं त्यदादिकार्येण भाव्यमिति द्वीरित्येव भवति । अथ वा प्रयुक्तानामन्वाख्यानारम्भाद्धिशब्दस्य च क्यजन्तस्य क्विपि प्रयोगाभावान्न केनचिल्लक्षणेन प्रवर्तितव्यम् । [ **तदोः ससौ** ]॥

उ.]एवेति विशेषः । तृतीये वक्ष्यमाणमाशयं हृदि निधाय सिद्धान्ती पर्यनुयुङ्क्ते इति द्वितीयाद्विशेषः । **अनन्त्यस्यापि** । अपिना–अन्त्यस्यापि । **सन्निपातेति** । प्रत्ययलक्षणेन तु न सन्निपातः, तस्याऽशास्त्रीयत्वादिति भावः । **अनेकोऽर्थ इति** । अत्र विषये सत्वं बाधित्वाऽत्वं सन्निपातपरिभाषाऽनित्यत्वं चेत्यर्थः । **उपसर्जनत्वादिति** । 'स्व इतिचेष्यत' इत्युक्तिः पूर्वपक्ष्येकदेशिन इति न तद्बलेनोपसर्जनत्वेऽप्यत्वादिप्रवृत्तिरिति भ्रमः कार्यः । सर्वादिसूत्र–त्यदादीनाम इति सूत्रस्थभाष्यविरोधादिति भावः । **अथवेति** । अप्रयुक्ते प्रवृत्त्यभावो हि लक्षणस्वभाव इति भावः । [ **तदोः सः** ] ।

१ 'सत्यन्ते' । २ 'विशेषयामः' पा० । ३ 'यद्यन्त्ययोः' पा० । ४ 'वक्ष्यति' पा० । ५ 'अप्रत्यये' पा० । ६ 'नात्र त्यदादि' पा० ।

## अदस औ सुलोपश्च ॥७।२।१०७ ॥

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ? ॥*॥ **अदस एव सोर्भवेदौत्वं, किमर्थं सुलोपो विधीयते ?**॥*॥ ह्रस्वाल्लप्स्येत संबुद्धिः॥*॥ **इह 'हे असा'विति 'एङ्ह्रस्वात्संबुद्धे'रिति लोपः प्रसज्येत** ॥ * ॥ न हलः ॥ * ॥ **हलो लोपः संबुद्धिलोपः ॥ तद्धल्ग्रहणं कर्तव्यम्** ॥ **न कर्तव्यम् ?** ॥ * ॥ प्रकृतं हि तत् ॥ * ॥ **प्रकृतं हल्ग्रहणम् ॥ क्व प्रकृतम् ?** ॥ **'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं ह'लिति ॥ तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥ 'ह्रस्वा'दित्येषा पञ्चमी 'ह'लिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मा-दित्युत्तरस्ये'ति** ॥*॥ आप एत्वं भवेत्तस्मिन् ॥*॥ **इह हे असौ ब्राह्मणि ! । 'आङि चापः—संबुद्धौ चे'त्येत्वं प्रसज्येत** ॥*॥ न झलीत्यनुवर्त्तनात् ॥*॥ **[नैष दोषः] । झलीति तत्रानुवर्त्तते ॥ क्व प्रकृतम् ?॥'सुपि च बहुवचने झल्ये'-दिति ।** ॥*॥ प्रत्ययस्थाच्च कादित्त्वम् ॥*॥ **इह च असकौ ब्राह्मणीति प्रत्य-यस्थात्कात्पूर्वस्येतीत्त्वं प्रसज्येत ॥ नैष दोषः । प्रश्लिष्टनिर्देशोऽयम्— 'आ–आप्–आ'बिति ॥ इहापि तर्हि न प्राप्नोति–कारिके हारिके इति ॥**

---

**प्र.] अदसः । अदस इति ।** अदसः परस्य सोरेवौत्वं विधीयताम् । तत्र त्यदाद्यत्वे 'वृद्धिरेची'ति वृद्धौ चासाविति सिध्यति। **ह्रस्वादिति।** यदि त्यदाद्यत्वं क्रियते तदा ह्रस्वान्तत्वात्संबुद्धिलोपप्रसङ्गः । तस्मादौत्वसुलोपौ विधीयेते। **न हल इति ।** नाऽयं दोषो यस्मादसौ हलो लोपो विधीयते । तेनोकारस्य न भविष्यति । **हे असाविति ।** अत्वे टापि च सति वार्णादाङ्गं बलीय इति 'वृद्धिरेची'ति वृद्धिमेकादेशं बाधित्वा 'आङि चाप' इत्येवं प्राप्नोति । **प्रश्लिष्टनिर्देशोयमिति ।** आकाररूपो यः श्रूयते आप्, तत्रेत्वं भवति । इह तु वृद्धौ कृतायामौकाररूपम् । **कारिकेति ।** 'औङआप' इति शीभावे आद्गुणे च कृते एकारः श्रूयत इति इत्वन्न प्राप्नोति । संबुद्धौ वा 'कारिके' इति रूपम् । ननु चाऽत्राऽन्तरङ्गत्वात्प्राक् सुबुत्पत्तेरित्वं भविष्यति, 'असका'वित्यत्र तु प्राक् सुबुत्पत्तेष्टाब्नास्ति । एवं तर्हि टापि कृत एकादेशात् पूर्वं वार्णादाङ्गं बलीय इति इत्वं प्राप्नोतीत्याकाररूप एवाबिति किं प्रश्लिष्टनिर्देशेन ?। तस्मात्सामर्थ्याद्यथा'वार्णादाङ्ग'मिति बाधित्वा एकादेशो भवत्येवं 'कारिके'

---

**उ.] अदस औ । सोरेवेति ।** 'अदस औ' इत्येव सूत्रं कार्यं, पूर्वतोऽनुवृत्तस्य सावित्यस्याऽदस इति पञ्चम्या षष्ठी कल्प्येति भावः । **आङि चाप इत्येत्वमिति ।** तत्रानुवर्त्तमाने 'संबुद्धौ चे'त्येवमित्यर्थः । **इति रूपमिति ।** एवञ्च प्रश्लेषो वक्तुमशक्य इति भावः। **नन्विति ।** एवञ्च 'कारिके' इत्यादावित्वाऽप्राप्तिदोषो न प्रश्लेषेऽपीति भावः । **तस्मात्सामर्थ्यादिति ।** प्रश्लिष्टनिर्देशसामर्थ्यादित्यर्थः । 'अन्तरङ्गत्वात्पूर्व'मिति पाठः । अन्तरङ्गादपीत्वात्पूर्वमित्यर्थः । तस्माद्दोषवान् प्रश्लेष इति

---

१ श्लोकवार्त्तिकमिम् । २ इदं लुप्तमद्यत्वे । ३ 'हे हारिके' पा० ।

॥*॥ शीभावश्च प्रसज्यते[1] ॥ * ॥ इह च शीभावः[2] प्राप्नोति—असौ ब्राह्मणी ॥ 'आप उत्तरस्यौङः शी भवती'ति शीभावः प्राप्नोति । तस्मात्सोर्लोपो वक्तव्यः ॥*॥ सौत्वप्रतिषेधः[3] साकच्काद्वा सादुत्वं च ॥*॥ सावौत्वप्रतिषेधः साकच्काद्वा वक्तव्यः। साच्च परस्य उत्वं वक्तव्यम् । असकौ असुकः। ॥*॥ उत्तरपदभूतानामादेश उपदेशिवद्वचनम्[अनादिष्टार्थम् ]॥*॥ उत्तरपदभूतानांत्यदादीनामादेश उपदेशिवद्भावो वक्तव्यः। परमाहं परमायं परमानेन॥ किं प्रयोजनम् ? ॥ 'अनादिष्टार्थम्' । अकृते एकादेशे आदेशा यथा स्युरिति । किं पुनः कारणम्—एकादेशस्तावद्भवति न पुनरादेशाः?, न परत्वादादेशैर्भवितव्यम् ? ॥*॥ बहिरङ्गलक्षणत्वात् ॥*॥ बहिरङ्गा आदेशाः, अन्तरङ्ग एकादेशः—'असिद्धं बहिरङ्गमन्तरङ्गे' ॥ स तर्ह्युपदेशिवद्भावो वक्तव्यः ? ॥ न वक्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति—'पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश' इति,—यदयं 'नेन्द्रस्य परस्ये'ति प्रतिषेधं शास्ति ॥ कथं कृत्वा ज्ञापकम् ?॥ इन्द्रे द्वावचौ, तत्रैको 'यस्ये'ति लोपेनापह्रियतेऽपर एकादेशेन, अनच्क इन्द्रः संवृत्तस्तत्र[4] को वृद्धेः प्रसङ्गः[5] ? । पश्यति त्वाचार्यः—'पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश' इति,—ततो 'नेन्द्रस्य परस्ये'ति प्रतिषेधं शास्ति॥

॥*॥ अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ? ॥[6]
हस्वाल्लुप्येत संबुद्धिर्न हलः प्रकृतं हि तत् ॥
आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।
प्रत्ययस्थाच्च कादित्त्वं शीभावश्च प्रसज्यते ॥*॥

---

प्र.]इत्यत्रापि अन्तरङ्गत्वात्पूर्वं विभक्तितन्निमित्तकार्यप्रसङ्गः। **शीभावश्चेति**। 'औङ' इति वचनादौकारस्य यदा ङिदादेशानुमानं वर्णमात्रनिर्देशो वा, ङकारस्तूच्चारणार्थस्तदा शीभावप्रसङ्गः । यदा तु पूर्वसूत्रेण निर्देशस्तदा प्रथमाद्वितीयाद्विवचनयोरेव शीभावेन भाव्यमिति दोषाऽभावः। इत्वमपि प्रश्लेषनिर्देशेन शक्यं परिहर्तुम् । नच 'कारिके' इत्यत्र दोषः, समानकालप्राप्तिकमेव ह्येकादेशमित्वं प्रतीक्षते न तु भिन्नकालप्राप्तिकम् । **साकच्कादिति**। साकच्कात्सुः सुर्विहितः तस्मिन्नित्यर्थः। प्रतिषेधसन्नियोगेन सात्परस्याऽकारस्योत्वं भवति । **बहिरङ्गा आदेशा इति** । समासाद्या विभक्तिरुत्पद्यते तदपेक्षत्वात् । ततोऽन्तरङ्गत्वादेकादेशे कृते तस्यादिवद्भावादादेशेषु क्रियमाणेषु परमहं परमयमित्यादिरनिष्टप्रसङ्गः । **[ अदस औ सुलोपश्च ]** ॥

---

उ.]भावः । किञ्चैवं प्राप्तजीविक इत्यसिद्ध्याऽपि तत्र प्रश्लेषो वक्तुमशक्यः । भाष्ये—**'इह च शीभाव'** इति। चस्त्वर्थे। **तदा शीभावेति**। औत्वं तु पुंसि चरितार्थम् । 'इत्वमपी'त्यादिग्रन्थस्तु चिन्त्य, उक्तयुक्तेः । **[ अदस औ ]** ॥

---

१ 'प्रसज्येत' पा० । २ ' भावश्च' पा० । ३ 'अदस औत्व' पा० । ४ 'संपन्नः'। ५ 'वृद्धेः कः प्रसङ्गः' पा० । ६ श्लोकवार्त्तिकमिदम् ।

## मृजेर्वृद्धिः ॥ ७।२।११४ ॥

॥ * ॥ मृजेर्वृद्धिविधौ क्विप्रतिषेधः ॥ * ॥ **मृजेर्वृद्धिविधौ क्वयन्तस्य प्रतिषेधो वक्तव्यः । कंशपरिमृड्भ्यां कंशपरिमृड्भिः ।** ॥*॥ धातोः स्वरूपग्रहणे वा तत्प्रत्ययविज्ञानात्सिद्धम् ॥*॥ **अथ वा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धम् । 'धातुप्रत्यये कार्यं भवती'त्येषा परिभाषा कर्तव्या ॥**

**कान्येतस्याः परिभाषायाः प्रयोजनानि ?** ॥*॥ प्रयोजनं सृजिदृशिमस्जिनशिहन्तिगिरत्यर्थम् ॥*॥ सृजि–**रज्जुसृड्भ्याम् रज्जुसृड्भिः । सृजि** ॥ दृशि-**देवदृग्भ्याम् देवदृग्भिः । दृशि** ॥ मस्जि—**उदकमग्भ्याम् । उदकमग्भिः । मस्जि** ॥ नशि–**प्रणड्भ्यां प्रणड्भिः । नशि** ॥ हन्ति–**वार्त्रघ्नः । भ्रौणघ्नः । हन्ति** ॥ **गिरति—देवगिरौ देवगिरः । [गिरति]** ॥ **यदि स्वरूपग्रहण इत्युच्यते–प्रसृग्भ्यां प्रसृग्भिः । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्या'मित्यम् प्राप्नोति । एवं तर्हीयं परिभाषा कर्तव्या–'धातोः कार्यमुच्यमानं तत्प्रत्यये भवती'ति ॥ सा तर्ह्येषा परिभाषा कर्तव्या ? ॥ न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येषा परिभाषा यदयं भ्रौणहत्ये तत्वं शास्ति** ॥ [ मृजेर्वृद्धिः ] ॥

## अचो ञ्णिति ॥ ७।२।११५ ॥

**अज्ग्रहणं किमर्थम् ?** ॥*॥ वृद्धावज्ग्रहणं गोऽर्थम् ॥*॥ **वृद्धावज्ग्रहणं**

---

प्र.] **मृजेः । कंसपरिमृड्भ्यामिति ।** विभक्तिमाश्रित्य वृद्धिः प्राप्नोति । 'क्ङिति चे'ति प्रतिषेधः क्ङिन्निमित्ताया एव वृद्धेरित्यत्र न प्रवर्तते । **रज्जुसृड्भ्यामिति ।** प्रत्ययो झलादिरकिद्भवतीत्यमागमप्रसङ्गः । **प्रणड्भ्यामिति ।** 'नशेर्वे'ति कुत्वमप्यत्र न भवतीति केचिदाहुस्तदयुक्तम्, पदत्वनिबन्धनत्वादस्य प्रत्ययानपेक्षणात् । 'मस्जिनशोर्झली'ति नुमागमस्तु प्रत्ययाऽपेक्षत्वादधातुप्रत्यये न भवति । **वार्त्रघ्न इति ।** 'हनस्तोऽचिण्णलो'रिति तत्वं न भवति । 'कुमति चे'ति णत्वं 'कुव्यवाये हादेशेषु प्रतिषेध' इति न भवति । **देवगिराविति ।** 'अचि विभाषे'ति लत्वं न भवति । **अम्प्राप्नोतीति ।** तद्विधौ धातोः स्वरूपेणानुपादानात् । [ **मृजेर्वृद्धिः**] ।

**अचो ञ्णिति । अज्ग्रहणमिति ।** अन्तरेणाऽज्ग्रहणमिक्परिभाषोपस्थानादि-

---

उ.] **मृजेर्वृद्धिः ।** नन्वत्र प्रत्ययलक्षणेन क्वित्परत्वान्निषेधः स्यादत आह—**विभक्तिमाश्रित्येति । प्रत्ययानपेक्षणादिति ।** इयं च परिभाषा धर्मिग्राहकमानेन सप्तम्यन्तपदेन यत्र प्रत्ययस्य निमित्तत्वं तत्राऽनियमप्रसक्तौ नियमार्थैवेति भावः। अतएवाऽप्रशानिति निषेधः सार्थक इति दिक् । अतएव भाष्ये क्वचित्कुत्वसहितः पाठो दृश्यते । **प्रत्ययापेक्षत्वादिति ।** आङ्गत्वादिति भावः । [ **मृजेर्वृद्धिः** ] ॥

**अचो ।** ननु स्थानिनिर्देशार्थमकारादिसङ्ग्रहार्थं चाऽज्ग्रहणं स्यादत आह—

---

१ इदं प्रायो लुप्तम् ।२ 'कंस'।३ 'प्रयोजन' मिति क्वचिन्न । ४ 'प्रनड्भ्यां' । ५ 'गिरि'। ६ 'प्रसृड्भ्यां प्रसृड्भिः' पा०। 'प्रसृभ्यां प्रसृभिः' पा० । ७ 'इतिः' क्वचिन्न ।

क्रियते [ किं प्रयोजनं ? ॥ 'गोऽर्थम्' ।] गोतो वृद्धिर्यथा स्यात्–'गौ'रिति ॥

नैतदस्ति प्रयोजनं, णित्करणसामर्थ्यादेवात्र वृद्धिर्भविष्यति ॥

[ अस्त्यन्यण्णित्करणस्य प्रयोजनम् ॥ किम् ? ॥ गावौ गाव इत्यत्राऽत उपधाया इति वृद्धिर्यथा स्यात् ॥] ॥

अथ योगविभागः किमर्थो न 'ञ्णित्यत उपधाया' इत्येवोच्येत ॥ का रूपसिद्धिः–चायको लावकः कारकः हारकः ?॥ गुणे कृतेऽयवो रपरत्वे चाऽत उपधाया इत्येव सिद्धम् ॥ [ न सिध्यति] । ॥*॥ योगविभागः सखिव्यञ्जनाद्यर्थः॥*॥योगविभागः क्रियते ॥ [किमर्थः ?॥ 'सखिव्यञ्जनार्थः' ।] सख्यर्थो व्यञ्जनाद्यर्थश्च । सख्यर्थस्तावत्–सखायौ सखायः । व्यञ्जनाद्यर्थः–जैत्रं यौत्रं च्यौत्रम् ॥

योगविभागे चेदानीं सखिव्यञ्जनाद्यर्थे क्रियमाणेऽज्ग्रहणमपि कर्तव्यं भवति ॥ किं प्रयोजनम् ? ॥ 'गोर्थम्'॥ ननु चोक्तं 'णित्करणसामर्थ्यादेवात्र वृद्धिर्भविष्यति' ॥ अस्त्यन्यण्णित्करणे प्रयोजनम् ॥ किं ? ॥ गावौ गावः । अवादेशे कृतेऽत उपधाया इति वृद्धिर्यथा स्यात् ॥ यत्तु सौ णित्करणं तदनवकाशं, तस्याऽनवकाशत्वादेव वृद्धिर्भविष्यति ॥ यथैव खल्वपि णित्क-

---

प्र.]गन्तस्य वृद्धिः सिध्यति । अकारस्य तु चिकीर्षक इत्यादावतो लोप इति लोपेन भाव्यम् । आकारस्य तु विशेषो नास्ति । सन्ध्यक्षराणामात्वेन भाव्यमिति प्रश्नः । **गोऽर्थमिति** । असत्यज्ग्रहणे इक्परिभाषोपस्थानाद्गौरित्यत्र वृद्धिर्न स्यात् ।

**अथ योगविभाग इति**। यद्यपि 'गौ'रित्युक्तेनोदाहरणेन योगविभागस्य प्रयोजनं ज्ञाप्यते तथाप्यनेकप्रयोजनोपन्यासाय प्रश्नप्रतिवचने । **सखायाविति** । 'सखि-औ' इति स्थिते वृद्धेरप्रसङ्गः, णित्त्वं तु 'सखाय' इत्यत्र जसि गुणेऽयादेशे च कृतेऽत उपधाया वृद्ध्यर्थं स्यात् । 'सखाय' इत्येतत्तु प्रसङ्गेनोदाहृतम् । णित्वावकाशदर्शनार्थं वा । **व्यञ्जनाद्यर्थ इति** । व्यञ्जनादिर्यः प्रत्ययस्तत्र वृद्ध्यर्थः । **जैत्रमिति** । जियुभ्यामौणादिकष्ट्रण् । **च्यौत्रमिति** । जनिदाच्युस्विति त्रण्[4] । **तत्वमिति** । 'हनस्तोऽचिण्णलो'रिति हन्तेरुच्यमानं गोरपि स्यात् । नैष दोषः प्रापदित्यज्ग्रहणं क्रियते ॥

---

उ.] **अन्तरेणेति**। **लोपेनेति** । 'ण्यल्लोपा'विति वचनादिति भावः। भाष्ये–**गोर्थमिति**। प्रापयतीति 'टे'रिति सूत्रस्थभाष्यप्रामाण्यादत्रत्यं भाष्यं दोषोपलक्षणं बोध्यमित्याहुः । **असतीति** । अज्ग्रहणे तु निर्दिष्टस्थानिकत्वादिक्परिभाषानुपस्थितिरिति न दोषः । ननु णित्त्वसामर्थ्यादनुपधाया अपि वृद्धिः स्यादत आह—**णित्वं त्विति** । **हनस्त इति** । अङ्गवैकल्येऽपि शास्त्रप्रवृत्तौ तत्वमपि स्यादिति तदभावायाऽज्ग्रहणं । ननु 'हनस्त' इत्यत्रा'ऽचिण्णलो'रिति पर्युदासेन, 'धातोः स्वरूपग्रहणे' इति परिभाषया च धातुविहितप्रत्यये एव तत्वमिति अङ्गद्वयविकलं तत्वं, वृद्धि-

---

१ अयं पाठः क्वचिन्न । २ इदं क्वचिन्न । ३ 'यत्तत्सोर्णित्करणं' । ४ 'त्नण्' ।

रणसामर्थ्यादनिकोऽपि वृद्धिः प्राप्यते एवं तत्वमपि प्राप्नोति । तत्वमपि हि 'ञ्णिती'त्युच्यते । तस्मादज्ग्रहणं कर्तव्यम् ॥ [ अचो ञ्णिति ] ॥

## तद्धितेष्वचामादेः ॥ ७।२।११७ ॥

अज्ग्रहणं कर्तव्यम् ॥ ननु च क्रियत एव ॥ द्वितीयं कर्तव्यं,–यथाऽचामादिग्रहणमज्विशेषणं विज्ञायेत–'अचामादेरच'इति ॥अथाऽक्रियमाणेऽज्ग्रहणे कस्याऽचामादिग्रहणं विशेषणं स्यात् ?॥ 'इग्विशेषण'मित्याह,—'अचामादेरिक' इति ॥ तत्र को दोषः ? ॥ इहैव स्यात्–ऐतिकायनः औपगवः । इह न स्यात्—गार्ग्यो वात्स्य इति ॥ तत्तर्ह्यज्ग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'अचो ञ्णिती'ति ॥ यदि तदनुवर्तते'ऽत उपधाया अचश्चे'ति अज्मात्रस्य उपधाया वृद्धिः प्रसज्येत–भेदकःछेदकइति ॥ अकारेण तपरेणाऽचं विशेषयिष्यामः–'अचोऽत'इति ॥ इहेदानीमच इत्यनुवर्तते 'अत'इति निवृत्तम् । अथवा–॥*॥ मण्डूकगतयोऽधिकाराः ॥*॥ तद्यथा

प्र.] तद्धितेष्व । अज्ग्रहणं कर्तव्यमिति । 'अचा'मित्यनेन निर्द्धारणषष्ठ्यन्तेन सामानाधिकरण्येनादेर्विशेषयितुमशक्यत्वादिक्परिभाषोपस्थानादिक एवाऽचो वृद्धिप्रसङ्गः। अथाक्रियमाण इति । निर्धारणं तुल्यजातीयस्य भवति, यथा 'कृष्णा गवां संपन्नक्षीरतमे'त्युक्ते गौरेव प्रतीयते, तथा चाऽचामादिरजेव प्रत्येष्यत इति भावः। इग्विशेषणमिति । तुल्यजातीयनिर्द्धारणेऽपि 'इक' इत्यस्योपस्थानं न निवार्यते । अज्ग्रहणे तु क्रियमाणे निर्दिष्टस्थानिकत्वादिक्परिभाषाऽनुपस्थानं, यथा'ऽचो ञ्णिती'त्यत्र।

अज्मात्रस्येति । नन्वद्ग्रहणसामर्थ्यादज्मात्रस्य न भविष्यति । तत्सामर्थ्यात्तर्हि निवृत्तिरेवाऽज्ग्रहणस्य स्यान्नियमार्थं वाऽद्ग्रहणं स्यात्,–'अकारस्यैव ह्रस्वस्य नान्यस्ये'ति। दीर्घस्य त्वीहक इत्यादावुपधायाः स्यादेव। अकारेणेति। विशेषणस्याऽजन्तर-

उ.] स्त्वेकाङ्गविकलेति णित्त्वसामर्थ्याद्वृद्धिरेव भविष्यति न तत्वमिति चेन्न, 'यत्तु सोर्णित्करण'मित्यादिग्रन्थस्य पूर्वपक्ष्येकदेशि-सिद्धान्त्येकदेशिनोरुक्तिप्रत्युक्तिपरत्वेनाऽदोषात् । सोर्णित्वस्य विशेषविधाने हि मानं न पश्यामः । ध्वनितं चेदं सर्वं 'यद्यपि गौरित्युक्तेनोदाहरणेने'त्यादिकैयटग्रन्थेनेति दिक् । [अचो ञ्णिति] ॥

तद्धितेष्व । अचां मध्ये आदेरिको वृद्धिरित्यर्थः स्यादित्याह—अचामिति । बहुवचनान्निर्धारणषष्ठीत्वनिर्णयः । सामानाधिकरण्येनेति । अज्रूपस्यादेरितीत्यर्थः। इक इति । निर्धारणस्य तुल्यजातीयत्वादेवाऽच इत्यस्य लाभेऽपि तदुपस्थानं न वार्यते । 'इक' इत्यनेनाऽचो विशेषणसंभवादिति भावः । नन्वेवमज्ग्रहणेऽपि इक्परिभाषोपस्थानं स्यादत आह—अज्ग्रहणे त्विति । विशेषणस्येति । ननु नियमार्थत्वं, 'विधिनियमसंभव' इति न्यायादित्यर्थः। नन्वर्थस्यानेकत्वाद्वाक्यभेद एव

१ 'कर्तव्य'मिति क्वचिन्न । २ 'एवं' पा० । ३ 'भेदः च्छेदः' पा० । भेदक इति क्वचिन्न । ४ भाष्यमिदमित्यन्ये ।

मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥ अथ वैकयोगः करिष्यते 'अचो ञ्णित्यत उपधायाः' [इति][1]। ततः-'तद्धितेष्वचामादे'रिति। नचैकयोगेऽनुवृत्तिर्भवति ॥*॥ तद्धितेष्वचामादिवृद्धावन्त्योपधलक्षणप्रतिषेधः[2] ॥*॥ तद्धितेष्वचामादिवृद्धावन्त्योपधलक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः। क्रौष्ट्रः। जागत इति ॥ ननु चाऽचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते ॥ कथमन्यस्योच्यमानाऽन्यस्य बाधिका स्यात्? ॥ असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात्॥*॥लोकविज्ञानात्सिद्धम्॥*॥ सत्यपि संभवे बाधनं भवति। तद्यथा-'दधि ब्राह्मणेभ्यो[3] दीयतां तक्रं कौण्डिन्याये'ति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति, एवमिहापि सत्यपि संभवेऽचामादिवृद्धिरन्त्योपधलक्षणां[4] वृद्धिं बाधिष्यते ॥ विषम उपन्यासः। नाप्राप्ते दधिदाने तक्रदानमारभ्यते तत्प्राप्ते आरभ्यमाणं बाधकं भविष्यति, इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धावचामादिवृद्धिराभ्यते-सुश्रुत्सौश्रुत इति ॥*॥ पुष्करसद्ग्रहणाद्वा ॥*॥ अथ वा यदयमनुशति-

---

प्र.] निवृत्तिः प्रयोजनम्। **अथ वैकयोग इति**। एको भवतिरध्याह्रियते, तेन तुल्यकालत्वाद्विधानस्य स्वकार्ये व्यापारादन्यत्रोपस्थानाऽभावः। **क्रौष्ट्र इति**। क्रोष्टृशब्दात्तृजन्तात्तस्येदमित्यण्। **जागत इति**। जगच्छब्दादण्। **ननु चाचामादिवृद्धिरिति**। अङ्गं कार्यि मन्यते, तत्र तक्रकौण्डिन्यन्यायावतारः। इतरस्तु स्थानिभेदं मत्वाह-**कथमन्यस्येति**। 'आमलकीज' इत्यदावन्यस्याऽपि स्वरो विधीयमानोऽन्यस्वरं बाधत एवेत्याशङ्क्याह-**असति खल्वपीति**। **लोकविज्ञानादिति**। अङ्गं कार्यि, तदेवावयवद्वारेण संस्क्रियते। ततश्चैकस्य कार्यद्वयं न प्रवर्तते। कौण्डिन्य इव दधि तक्रं च। **नाप्राप्त इति**। सामान्यविशेषभावो बाधहेतुः स चेह नास्ति। **पुष्करसद्ग्रहणाद्वेति**। वाशब्दस्तर्ह्यर्थे। पूर्वस्य हेतोरनवस्थितत्वात्। ननु च ठगर्थः-

---

उ.] युक्तोऽत आह-**एको भवतिरिति**। प्रतिपत्तिवाक्यमेकं, प्रक्रियावाक्यं तु भिद्यत एवेत्यर्थः। एकवाक्यत्वे कथमनुवृत्त्यभावोऽत आह-**तेनेति**। यद्वाऽत इत्येतत्स्वकार्ये व्याप्रियते, तदैवाऽन्यशेषत्वमयुक्तमित्यर्थः। **क्रौष्ट्र इतीति**। 'क्रोष्टृ' इति तृजन्तमेव ऋषिनाम। 'वा नामधेयस्ये'ति पक्षे वृद्धत्वात्क्रोष्ट्रीया इत्यपीति बोध्यम्। आदिवृद्धेरवकाशमजानञ्शङ्कते—भाष्ये-**ननु चाचामिति**। ननु कार्यिभेदात्कथं बाध्यबाधक भावोऽत आह—**अङ्गमिति**। कार्यिभेदेऽपि नुम्नुटोरिव बाधकत्वसंभवाच्चिन्त्यमिदम्। **स्थानिभेदमिति**। अङ्गावयवानां कार्यित्वादिति भावः। **अन्यस्यापि स्वर इति**। 'अन्त्यात्पूर्वं बह्वच' इति 'दीर्घकाशतुषभ्राष्ट्रवटं जे' इति पूर्वपदाद्युदात्तत्वं बाधत इत्यर्थः।शेषनिघातशास्त्रबलात्तत्राऽसंभवोऽस्तीत्युत्तराशयः। दृष्टान्ते एकस्योद्देश्यत्वं, दार्ष्टान्तिके तु भिन्नस्येति वैषम्यं परिहरति-**अङ्गं कार्यीति**। **पूर्वस्य हेतोरिति**।

---

१ इतिः क्वचिन्न। २ 'उपधा' पा० ३ 'ब्राह्मणेभ्यो दधि' पा० ४ 'पध' पा०।

**कादिषु पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्यो'ऽचामादिवृद्धावन्त्योपधालक्षणा वृद्धिर्न भवती'ति**॥*॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः॥*॥७।२।२।

## देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ ७।३।१ ॥

॥*॥ देविकादिषु तदादिग्रहणम् ॥*॥ **देविकादिषु तदादिग्रणं कर्तव्यम्। [ देवकाद्यादीनामिति वक्तव्यम्[2] । ] इहापि यथा स्यात्—दाविकाकूलाः**

---

**प्र.]** पुष्करसदः पाठः स्यात्,—पुष्करसदाचरति पौष्करसादिक इति । ञ्णित्यत उपधाया इति वृद्धेर्विधानाट्ठक्यप्रसङ्गात्। एवं तर्हि ठगतोऽनभिधानान्न भवति । यद्वा प्रतिपदविहित इत्येव पुष्करसद उभयपदवृद्धिर्नाऽन्यत्र । केचिदाहुः–लोकविज्ञानात्सिद्धमिति वार्तिककारस्य विप्रतिषेधो विवक्षितः यथा झलचोर्नुम्विधावुगित्प्रतिषेधात्सिद्धमिति । अन्त्योपधालक्षणाया वृद्धेरवकाशः—'गौः' 'पाचक'-इति । अस्यावकाशः–'सौश्रुत' इति । 'क्रौष्ट्रो' 'जागत' इत्यत्रोभयप्रसङ्गे परत्वादादिवृद्धिर्भवति । सकृद्गतं[3]परिभाषाश्रीयते न तु पुनःप्रसङ्गविज्ञानम् । एवं च 'पुष्करसद्ग्रहणाद्वे'ति विकल्पार्थ एव वाशब्दः। बाधकत्वसामान्याभिप्रायेण च शास्त्रविज्ञानमेव लोकविज्ञानमुक्तम् । अथ यत्रादिवृद्धिः प्रतिषिध्यते तत्राऽन्त्योपधलक्षणा कस्मान्न भवति–'व्यसोर्भावो वैयसव'मिति । 'इगन्ताच्चे'त्यण् । व्यापदि भवं वैयापदमिति ?। अत्राप्यैचौ परत्वाद्बाधकाविति सर्वेष्टसिद्धिः ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमस्य द्वितीये द्वितीयमाह्निकम् ॥ पादश्च द्वितीयः ॥७।२।२॥

**देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्** । **देविकादिष्विति** । विशेषण-

---

**उ.]**'लोकविज्ञाना'दित्यस्य।परन्तु नेदं वार्तिकं,किन्तु कस्यचिदेकदेशिनोऽवकाशमपश्यत उक्तिः।'पुष्करसद्ग्रहणाद्वे'ति वार्तिकं,'प्रतिषेधो वक्तव्य' इति वचनापेक्षो विकल्पार्थो वाशब्दः। अतएव भाष्येऽथवेत्येव व्याचष्टे इत्याहुः । **यद्वा प्रतिपदेति** । बाह्वादिषु पुष्करसच्छब्दः पठ्यते, तस्यैवानुशातिकादिषु ग्रहणं न्याय्यं, झटिति प्रतीतेरिति भावः। इदं च ज्ञापकमचामादिवृद्धिविषयेऽन्त्योपधालक्षणा वृद्धिर्नेति । तेन वैयसवमित्यादौ न दोष इति बोध्यम्। **यथा झलचोरिति** । 'श्रेयांसी'त्यादौ झल्लक्षणे नुमि कृते उगिल्लक्षणस्य प्राप्तस्य प्रतिषेधो वक्तव्य इति चोदिते विप्रतिषेधात्सिद्धमिति तत्रोक्तं, तथेहापीत्यर्थः । नन्वेवं 'लोकविज्ञानात्सिद्ध'मित्यसमञ्जसमत आह—**बाधकत्वसामान्येति** । यथा तक्रदानं बाधकम्, एवं परशास्त्रमपीति सादृश्यादेवमुक्तमित्यर्थः। इदं न युक्तम्,एकस्य द्विकार्ययोगाऽभावादसंभवाऽभावाच्च । तावेव हि विप्रतिषेधसूत्रप्रवृत्तौ बीजमिति 'इको गुणे'ति सूत्रे भाष्ये स्पष्टम् । अङ्गं कार्यीति तु चिन्त्यमेव । 'अत उपधाया' 'अचामादे'रित्युभयत्राप्यङ्गस्येत्यस्यावयवषष्ठीत्वात् । **कस्मान्नेति** । बाधकाऽभावे बाध्यप्रवृत्तेरुचितत्वादिति भावः । **अत्रापीति** ।

---

१ अयं पाठः क्वाचित्कः । २ अयं पाठः क्वचिन्न । ३ 'सकृद्गति' इति पाठो भवेत्।

**शालयः शांशपास्थला देवाः ॥ किं पुनः कारणं न सिध्यति** ॥*॥ अन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वा ॥*॥ **अन्यत्र हि तस्य वा ग्रहणं भवति तदन्तस्य वा, न चेदं तत्, नापि तदन्तम्** ॥*॥ आद्यज्विशेषणत्वात्सिद्धम्॥*॥**आद्यज्विशेषणं देविकादयः। नैवं विज्ञायते–'देविकादीनामङ्गानामचामादेराकारो[1] भवती'ति ॥ कथं तर्हि ? ॥ 'ञ्णित्यङ्गस्याऽचामादेरचे आकारो भवति स चेद्देविकादीनामाद्यज्भवती'ति ॥**

॥*॥ आन्तरतम्यनिवर्तकत्वाद्वा[2] ॥*॥ **अथ वा नाऽनेनाऽनन्तरतमा[3] वृद्धिर्निर्वर्त्यते ॥ किं तर्हि ? ॥ अन्तरतमाऽनेन निवर्त्यते । अतः[4] सिद्धाऽत्र वृद्धि-**

प्र.] विशेष्यभावे कामचाराद्यदाऽङ्गेन देविकादीनि विशेष्यन्ते तदा तेषामङ्गमन्ते न संभवतीति तदन्तविध्यभावादङ्गानि देविकादीन्याश्रीयन्ते । यदा तु देविकादिभिरङ्गं विशेष्यते तदा तदन्तविधिना देविकाद्यन्तमङ्गं गृह्यते न तु कथं चित्तदादिविधिसंभव इति तदादिग्रहणं कर्तव्यम् । तत्र केवलानां देविकादीनां तदादीनां चाऽऽकारो भवतीति वक्तव्यम् । अन्यथा केवलानां न स्यात्–दाविकमुदकं, शांशपश्चमस इति । न च व्यपदेशिवद्भावोऽस्ति, 'अप्रातिपदिकेने'ति प्रतिषेधात् । यदि तु प्रत्ययविधिविषय एवाऽयं निषेधस्तदा केवलानां व्यपदेशिवद्भावात्सिध्यति । **आद्यज्विशेषणमिति** । अङ्गस्य देविकादिभिः संबन्धाऽभावः । **अन्तरतमनिवर्तकत्वाद्वेति** । ञ्णिति कितीति वर्तते । तत्र 'स्थानेऽन्तरतम' इति वचनादैकारो वृद्धिसंज्ञः प्राप्त आदिति वचनेन निवर्त्यते, न त्वपूर्व आकारो विधीयते । अनेन हि 'स्थानेऽन्तरतम' इति नियमं बाधित्वा नियमान्तरं क्रियते–'देविकादीनामाकारो वृद्धि-

उ.] न केवलमादिवृद्धेः प्रतिषेध एव 'न य्वाभ्या'मित्यनेन, किन्तर्ह्यैचोर्विधानमपि। तौ च परत्वाद्बाधकौ । वास्तवसमाधिस्तूक्त एवेति इष्टसिद्धिः ॥ इति श्रीनागोजीभट्टकृते भाष्यप्रदीपोद्योते सप्तमस्य द्वितीये द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

**देविकाशिंशपादित्य** । **अङ्गानीति** । अङ्गरूपाणीत्यर्थः। **यदि तु प्रत्ययेति** । 'पूर्वादिनिः' 'सपूर्वाच्चे'ति ज्ञापकस्य तुल्यजातीयविषयत्वादिति भावः । तदा तदादिग्रहणमेव कर्तव्यं । ननु पूर्वोक्तपक्षद्वयातिरिक्तः कोऽयं प्रकारोऽत आह—**अङ्गस्येति** । विशेष्यत्वेन विशेषणत्वेन च संबन्धाऽभाव इत्यर्थः ।

संबन्धप्रकारो भाष्ये—**ञ्णित्यङ्गस्येति** । भाष्ये—**'आन्तरतम्यनिवर्तकत्वाद्वे'**ति प्रचुरः पाठः । तत्र स्वार्थे ष्यञित्याहुः । **नत्वपूर्व इति** । अपूर्वविध्यपेक्षया परिभाषात्वस्य लघुत्वादिति भावः । तदेव विशदयति—**अनेन हीति** । यत्र देविकादीनामचामादेर्वृद्धिप्रसङ्गस्तत्राऽऽकार एवेत्यर्थ इति भावः । ननु यद्यत्रैव पठ्यते तदा अङ्गस्य विशेषणत्वे दाविकाकूलेऽव्याप्तिः । विशेष्यत्वे सौदेविकेऽतिव्याप्तिः । आद्य-

१ 'मादेराकारो' पा० । २ 'अन्तरतम' पा० । ३ 'अनन्तरतमा' । 'निर्वर्त्यते' पा० । ४ 'अत'इति क्वचिन्न ।

स्तद्धितेष्वचामादेरित्येव। तत्राऽनेनाऽन्तरतमा[1] वृद्धिर्निवर्त्यते ॥

परिहारान्तरमेवेदं मत्वा पठितं, कथं चेदं परिहारान्तरं स्यात् ? ॥

**यदि नाद्यज्विशेषणं देविकादयः ॥**

अवश्यं चैतदेवं विज्ञेयमाद्यज्विशेषणं देविकादय इति, यदि नाद्यज्विशेषणं देविकादयः स्युरिहापि प्राप्नोति–सुदेविकायां भवः सौदेविक इति ॥ अथात्राऽप्याद्यज्विशेषणत्वादित्येव सिद्धं, परिहारान्तरं न भवति ॥ न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति ॥ किं तर्हि ? ॥ यत्र क्रियमाणे न दोषस्तत्र कर्तव्यम् ॥ क्व च क्रियमाणे न दोषः ? ॥ संज्ञाविधौ ॥ 'वृद्धिरादैज्देविकादीनामाकार' इति ॥ सिध्यति, सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं–'देविकादिषु तदादिग्रहणमन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वे'ति। परिहृतमेतत्–"आद्यज्विशेषणत्वात्सिद्ध"मिति ॥ ॥* न्यग्रोधे[2] च केवलग्रहणात् ॥*॥ न्यग्रोधे च केवलग्रहणान्मन्यामहे–'आद्यज्विशेषणं देविकादय'इति । तस्य[3] हि

प्र.]र्नान्या'। **परिहारान्तरमिति**। परिभाषेयम्।देविकादीनां वृद्धिर्विधीयमानाऽऽकार एव भवतीति केवलानां तदादीनां च वृद्धिर्देविकादीनां भवतीति तत्रैव परिभाषाप्रवृत्तिः। सुदेविकायां तु या वृद्धिर्न सा देविकादिशब्दस्य, किं तु तदन्तस्येति परिभाषानुपस्थानादौकार एव भवति। यथोद्देशं च परिभाषाश्रीयते न कार्यकाला, अन्यथाऽङ्गप्रकरणे देविकादीनामादित्यस्योपस्थानादव्याप्त्यतिव्याप्त्योः पूर्ववदन्यतरप्रसङ्गः स्यात्। इह तु प्रदेशे सूत्रे क्रियमाणे विधिरेवाऽऽकारस्य भवति, अर्थात्त्वैकारस्य निवृत्तिरिति नाऽयं परिहार उपपद्यते–'अन्तरतमनिवर्तकत्वाद्वे'ति। **सूत्रं तर्हीति**। अष्टाध्यायीलक्षणं सूत्रं संनिवेशान्तराश्रयणे भिद्यते। अथ वाऽस्यैव सूत्रस्य स्थानभेदाद्भेदो भवति। **आद्यज्विशेषणत्वादिति**। द्वितीयः परिहारो दूषितः। पूर्वस्तु स्थित एव। **अत्रैवार्थे** लिङ्गदर्शनं–**न्यग्रोधे चेति**। केवलग्रहणमिह प्रकरणे गृह्यमाणमादैज्विशेषणमिति ज्ञापयति, अन्यथा तदनर्थकं स्यात्। न च तदन्त-

उ.]ज्विशेषणत्वे कथं परिहारान्तरत्वमत आह—**परिभाषेयमिति**। परिभाषाप्रकरण इदं पाठ्यम्। तत्र चाऽङ्गाऽसन्निधानान्न दोष इति भावः। तदाह—**देविकादीनामिति**। **अर्थात्त्विति**। एवञ्च निवृत्तेर्वाक्यार्थत्वाऽभावात्परिहारान्तरत्वोक्तिरसङ्गतेति भावः। **'यदि नाद्यज्विशेषण'**मिति भाष्यस्यायमर्थः–नाद्यज्विशेषणं देविकादयः। इह च पाठ इत्यसङ्गतं, यत इह पाठे न परिभाषात्वं, विधिसाहचर्येण विधित्वस्यैव युक्तत्वात्। तत्र चाद्यज्विशेषणमेव युक्तमित्याह—**अवश्यं चैतदिति**। **यदि नाद्यज्ञिति**। 'इह पाठे' इति शेषः। ननु प्रकरणान्तरपाठेऽपि देविकेत्यादिसूत्रस्य न कश्चिद्भेदोत आह—**अष्टाध्यायीति**। **अत्रैवार्थे**–आद्यज्विशेषणत्वरूपेऽर्थे। यथास्थितपाठेऽप्यत्र वृद्धिरित्यनुवर्त्त्य वृद्धिशब्देन आकारविधा-

१ 'तत्रानेनानन्तरतमा' पा०। २ इदं क्वचिन्न। ३ हिः क्वचिन्न।

**केवलग्रहणस्यैतत्प्रयोजनम् इह मा-भूत् न्याग्रोधमूलाः शालय इति । यदि चाद्यज्विशेषणं देविकादयस्ततः केवलग्रहणमर्थवद्भवति ॥ तदेतत्कथं कृत्वा ज्ञापकं भवति ? ॥ यदि न्यग्रोधशब्दोऽव्युत्पन्नं प्रातिपदिकं भवति । अथ हि न्यग्रोहतीति न्यग्रोधः, ततो नियमार्थं पदान्त इति कृत्वा न ज्ञापकं भवति ॥**

॥*॥ वहीनरस्येद्वचनम् ॥*॥ **वहीनरस्यैत्वं वक्तव्यम् । वहीनरस्याऽपत्यं वैहीनरिः ॥**

**कुणरवाडवस्त्वाह–नैष वहीनरः ॥ कस्तर्हि ? ॥ विहीनर एषः । विहीनो नरः कामभोगाभ्यां विहीनरः । विहीनरस्याऽपत्यं–वैहीनरिः ॥**

---

प्र.]विधिनिरासाऽर्थम्, अङ्गेन न्यग्रोधस्य विशेषणात्तदन्तविधेरप्रसङ्गात्। **तदेतदिति।** अव्युत्पत्ति पक्षे 'न्यग्रोधस्य च केवलस्ये'ति वृद्धिनिषेधस्यैचश्च विधायकमिति केवल-ग्रहणं ज्ञापकार्थं भवति । व्युत्पत्तिपक्षे तु 'न य्वा भ्या'मिति सिद्धे केवलस्यैव-न्यग्रोधशब्दस्य यथा स्यात्, न्याग्रोधमूलाः शालय इत्यादौ मा भू'दिति नियमार्थं केवलग्रहणं न ज्ञापकं भवति । न हि 'न्यग्रोधस्ये'त्येतावताऽभिमतनियमसिद्धिः । नन्वङ्गस्यैव न्यग्रोधस्य नाङ्गादेरित्येवमिष्टो नियमः सिध्यत्येव । नैतदस्ति । अनिष्टोऽपि नियमः स्यात्–'न्यग्रोधस्यैव निशब्दात्परस्य वृद्धिप्रतिषेध' इति । तथा च 'नैयायिको' 'नैयासिक' इत्यादौ न स्यात् । तस्मात्केवलग्रहणमभिमतनियम-साधनाय । 'श्वादे'रित्ययं तु निषेध उक्तार्थज्ञापको भवति । **वहीनरस्येति ।** वहो-ऽस्यास्तीति वही, स चासौ नरश्चेति कर्मधारयसमासः । अन्येषामपि दृश्यत इति दीर्घः । तस्याऽपत्यमत इञ् । तत्रादिवृद्धेरपवाद इकारो विधीयते । इकारस्य वृद्धि-र्भवत्येव । न च तस्यां प्राप्तायामित्वं विधीयते यतः सापि बाध्येत । **विहीनो नर इति ।** पृषोदरादित्वान्नलोपः । [ देविकाशिंशपा ] ॥

---

उ.]नात् 'दाविकीभार्य' इत्यादौ पुंवत्त्वनिषेधो भवत्येवेति ध्येयम् । **अङ्गेन न्यग्रोध-स्येति ।** एवञ्च न्यग्रोधरूपाङ्गस्य विधीयमानस्तदादेनैव प्राप्नोति, नापि तदन्त इति केवलग्रहणमनर्थकमस्यार्थस्य ज्ञापकं । दृष्टानुरोधाच्च तदन्तविधिर्न ज्ञापक-मिति भावः । **विधायकमिति ।** अपदान्तत्वान्न य्वाभ्यामित्यस्याऽप्राप्तेरिति भावः ।

विनाऽपि केवलग्रहणमिष्टनियममाशङ्कते–**नन्वङ्गस्येत्यादिना।** व्युत्पत्तिपक्षेऽपि लिङ्गं दर्शयति–**श्वादेरिति ।** द्वारादिषु श्वन्शब्दपाठाद्द्वारादीनां चेत्यनेन प्राप्तस्य निषेधोऽयं । 'श्वाभस्त्रि'रित्याद्युदाहरणम् । ननु वृद्धिबाधेनेत्त्वे कथं पुनर्वृद्धिः स्यादत आह—**न च तस्यामिति ।** इकारस्थानिकवृद्धावित्यर्थः । भ्रष्टावसरन्यायस्तु फलाऽभावादत्र शास्त्रे नाश्रीयत इति भावः । केचित्तु 'वहीनरस्य एत्व'मिति वार्तिकं पठन्ति तेषान्तु न किञ्चित्कष्टं । **विहीन इति।** अत्र पक्षे वहीनरशब्दान्न प्रत्ययोऽ-नभिधानादिति बोध्यम् । वहीनरस्यैव वाऽनभिधानं बोध्यम् । [देविकाशिंशपा] ॥

---

१ इदं क्वचिन्न ।

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ७।३।३ ॥**

॥*॥ य्वाभ्यां परस्याऽवृद्धित्वम् ॥*॥ **य्वाभ्यां परस्याऽवृद्धित्वं सिद्धम् ॥ कुतः ?** ॥*॥ अपवादौ वृद्धेर्हि तौ ॥*॥ **अपवादौ हि वृद्धेस्तावैचावुच्येते ।** ॥*॥ नित्यावैचो तयोर्वृद्धिः॥*॥ **अथ वा नित्यावैचो, कृतायामपि वृद्धौ प्राप्नुतोऽकृतायामपि ॥ नित्यत्वादैचोः कृतयोर्यद्यपि वृद्धिस्तयोरेव ॥**

॥*॥ किमर्थं नेति शिष्यते ? ॥*॥ **अथ किमर्थं प्रतिषेध उच्यते ? ॥**

॥*॥ ऐचोर्विषयार्थं प्रतिषेधसन्नियुक्तवचनम् ॥*॥ **ऐचोर्विषयार्थं प्रति-**

---

**प्र.] न य्वाभ्याम् ।** 'य्वाभ्यां पदान्ताभ्यां पूर्वावै'जित्येव सूत्रं कार्यं नार्थो वृद्धिनिषेधेन । **अपवादाविति ।** एकस्मिन्नङ्गविशेषे विधीयमानावैचौ सामान्यविहिताया वृद्धेर्बाधकौ, सत्यपि संभवे सामान्यविशेषविषयत्वेन बाध्यबाधकभावदर्शनात् । इदानीं विषयभेदादसत्यप्यैज्वृद्ध्योर्बाध्यबाधकत्वे प्रतिविधातुमाह–**यद्यपीति ।** अभ्युपगमवादेनोच्यते । न हि वृद्धौ सत्यां सर्वेष्टसिद्धिः । 'वैयाकरणभार्य' इत्यत्र 'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधप्रसङ्गात् । तस्माच्छब्दान्तरप्राप्त्या वृद्धिमनित्यां बाधित्वा नित्यावैचौ भविष्यतः । बाधितत्वाच्च पुनर्वृद्धिर्न भविष्यतीत्यभ्युपेयम् । **ऐचोर्विषयार्थमिति ।** याभ्यां य्वाभ्यां परस्य वृद्धिः प्राप्ता निषिध्यते ताभ्यां पूर्वा-

---

**उ.] न य्वाभ्यां ।** ननु य्वाभ्यां परस्य वृद्धिस्ताभ्यां पूर्वावैचाविति विषयभेदात्कथं बाध्यबाधकभावोऽत आह—**एकस्मिन्नङ्गेति ।** नन्वपवादत्वमुक्त्वा कथं नित्यत्वाश्रयबाधकत्वेन पक्षान्तरकथनमत आह–**इदानीमिति ।** विषयभेदान्नापवादत्वम् । अङ्गं तु न कार्यि, तस्य कार्यिविशेषणविशेषणत्वादिति भावः । इदमप्यसंभवे एव बाधकत्वमिति वार्तिकमते । **अभ्युपगमेति ।** इदं च **यद्यपी**त्यादिसन्दिग्धवचनेन भाष्यकृताऽपि ध्वनितं । **तस्मादिति ।** ऐज्विधानसामर्थ्याच्च न तयोर्वृद्धिः । अन्यथा प्रयत्नलाघवाय एङावेव पूर्वौ विदध्यादिति भावः । केचित्तु 'आदैज्मात्रस्य वृद्धिसंज्ञे'ति पक्षे तावद्भार्य्ये इव वैयाकरणभार्य्ये पुंवत्त्वनिषेधापादनेन निषेधप्रवृत्तिरेवेष्टा । अत्र सूत्रे पूर्वसूत्रे आदंशे इव ऐजंशेऽपि वृद्धिपदसंबन्धेन तद्भावितानामेव वृद्धिसंज्ञेति पक्षेऽपि निषेधप्रवृत्तिर्भवत्येव । किञ्चैवं सति 'वृद्धिनिमित्तस्ये'ति सूत्रे शब्दव्यापाराश्रयणस्यावश्यकत्वेन तावद्भार्ये दोषवारणाय व्यधिकरणबहुव्रीहिपर्यन्तं भाष्यकृतो धावनमफलं स्यादित्याहुः ।

**बाधितत्वाच्चेति ।** इदं चिन्त्यं, भ्रष्टावसरन्यायस्य भाष्ये क्वाप्यनाश्रयणात्, उक्तरीत्योपपत्तेश्च, अत्रापवादत्वमेव युक्तं । 'विषयैक्य एवापवादत्व'मिति तु न युक्तम्, अचि रादेशस्य नुडपवादत्वशङ्कापरभाष्यविरोधात् । न तिस्रिति ज्ञापकेन नुड्विषये रादेशाभावकल्पनेन समाहितमित्यन्यत् । 'नित्यावैचा'वित्युक्तिस्त्वेकदेशिन इति बोध्यम् । 'असम्भवे एवापवादत्व'मिति वार्तिकमतेन वा तदुक्तं । भाष्ये–

---

१ श्लोकवार्तिकमेतत् । २ 'संनियुक्तं वचनम्' पा० ।

**षेधसन्नियोगेनैचावुच्येते ॥** * ॥ यत्र य्वाभ्यां पराऽवृद्धिस्तत्राप्यश्वर्यथा न तौ ॥*॥ **यत्र य्वाभ्यां परस्याऽवृद्धित्वमुच्यते तत्रैचौ यथा स्यातामिह मा भूताम्—आध्यश्विः दैाध्यश्विः माध्वश्विरिति ॥ नैतदस्ति प्रयोजनम् ।** ॥ * ॥ अचामादेर्य्वोभ्यां हि तौ ॥ * ॥ **अचामादिनाऽत्र य्वौ विशेषयिष्यामः—'अचामादेर्यौ य्वा'विति** ॥ * ॥ कथं द्व्याशीति के न तौ ॥*॥ **'द्व्याशीतिक'इत्यत्र कस्मान्न तौ भवतः ?** ॥*॥ यत्र वृद्धिरचामादेस्तत्रैचावत्र घोर्हि सा ॥*॥ **यत्राऽचामादेरित्येवं वृद्धिस्तत्रैचावुच्येते । अत्र घोरित्येवं वृद्धिः ॥ किमिदं घोरिति ? ॥ उत्तरपदस्येति ॥ उत्तरपदा-**

प्र.] वैचौ यथा स्यातामन्याभ्यां मा भूतामित्येवमर्थं प्रतिषेधविधानम् । **आध्यश्वेर्यथा-नताविति** । 'स्याता'मिति वाक्यशेषः । अध्यारूढोऽश्वमिति प्रादिसमासः । अत इञ् । असत्यपि निषेधविधाने दोषं परिहर्तुमाह—**अचामादेरिति** । 'अचामादेरचः स्थाने यौ य्वौ ताभ्यां पूर्वौ भवत' इत्याश्रीयमाणे आध्यश्विरित्यादावैचोरप्रसङ्गः । **द्व्याशीतिक इति** । द्वे अशीती भूत इति तद्धितार्थे समासः । ततष्ठञ् । 'अध्यर्धपूर्वद्विगो'रित्यत्राऽऽर्हादित्यधिकाराल्लुङ्न भवति। अत्राऽचामादेरचो यकारस्य विधानात्तः पूर्व ऐकारः प्राप्नोति । **ताविति** द्विवचनं द्व्याशीतिकस्योपलक्षणत्वादुपात्तम् । यद्यपि य्वोरचामादिना विशेषणाऽभावेऽप्यत्र दोषस्तथापि विशेषणे सर्वं न सिध्यतीति प्रतिपादनायेदमुच्यते । एतत्परिहरति—**यत्रेति** । 'अचामादे'रिति या वृद्धिः प्राप्नोति तदपवादावैचौ विधीयेते । अत्र 'तु सङ्ख्यायाः संवत्सरसङ्ख्यस्ये'ति वृद्धिर्विधीयते । अचामादेरिति वर्तते । तन्त्रेण च (ते)द्वे अचामादेरित्येतदाश्रीयते । तत्रैकं स्वरूपपरम् । तेनाऽचामादेरित्येवं या वृद्धिस्तस्यां प्राप्तायां तदपवादावचामादेरचः स्थाने य्वाभ्यां पूर्वावैचौ भवत इत्यर्थः संपद्यते । **उत्तरपदाधिकारे-**

उ.] **अथ किमर्थमिति** । एवं सति किमर्थं प्रतिषेध इत्यर्थः। **विषयार्थमिति** । ऐचोर्विशिष्टविषयनिदेशार्थमित्यर्थः । एतदुत्तरं नैतदस्ति प्रयोजनमित्यादिभाष्यमेकदेश्युक्तिरित्युत्तरसूत्रे कैयटे स्फुटम् । **एचः स्थाने इति** । अनुवादे परिभाषाणामनुपस्थितिरिति त्विको गुणेत्यादौ 'विधीयेते' इत्यध्याहारलब्धमिति भावः। **द्व्याशीतिकस्योपलक्षणत्वादिति** । 'स्वाङ्गक' इत्यादौ स्वङ्गशब्दादवृद्धादपीति वुञि 'सुसर्वार्धजनपदस्ये'त्युत्तरपदवृद्धौ दोष इति भावः। 'माध्वश्वेरुपलक्षणत्वा'दिति पाठे तद्वदिमप्युपलक्षणमिति कथं चिद्व्याख्येयम् । **अत्र**—द्व्याशीतिके । **विशेषणे सर्वमिति** । नतु पक्षान्तरे इष्टं सिध्यतीति भावेनेत्यर्थः । कथं पुनरयमर्थः सूत्राक्षरैर्लभ्यतेऽत आह—**तन्त्रेण च ते इति** । निषेधसत्त्वे तु येन नाप्राप्तिन्यायेन तद्धितेष्वचामादेरित्यस्यैव निषेध इति तत्सन्नियोगशिष्ट ऐजागमोऽपि तत्रैवेति द्व्याशीतिके न

१ 'नैवैचावुच्ये' पा० । २ इदं क्वचिन्न । ३ श्लोकवार्तिकमेतत् । ४ 'य्वोर्हि सा' 'द्योर्हि सा' 'धोर्हि' पा०। ५ 'य्योः' 'द्योः' पा०। ६ 'आध्यश्वेरुपलक्षणत्वात्' पा०।

धिकारेऽप्यवश्यमैजागमोऽनुवर्त्यः पूर्वैऽयलिन्दे भवः पूर्वत्रैयलिन्द इत्येवमर्थम् ॥ नैष दोषः-उत्तरपदेनाऽत्राऽचामादिं विशेषयिष्यामोऽचामादिना य्वौ–'उत्तरपदस्याचामादेर्यौ य्वौ'विति?॥*॥अथ कस्मात्पदान्ताभ्याम् ॥*॥ अथ किमर्थं 'पदान्ताभ्या'मित्युच्यते ? ॥*॥ यथेणो न भवेद्यणः ॥*॥ इणो यणादेशे मा भूत्—यतश्छात्रा याता इति ॥

इह वैयाकरणः शौवश्व इति शाकलं प्राप्नोति, य्वोश्च स्थानिवद्भावादायावौ प्राप्नुतः ? ॥*॥ शाकलायावादेशेषु चोक्तम् ॥*॥ [ शाकलायावादेशेषु चोक्तम् ]॥ किमुक्तम् ?॥ शाकले तावदुक्तम्–"सिन्नित्यसमासयोः शाकलप्रतिषेध" इति ॥ आयावोः किमुक्तम् ? ॥ "अचः पूर्वविज्ञानादैचोः सिद्धमिति ॥

॥*॥ य्वाभ्यां परस्याऽवृद्धित्वमपवादौ वृद्धेर्हि तौ ।
नित्यावैचौ तयोर्वृद्धिः किमर्थं नेति शिष्यते ॥
यत्र य्वाभ्यां पराऽवृद्धिस्तत्राप्यश्वेर्यथा न तौ ।
अचामादेर्य्वाभ्यां हि तौ कथं द्व्याशीतिकेन तौ ॥

प्र.] ऽपीति। तथा च द्व्याशीतिके दोषः। पूर्वत्रैयलिन्द इति। 'प्राचां ग्रामनगराणा'-मित्युत्तरपदवृद्धिः प्राप्ता प्रतिषिध्यते। नैष दोष इति। द्व्याशीतिक इत्यत्र। तदेवं 'ने'ति प्रत्याख्यातम् । याता इति । अचामादेरचः स्थाने भवत्ययं यकार इति ऐच् प्राप्नोति । ननु चाऽन्तरङ्गत्वात् पूर्वमेव यणा भाव्यम् । इहापि 'व्याकरणं' 'स्वश्व' इति पूर्वमेव यण् भवति । ततो यथा भूतपूर्वगत्याऽत्राऽचामादेर्यणौ भवतस्तथा यणादेशो भवतीत्यदोषः । अचः पूर्वविज्ञानादिति । योऽनादिष्टादचः पूर्वस्तस्य विधौ स्थानिवद्भाव इत्यर्थः । [ न य्वाभ्यां पदान्ताभ्यां ] ॥

उ.]दोषः। आवृत्तिश्चानाश्रयणीयेति बोध्यम् । पूर्वत्रैयलिन्दार्थमुत्तरपदाधिकारे ऐजाद्यनुवृत्तौ द्व्याशीतिके दोषस्तं परिहरति भाष्ये–नैष दोष इति । तदाह–द्व्याशीतिक इति। निषेधसत्त्वेऽपि 'प्राचां ग्रामनगराणा'मित्यत्रैतदनुवर्त्य वाक्यभेदेन व्याख्यानात्पूर्वत्रैयलिन्दे न दोषः। 'सङ्ख्यायाः संवत्सरे'त्यादौ तु नानुवृत्तिः, मानाभावादिष्टानुरोधाच्च । केचित्तु उत्तरपदसंबन्धिय्वाभ्यां परस्य न वृद्धिरित्यर्थादनुवृत्तावपि न दोष इत्याहुः। अत्र 'ने'त्यस्य प्रत्याख्यानमेकदेशिनः, अतिगुरुयत्नसाध्यत्वादिति बोध्यम् । ननुचेति । एवञ्च ञ्णिदादिनिरूपिताङ्गस्याचामादेरचः स्थाने य्वौ न भवत इति भावः । अचामादेरिति । ञ्णिदादिनिरूपिताङ्गसंबन्ध्यचामादेरित्यर्थः । तथा यणादेश इति । तथा याता इत्यादावपि तन्निरूपिताऽङ्गसंबन्ध्यचामादेरचः स्थाने यणादेशो भवतीत्यर्थः । अत्र 'भूतपूर्वगत्ये'ति चिन्त्यम् । यदि प्रत्ययोत्पत्त्यनन्तरं यणादेशः स्यात्तदा तत्स्थानिकः स्यादित्येवं काल्पनिकं तदिति वक्तुमुचितं । भाष्ये–शाकलं प्राप्नोतीति । ततश्च नित्यं यण् दुर्लभ इति भावः ।

१ 'य्वोरिति' 'योरिति' पा० । २ श्लोकवार्त्तिकमेतत् । ३ इदं लुप्तम् ।

यत्र वृद्धिरचामादेस्तत्रैचावत्र य्वोर्हि सा ।
अथ कस्मात्पदान्ताभ्यां यथेणो न भवेद्यणः ॥*॥

**द्वारादीनां च ॥ ७।३।४ ॥**

**अथ परस्याऽवृद्धिरित्यनुवर्तते उताहो न ? ॥ किं चातः ?॥ यद्यनुवर्तते शौवं मांसं, टिलोपे कृते ऐजागमो न प्राप्नोति॥ अथ निवृत्तं, स्वाध्यायशब्दो द्वारादिषु पठ्यते तत्र यावन्तो यणः सर्वेभ्यः पूर्व ऐजागमः प्राप्नोति ॥**

**यथेच्छसि तथास्तु॥अस्तु तावदनुवर्तते, कथं शौवं मांसम् ?॥आनुपूर्व्या[1] सिद्धमेतत् । नात्राऽकृते ऐजागमे टिलोपः प्राप्नोति ॥ किं कारणम् ? ॥ 'प्रकृत्यैका'जिति प्रकृतिभावेन भवितव्यम् । तदेतदानुपूर्व्या सिद्धं भवति ॥**

**अथ वा पुनरस्तु निवृत्तम् ॥ ननु चोक्तं-"स्वाध्यायशब्दो द्वारादिषु**

प्र.] द्वारा। पूर्वसूत्रे वृद्धिनिषेधः प्रतिपत्तिलाघवाय कृतः, न ह्येकेनाऽचामादेरित्यनेनोभयं विशेषयितुं शक्यम् । नाऽप्यप्रतिषिध्यमाना वृद्धिरचामादेरित्यनेन शक्या विशेषयितुमिति यथान्यासं प्रतिषेधमाश्रित्य विचार्यते-**परस्येति** । **यदीति** । यत्रैव वृद्धिप्रतिषेधस्तत्रैवैज्भ्यां भाव्यं नान्यत्र । **शौवमिति** । शुनो विकार इति 'प्राणिरजतादिभ्योऽ'ञित्यञ् । श्वन्शब्दस्य तु पाठस्तदाद्यर्थः स्याच्छौवहानमिति ।

**यावन्तो यण इति** । अपदान्तार्थत्वादस्य सर्वेभ्यो यण्भ्यः पूर्वावैचौ प्राप्नुतः । प्रतिषेधे तु विधीयमाने याभ्यां य्वाभ्यां परस्य वृद्धिप्रतिषेधस्ताभ्यां पूर्वावैचाविति नास्ति सर्वप्रसङ्गः । 'प्रकृत्यैका'जिति इष्टेमेयःसु प्रकृतिभावः । तथा च ज्ञा[2] देवताऽस्य 'ज्ञ' इत्यत्र न भवति । इह त्वविशेषेण प्रकृतिभावमाश्रित्यैतदुक्तं परिहारदिक्प्रदर्शनार्थम् । अत्र हि परत्वाट्टिलोपं बाधित्वा वृद्धिः प्राप्ता प्रतिषिध्यत इति

उ.] **द्वारादीनां च** । ननु पूर्वसूत्रे निषेधस्य प्रत्याख्यानात्तदनुवृत्त्यादिविचारोऽयुक्त इत्यत आह—**पूर्वसूत्रे इति** । तन्त्राद्याश्रणे च न मानमिति भावः । तन्त्राद्याश्रयणेऽपि न निर्वाह इत्याह-**नापीति** । 'अचामादे'रित्येवं यत्र वृद्धिः प्राप्ता तत्र तदपवादावैचावित्यन्वयस्तु न लभ्यत इति भावः । ननु शुन इयं[3]मित्यणि प्रकृतिभावाट्टिलोपो दुर्लभोऽत आह-**अजिति** । नन्वेवं श्वन्शब्दपाठो व्यर्थोऽत आह-**तदाद्यर्थ इति** । **परत्वादिति** । टिलोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वमित्याशयः । परेतु दुष्टपक्षेण समाधानं कुर्वता भाष्यकृताऽनुवृत्तिपक्षस्याऽसङ्गततैवोक्ता । कैयटोक्तन्तु न युक्तं, कृताऽकृतप्रसङ्गित्वेन टिलोपस्य नित्यत्वात् । किञ्च ज्ञो देवतास्येत्यत्रापि परत्वाद्वृद्धौ सकृद्गतिन्यायेन लोपाऽप्राप्त्या'ज्ञ' इत्यस्याऽसिद्धिः । किं च स्त्रीपुंसाभ्यामित्यत्राञ्प्रत्ययो नुगागमश्च कार्य इत्याशङ्क्य-'टिलोपः स्यात्, न च नुग्विधानसामर्थ्यं, स्त्रैणे 'यं विधिं प्रती'ति न्यायेन तद्विधानसामर्थ्यात्तदभावेऽपि पौंस्ने दोष' इत्युक्तं तदसङ्गतिः। त्वद्रीत्या स्त्रैणे नुक्येव टिलोपप्राप्तिः,अन्यथा वृद्ध्या

१ 'आनुपूर्व्यात्' पा० । २ 'ज्ञो देव' पा० । ३ 'इदं' पा० ।

पठ्यते तत्र यावन्तो यणः सर्वेभ्यः पूर्वं ऐजागमः प्राप्नोती''ति ॥ कः पुनरर्हति स्वाध्यायशब्दं द्वारादिषु पठितुम्, एवं किल पठ्येत–स्वमध्ययनं स्वाध्याय इति । तच्च न ॥ सुष्ठु वाऽध्ययनं स्वाध्यायः । [ शोभनं वा अध्ययनं स्वाध्यायः ॥ अथापि स्वमध्ययनं स्वाध्यायः ] एवमपि न दोषः । अचामादेरिति वर्त्तते ॥

## श्वादेरिञि ॥ ७।३।८ ॥

अयं श्वन्छब्दो[2] द्वारादिषु पठ्यते, तत्र कः प्रसङ्गो यत्तदादेः स्यात्, नैवं[3] प्राप्नोति नाऽर्थः प्रतिषेधेन ॥ [ इह तस्य[1] वा ग्रहणं भवति तदन्तस्य वा, न चेदं तत्, नापि तदन्तम् ] ॥ तदादिविधिना प्राप्नोति ॥ न[4] वै तदादिविधिरस्ति ॥ अत उत्तरं पठति—॥*॥ प्रतिषेधे श्वादिग्रहणं ज्ञापकमन्यत्र श्वन्ग्रहणे[5] तदादिग्रहणस्य, शौवहानाद्यर्थम् ॥*॥ प्रतिषेधे श्वादिग्रहणं क्रियते

प्र.]भवत्यैजागम इत्ययमत्र परिहारः । **सुष्ठु वा अध्ययनमिति** । 'अन्येषामपि दृश्यते' इति दीर्घः । आङ् वा मध्ये प्रक्षेप्तव्यः । **अचामादेरिति वर्तत इति** । तत्रैवं संबन्धो'ऽचामादेरनन्तरौ यौ य्वौ ताभ्यां पूर्वावैचौ भवत' इति, तेन स्वाध्यायशब्दे वकारात्पूर्वमैज्भवति न तु यकाराभ्यामित्यर्थः । यद्यपि स्वोऽध्यायः स्वाध्याय इत्यस्यामपि व्युत्पत्तौ स्वाऽध्यायशब्दो न पठितव्यः, स्वशब्दस्येह पाठात्, तदादिविधेश्चेष्टत्वात्,तथाऽपि पाठेऽपि दोषो नास्तीति प्रदर्शनाय भाष्यकारेण पाठमभ्युपगम्य परिहारोऽभिहितः । [ द्वारादीनां च ] ॥

**श्वादेः । तदादिविधिनेति** । आद्यज्विशेषणत्वाद्वारादीनां तदादिविधिरस्ति ।

उ.]बाधात्तदसङ्गतिःस्पष्टैव। किञ्च 'कसोमाट्ट्य'णित्येव सकृद्गतिन्यायेन सिद्धे 'कस्ये'दितीत्त्वविधानेन वृद्धेर्लोपस्य बलवत्त्वबोधनेन परत्वादित्यस्याऽसङ्गतेश्च । 'णौचङी'ति सूत्रे 'नाल्लोपी'ति सूत्रस्थप्रत्याहारग्रहणेन 'वृद्धेर्लोपो बलीया'निति सामान्यत एव ज्ञापकस्य वक्ष्यमाणत्वाच्च । एवञ्च 'श्रायं हवि'रित्यादि लोके चिन्त्यमेव, वृद्ध्यपवादत्वादैचोर्न वृद्धिनिषेधोपयोगोऽत्रेति बोध्यम् । भाष्ये–**तच्च नेति** । स्वशब्दस्य द्वारादिषु पाठादिति भावः । **सुष्ठु अध्ययनमिति** । तत्र च 'न य्वाभ्या'मिति सिद्धमिति तात्पर्यं । नन्वेवं 'स्वध्याय' इति स्यादत आह—**अन्येषामपीति** । कथं पुनस्तदनुवृत्तौ दोषपरिहारोऽत आह—**तत्रैवमिति** । अनन्तरशब्दोऽव्यवहितसमीपवाची । **तदादिविधेश्चेति** । अतएव स्वग्रामे भवः सौवग्रामिक इति सिध्यति। **पाठमभ्युपगम्येति** । वस्तुतस्तु स्वग्रामस्वाध्याययोः पाठः'स्वशब्दादेश्चेदेतयोरेवे'ति नियमार्थः । तेन 'स्वार्थिकाः' 'स्वाभाविकं' स्वाराज्य'मित्यादि सिद्धमिति भाष्याशयः । [ द्वारादीनाञ्च ] ॥

**श्वादेः। आद्यजिति** । 'अङ्गस्याऽचामादेः पूर्वस्य नैचौ स चेदाद्योऽच् द्वारादीना-

१ इदं क्वचिन्न । २ 'श्वशब्दो' । ३ 'नैवं' । ४ 'नैव' । ५ 'श्वग्रहणे' पा० ।

ज्ञापकार्थम् ॥ किं ज्ञाप्यम् ? ॥ एतज्ज्ञापयत्याचार्यः–'अन्यत्र च श्वन्ग्रहणे तदादिविधिर्भवती'ति॥किमेतस्य ज्ञापने प्रयोजनं?॥'शौवहानाद्यर्थम्'। शौवहानं नाम[1] नगरं शौवादंष्ट्रो मणिरिति ॥*॥ इकारादिग्रहणं च श्वागणिकाद्यर्थम् ॥*॥ इकारादिग्रहणं च कर्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'श्वागणिकाद्यर्थम्' । श्वगणेन चरति श्वागणिकः[2] ॥*॥ तदन्तस्य चाऽन्यत्र प्रतिषेधः[3] ॥*॥ तदन्तस्य चाऽन्यत्र[3] प्रतिषेधो वक्तव्यः । श्वाभस्त्रेः[1] स्वं श्वाभस्त्रम् ॥

## उत्तरपदस्य ७।३।१०॥

किमर्थमिदमुच्यते ?॥ 'अवयवादृतो'रिति वक्ष्यति तदुत्तरपदस्य यथा स्यादचामादेर्मा भूत् ॥ नैतदस्ति प्रयोजनम् । 'अवयवा'दिति पञ्चमी तत्राऽन्तरेणाप्युत्तरपदग्रहणमुत्तरपदस्यैव भविष्यति ॥ उत्तरार्थं तर्हि,–'सुसर्वा-

---

प्र.] इतरस्त्वगृहीताभिप्राय आह—नैव तदादिविधिरस्तीति। श्वग्रहण इति। श्वग्रहणस्योपलक्षणार्थत्वादेतत्प्रकरणनिर्दिष्टैर्देविकादिभिर्द्वारादिभिश्चादेरचो विशेषणात्तदादिविधिर्भवतीति ज्ञाप्यते । शौवहानमिति । जिहतेऽस्मिन्निति ल्युट् । शुनां हानमिति षष्ठीसमासः । श्वहानमस्मिन्नस्तीति 'तदस्मिन्नस्तीति देशे तन्नाम्नी'त्यण् । वृद्धिनिषेधः, ऐजागमश्च द्वारादित्वात् । शौवादंष्ट्र इति । शुनो दंष्ट्रा श्वादंष्ट्रा । 'शुनो दन्तदंष्ट्रेति' दीर्घः। तत्र भव इत्यण् । 'संज्ञापूर्वको विधिरनित्य' इति वृद्धाच्छो न भवति । इकारादिग्रहणमिति । 'श्वादेरिती'ति सूत्रं कर्तव्यम् । तत्र 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति तदादिविधिर्भवति । श्वागणिक इति । 'श्वगणाट्ठञ्चे'ति ठञ् । तदन्तस्येति । इञन्तस्य । श्वाभस्त्रमिति । 'इञश्चे'त्यण् । बाह्यतद्धितनिमित्तो वृद्धिप्रतिषेध ऐजागमश्च बहिरङ्गत्वादशक्य इञाश्रयेण निषेधेन निवारयितुमिति वचनारम्भः । [ श्वादेरिञि ] ॥

उत्तर[पदस्य] ।किमर्थमिति। 'तस्मा'दित्युत्तरस्येति वचनादुत्तरपदस्यैव वृद्धिर्भविष्यतीति प्रश्नः । आचार्यस्तु शिष्यबुद्धिपरीक्षार्थमाह—अवयवादृतोरिति ।

---

उ.]नामवयव' इत्यर्थ इति भावः। द्वारादीनां यकारवकारविशेषणत्वादपि सिध्यतीति बोध्यम् । संज्ञापूर्वक इति । प्रत्ययसंज्ञाविशिष्टस्यैव छस्य विधानादिति भावः । यत्तु 'स्वं रूप'मिति संज्ञापूर्वकत्वमिति, तन्न, अतिप्रसङ्गात् । 'ओरो'दिति वक्तव्ये 'ओर्गुण'इत्यस्य ज्ञापकत्वोच्छेदापत्तेश्च, ज्ञापितेऽपि चारितार्थ्याऽभावादित्याहुः । अन्ये तु 'शुनो दन्ते'ति भाष्ये न क्वापि दृश्यते । 'अन्येषामपि दृश्यते' इत्यस्याभियुक्तोक्तः प्रपञ्चः स, ततश्च श्वदंष्ट्राशब्दादेव प्रत्यये तदनन्तरं तेन दीर्घः । संज्ञापूर्वकस्याऽनित्यत्वं च न क्वापि भाष्ये आश्रितमित्याहुः । बहिरङ्गत्वादिति । प्रत्यासत्तिन्यायानाश्रयणबोधकं वचनमिति बोध्यम् । [ श्वादेरिञि ] ॥

उत्तरपदस्य । तस्मादितीति। 'अवयवादृतो'रित्यादौ। भाष्ये—परिमाणा-

---

१ इदं क्वचिन्न । २ 'श्वागणिकम्' पा० । ३ 'चान्यप्रतिषेधो' पा० ।

र्धाज्जनपदस्ये'ति ॥ 'सुसर्वार्द्धा'दिति पञ्चमी ॥ 'दिशोऽमद्राणाम्' [ इति] ॥ 'दिश' इति पञ्चमी ॥ 'प्राचां ग्रामनगराणाम्' [इति]॥ 'दिश'इत्येव॥ 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' [इति] ॥ 'सङ्ख्याया' इति पञ्चमी । 'वर्षस्याभविष्यति' [ इति] ॥ 'सङ्ख्याया' इत्येव ॥ 'परिमाणान्तस्याऽसंज्ञाशाणयो'रिति ॥ 'सङ्ख्याया' इत्येव ॥

इदं तर्हि प्रयोजनं—'जे प्रोष्ठपदानाम्' । उत्तरपदस्य यथा स्यात्पूर्वपदस्य मा भूत्—प्रोष्ठपदासु जातः प्रोष्ठपादो ब्राह्मणः ।

॥ *॥ तद्धितेष्वचामादिवृद्धेरुत्तरपदवृद्धिर्विप्रतिषेधेन द्व्याशीतिकाद्यर्थम् ॥ *॥

तद्धितेष्वचामादेरुत्तरपदवृद्धिर्भवति विप्रतिषेधेन ॥ किं प्रयोजनम् ?॥ 'द्व्याशीतिकाद्यर्थम्' । अचामादिवृद्धेरवकाशः–ऐतिकायनः औपगवः । उत्तरपदवृद्धेरवकाशः–द्विषाष्टिकम् त्रिषाष्टिकम्। इहोभयं प्राप्नोति–द्व्याशीतिकः त्र्याशीतिकः । उत्तरपदवृद्धिर्भवति विप्रतिषेधेन ॥ कः पुनरत्र विशेषोऽचामादिवृद्धौ सत्यामुत्तरपदवृद्धौ वा ? ॥ अयमस्ति विशेषः–यद्यत्राऽचामादिवृद्धिः स्यादैजागमः प्रसज्येत ॥ [ उत्तरपदस्य ] ॥

---

प्र.]जे प्रोष्ठपदानामिति। पञ्चमीनिर्देशाऽभावादुत्तरपदस्य न स्यात् । वचनं त्वनाद्यजर्थं विज्ञायमानं पूर्वपदस्यापि वृद्धिं विदध्यात्, नियमार्थं वा स्यात्—'जातार्थ एव प्रोष्ठपदानां वृद्धिः','प्रोष्ठपदानामेव वा जातार्थे' इति। प्रोष्ठपाद इति । प्रोष्ठपदाभियुक्तः काल इत्यणो 'लुबविशेष' इति लुपि कृते सन्धिवेलादिसूत्रेण जातार्थेऽण् । अत्राङ्गस्याचामादेर्वृद्धिर्मा भूदित्येवमर्थमुत्तरपदाधिकारः । 'उत्तरपदवृद्धौ सर्वं चे'त्यत्रोत्तरपदाधिकारविहितवृद्धिपरिग्रहार्थश्च । द्विषाष्टिकमिति । नन्वत्राप्यचामादेर्वृद्धिः प्राप्नोतीति कथमयमवकाशः । अथात्र येन नाप्राप्तिन्यायेनादिवृद्धिर्बाध्यते तदा द्व्याशीतिके विप्रतिषेधानुपपत्तिः, उत्सर्गापवादयोरतुल्यबलत्वादिति वार्तिककारस्य विप्रतिषेधोपन्यासो न युक्त इति चिन्त्यमेतत् । यद्यत्रेति । सा च प्रतिषिध्येत ततस्तत्प्रतिषेधसन्नियुक्त ऐजागमः स्यादित्यर्थः । उत्तरपदवृद्धेस्तु यथाऽत्र प्रतिषेधो न भवति तथा 'न य्वाभ्या'मित्यत्र प्रतिपादितम् । [ उत्तरपदस्य ] ॥

---

उ.]न्तस्येत्यत्र सङ्ख्याया इत्येवेति।नन्वत्र'सङ्ख्याया' इत्यस्य संबन्धे'ऽसमासे निष्कादिभ्य' इति सूत्रस्थ'परमनैष्किक'मिति भाष्योदाहरणविरोध इति चेन्न ; अनुवृत्तस्य वाक्यभेदेन संबन्धात् । तेन 'परिमाणान्तस्ये'त्यस्याऽन्यत्र क्वाचित्कत्वे तेन परमनैष्किकसिद्धिरनतिप्रसङ्गश्चेत्यदोषात् । 'सङ्ख्याया' इत्येतद्वाक्यसाहचर्य्याच्चाऽस्यापि उत्तरपदे एव प्रवृत्तिरित्याशयात् । ननु पूर्वपदस्य सामान्यसूत्रेण सिद्धत्वाद्वचनं व्यर्थं स्यादत आह—वचनं त्विति । स्वयं फलान्तरमप्याह—उत्तरपदवृद्धाविति । चिन्त्यमेतदिति । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'त्यादौ

---

१ इदं क्वचिदपि नास्ति । २ 'अनुत्तरपदस्य' पा० ।

## प्राचां ग्रामनगराणाम् ॥ ७।३।१४ ॥

नगरग्रहणं किमर्थं न 'प्राचां ग्रामाणा'मित्येव सिद्धम् ?॥ न सिध्यति । अन्यो हि[1] ग्रामोऽन्यन्नगरम् ॥ कथं ज्ञायते ? ॥ एवं हि कश्चित्कं चित्पृच्छति–'कुतो भवानागच्छति ग्रामात्' ? ॥ स आह–'न ग्रामान्नगरा'दिति ॥

ननु च भो !॥*॥य एव ग्रामस्तन्नगरं॥*॥ कथं ज्ञायते ?॥ लोकतः[2] । ये हि ग्रामे विधयो नेष्यन्ते साधीयस्ते नगरे न क्रियन्ते।तद्यथा–'अभक्ष्यो ग्राम्यकुक्कुटः' 'अभक्ष्यो ग्राम्यसूकर' इत्युक्ते सुतरां नागरोऽपि न भक्ष्यते । तथा 'ग्रामे नाध्येय'मिति साधीयो नगरेऽपि नाधीयते । तस्माद्य एव ग्रामस्तन्नगरम् ॥

कथंयदुक्तम्–"एवं हि कश्चित्कं चित्पृच्छति–कुतोभवानागच्छति ग्रामात् ?। स आह–न ग्रामान्नगरा'दिति ? ॥ संस्त्यायविशेषमसावाचष्टे । संस्त्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह इति ॥ एवं तर्हि सिद्धे सति यद्ग्रामग्रहणे नगरग्रहणं करोति तज्ज्ञापयत्याचार्यो'ऽन्यत्र ग्रामग्रहणे नगरग्रहणं न भव-

प्र.] प्राचां ग्रामनगराणाम् । नगरग्रहणमिति । यद्यपि समुदायवचनोऽपि ग्रामशब्दोऽस्ति 'भूतग्राम' 'इन्द्रियग्राम' इति, तथापि जननिकायनिवासार्थत्वेनातिप्रसिद्धः–अभक्ष्यो ग्राम्यकुक्कुटः, ग्रामे नाध्येयमिति, तदर्थस्यैव ग्रहणमिति मत्वा प्रश्नः । अन्यो हि ग्राम इति । विशेषेण दिशेषाऽन्तरस्याऽसंग्रहणान्नगरग्रहणम् । साधीयस्तइति । नगरस्याऽशुचितरत्वात् । संस्त्यायविशेषमिति । सामान्यशब्दस्याऽपि प्रकरणवशाद्विशेषाऽवस्थानं दृश्यते । संस्त्यायाच्चागमने निर्ज्ञाते विशेषपरिज्ञानाय 'कुत आगच्छती'ति प्रष्टव्ये ग्रामशब्दोच्चारणाद्विशेषवाची ग्रामशब्दोऽनेन प्रयुक्त इति प्रतीयते । संस्त्यायो–निवासः । ब्राह्मणकर्षकपुरुषप्रधानो देशो–ग्रामः । गोमहिष्यादियुक्तो–घोषः । प्राकारपरिखाऽन्वितं श्रेणीधर्मयुक्तसंस्थानं–नगरं । प्राकारपरिखाऽयुक्तस्तु श्रेणिधर्मान्वितो देशः–संवाहः।न च नगरशब्दसन्निधाने गोबलीवर्दन्यायेन विशिष्टग्रामग्रहणाय संवाहादेनिवृत्तये नगरग्रहणं, संवाहादिनिवृत्तेरनिष्ट-

उ.] 'पूर्वपदस्य चे'त्युक्तेरन्यत्रोत्तरपदवृद्धिविषये पूर्वपदे वृद्ध्यभावबोधनादयमवकाशः । द्व्याशीतिके उत्तरसंबन्ध्यच एवोभयप्राप्तेर्विप्रतिषेधोपपत्तिः । फलविशेषपर्यवसायिनोर्द्वयोः संभवस्याऽभावाद्विप्रतिषेधमूलमसंभवोऽत्राप्यस्तीत्यन्ये ।

प्रतिपादितमिति । अनन्तरत्वादचामादिवृद्धेरेव स निषेध इति तत्सन्नियोगशिष्ट ऐजागमः स्यादिति भावः । [ उत्तरपदस्य ] ॥

प्राचां ग्राम । ननु ग्रामः समूहो, नगरं देशविशेष इत्यर्थभेदात्तदावश्यकमत आह—यद्यपीति । निकायः–समूहः । भाष्ये–आगत इति । ग्रामादिति । 'कुतो भवान्ग्रामादागत इति पृच्छती'त्यन्वयः । 'कुतो भवानागच्छति ग्रामा'दिति क्वचित्पाठः । सामान्यशब्दस्यापीति । एवञ्च ग्रामशब्दो जननिवाससामान्ये

१ हिः क्वचिन्न । २ इदं वार्तिकमिति गौडाः, भाष्यमित्यन्ये ।

ती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ विशिष्टलिङ्गो नदीदेशोऽग्रामा' इत्यत्र नगरप्रतिषेधश्चोदितः स न वक्तव्यो भवति॥ यद्येतज्ज्ञाप्यते–'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्ता'दित्यत्र नगरग्रहणं कर्तव्यम् । बाहीकग्रामेभ्यश्च नगरग्रहणं कर्तव्यम् । 'दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु'[1] । नगरग्रहणं कर्तव्यम् । इदं चतुर्थं ज्ञापकार्थम् । तत्राऽतिनिर्बन्धो[2] न लाभः । तस्माद्यस्मिन्नेव ग्रामग्रहणे नगरग्रहणं नेष्यते तस्य प्रतिषेधो वक्तव्यः ॥

**सङ्ख्यायाः संवत्सरसङ्ख्यस्य च ॥ ७।३।१५ ॥**

॥*॥ संवत्सरग्रहणमनर्थकं परिमाणान्तस्येति कृतत्वात् ॥*॥ संवत्सरग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ 'परिमाणान्तस्येति कृतत्वात्' । परिमाणान्तस्याऽसंज्ञाशाणयो'रित्येव सिद्धम् ॥*॥ ज्ञापकं तु कालपरिमाणानां[3] वृद्धिप्रतिषेधस्य ॥*॥ [एवं तर्हि ज्ञापयत्याचार्यः—'कालपरिमाणानां[4] ] वृद्धिर्न भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ द्वैरात्रिकः त्रैरात्रिकः–अत्र वृद्धिर्न भवति ॥ नैतदस्ति प्रयोजनं, नास्त्यत्र विशेषः सत्यां वोत्तरपदवृद्धा[5]वसत्यां वा ॥ इदं तर्हि–द्वैसमिकः त्रैसमिकः ॥ इदं चापि प्रयोजनं–द्वैरात्रिकः त्रैरात्रिकः ॥ ननु चोक्तं'नास्त्यत्र[6] विशेषः सत्यां वोत्तरपदवृद्धावसत्यां वे'ति ?॥ अयमस्ति विशेषः–यद्यत्रोत्तरपदवृद्धिः स्यादचामादेर्वृद्धिर्न स्यात् ॥

---

**प्र.]** त्वात् । उदीच्यग्रामाच्चेति । 'मानगर'मित्यादावचर्थम् । वाहीकग्रामेभ्यश्चेति । 'शाकलिक' इत्याद्यर्थम् । दिक्शब्दा इति । 'पूर्वपाटलिपुत्र'मित्यादौ पूर्वपदान्तोदात्तार्थम् । अतिनिर्बन्ध इति । अतिगौरवम् । न लाभ इति । लाघवम् । [प्राचां]

**सङ्ख्यायाः । संवत्सरग्रहणमिति ।** कालः क्रियापरिच्छेदहेतुत्वात्परिमाणं, तद्विशेषवाची संवत्सरशब्द इति भावः । **द्वैरात्रिक इति ।** द्वे रात्री अधीष्ट इति तद्धितार्थे समासे 'रात्र्यहःसंवत्सराच्चे'ति वा खविधानात्पक्षे ठञ् । **द्वैसमिक इति ।** अधीष्टादिषु 'समायाः खः' 'द्विगोर्वे'ति पक्षे ठञ् । **अचामादेर्वृद्धिर्न स्यादिति ।** 'सत्यपि संभवे बाधनं भवती'ति न्यायात् । **अपर आहेति ।** पूर्वं विशेषविषयं

---

**उ.]** तद्विशेषे चेति भावः। अतएव भाष्ये 'य एव ग्रामस्तन्नगरमिति संस्त्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह' इति चोक्तं । **श्रेणी**–सङ्घविशेषः । **तद्धर्मः**–संभूयोपादानाऽशनं । **प्राकारेति ।** प्राकारपरिखाभ्यामयुक्त इत्यर्थः । **शाकलिक इति ।** शाकलं नाम बाहीकेषु नगरम् । लाभपदार्थमाह–**लाघवमिति** । एवञ्चाऽत्र नगरग्रहणं प्रत्याख्यातम् ॥ [ **प्राचां ग्रामनगराणाम्** ] ॥

**सङ्ख्यायाः । काल इति ।** 'परिमाणान्तस्ये'त्यत्र परिच्छेदकमात्रं परिमाणशब्देन गृह्यते , नतु सर्वतो मानमेव, शाणप्रतिषेधादिति भावः । **सत्यपि संभवे**

---

१ 'वानराटेषु' । २ 'निर्वधः' पा० । ३ इदं क्वचिन्न । ४ अयं पाठो न सार्वत्रिकः । ५ 'वोत्तरवृद्धा' पा० । ६ 'अस्त्यत्र' पा० ।

अपर आह ॥*॥ ज्ञापकं तु कालपरिमाणानां परिमाणाऽग्रहणस्य ॥*॥ एव तर्हि ज्ञापयत्याचार्यः–'कालपरिमाणानां परिमाणग्रहणेन ग्रहणं न भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ 'अपरिमाणबिस्ताचिकम्बल्येभ्यो न तद्धितलुकि'–द्विवर्षा त्रिवर्षा। परिमाणपदासेन पर्युदासो न भवति ॥

**प्रवाहणस्य ढे ॥ ७।३।२८ ॥**

परस्य वृद्धिर्नैत्यनुवर्तते उताहो न ? ॥ किं चातः ? ॥ यद्यनुवर्तते प्रवाहणेयी भार्याऽस्येति प्रवाहणेयीभार्यः,'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधो न प्राप्नोति। अथ निवृत्तं, न दोषो भवति ॥ यथा न दोषस्तथास्तु ॥ अथवा पुनरस्त्वनुवर्तते। ननु चोक्तं–"प्रवाहणेयी भार्यास्य प्रवाहणेयीभार्यः–वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो न प्राप्नोती"ति[1] ॥ नैष दोषः, मा भूदेवं जातेश्चेत्येवं[2] भविष्यति ॥ [प्रवाहणस्य ढे] ॥

**यथातथयथापुर्[3]योः पर्यायेण ॥ ७।३।३१ ॥**

॥*॥ अयं योगः शक्योऽवक्तुम्॥*॥कथम्–अयाथातथ्यम् आयथातथ्यम्

प्र.] ज्ञापनमाश्रितम्। इदानीं तु सामान्यविषयमिति भेदः। द्विवर्षेति। द्वेवर्षे भृता। तमधीष्ट इति ठञ्। तस्य 'वर्षाल्लुक्चे'ति पक्षे लुक्। 'द्विगो'रिति ङीप्प्राप्तौ 'ऽपरिमाणे'ति प्रतिषिद्धः। [संख्यायाः संवत्सरसङ्ख्यस्य च] ॥

प्रवा। 'पूर्वस्य तु वे'ति वर्त्तते। तत्र यदा पूर्वपदस्य वृद्धिर्नास्ति तदोत्तरपदस्य वृद्धिभावाऽभावयोः श्रुतौ विशेषाऽभावाद्विशेषान्तरजिज्ञासया प्रश्नः–**परस्येति**। **प्रवाहणेयीति**। 'शुभ्रादिभ्यश्चे'ति ढक्। ननु वृद्धेर्निमित्तं यस्मिन् णकारादिः स वृद्धिनिमित्त इत्याश्रितम्। ततोऽसत्यामपि वृद्धौ वृद्धिनिमित्तव्यपदेशसद्भावात् पुंवद्भावप्रतिषेधो भविष्यति। नैतदस्ति। ञणकानां वृद्धिमुत्पादयतामेव वृद्धिं प्रति निमित्तत्वं नाऽन्यदा। यथा 'स्नुक्रमोरनात्मनेपदनिमित्ते' इत्यत्र सत्येवात्मनेपदे स्नुक्रमोरनात्मनेपदनिमित्तत्वादिडभावो, नाऽसति। **जातेरिति**। 'गोत्रं च चरणैः सहे'ति जातिवाचित्वात्। अनुवृत्तेरेवं प्रयोजनाऽभावः। [**प्रवाहणस्य ढे**]

उ.]**इति**। 'हृद्भगसिन्ध्वन्ते' इति पूर्वोक्तज्ञापकादित्यपि बोध्यम्। **इति भेद इति**। असङ्ख्यापूर्वपदे परिमाणान्तस्येत्यस्याऽप्रवृत्तेः। संज्ञाविषये त्वनभिधानं बोध्यम्। अन्यथा तद्विषये संवत्सरग्रहणस्य चारितार्थ्येन ज्ञापकं भज्येत।[**सङ्ख्यायाः संवत्सर**]॥

**प्रवाहणस्य**। भाष्ये–**परस्य वृद्धिर्नेति**। उत्तरपदाधिकारात्प्राप्तिः। **वृद्धिमुत्पादयतामिति**। फलोपहित एव निमित्तशब्दो मुख्य इति भावः। **जातीति**। अनन्तराऽपत्येऽपि गोत्रत्वारोपेण प्रत्ययात्प्रवाहणेऽपि सर्वथा जातिरेवेति बोध्यम्। **प्रयोजनाभाव इति**। हरदत्तस्तु तत्संबन्धाज्जातेश्चेत्यनित्यं, तेनौपसङ्ख्यानिकस्य न निषेध इत्याह। [**सङ्ख्यायाः संवत्सरसङ्ख्यस्य च**] ॥

१ इतिः क्वचिन्न। २ 'जातेरित्येवं' पा०। ३ इदं भाष्यमित्यन्ये।

अयाथापुर्यम् आयथापुर्यम् ?॥ यदा तावत्पूर्वपदस्य वृद्धिस्तदैवं विग्रहः करिष्यते--न यथातथा अयथातथा, अयथातथा भावः आयथातथ्यम् । यदोत्तरपदस्य वृद्धिस्तदैवं विग्रहः करिष्यते–यथातथाभावो याथातथ्यम् । न याथातथ्यम्–अयाथातथ्यम् ॥ [ यथातथयथापुरयोः पर्यायेण ]

## हनस्तोऽचिण्णलोः ॥ ७।३।३२ ॥

॥* हन्तेस्तकारे तद्धिते प्रतिषेधः ॥ * ॥ हन्तेस्तकारे तद्धिते प्रतिषेधो वक्तव्यः । वार्त्रघ्नं भ्रौणघ्नम् ॥*॥ उक्तं वा॥*॥ किमुक्तम् ? ॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धमिति ॥ [ हनस्तोऽचिण्णलोः]

## आतो युक् चिण्कृतोः ॥ ७।३।३३ ॥

कृद्ग्रहणं किमर्थम् ?॥ इह मा भूत्–ददौ दधौ ॥ नैतदस्ति प्रयोजनम्, अचिण्णलोरिति वर्तते ॥ यद्यचिण्णलोरिति वर्तते,–अदायि[3] अधायीत्यत्र न प्राप्नोति ॥ वचनाच्चिणि भविष्यति–अचिण्णलोरिति वर्तते ॥ एवमपि चौडिः

प्र.] यथा । न यथातथेति । 'यथातथे'त्ययं निपातोऽविपरीतार्थवृत्तिरिति केचिदाहुः । अन्ये तु यथातथाशब्दयोः सुप्सुपेति समास एतदर्थ इत्याहुः । ततो नञिति समासे कृते ब्राह्मणादिषु दर्शनात् ष्यञ् । स्वरेऽपि नास्ति विशेषः। 'आयथातथ्य'मित्यस्य ञित्वादाद्युदात्तत्वात्।अयाथातथ्यमित्यस्याप्यंव्ययपूर्वपदप्रकृतिस्वरत्वात्। प्रत्ययान्तरार्थं त्वेतन्न भवति, अनभिधानादेताभ्यां प्रत्ययाऽन्तराभावात् । [यथात]

आतो । ददाविति । उत्तमस्य णलो णित्त्वाऽभावपक्षे सावकाशमौत्वं णित्त्वे परत्वाद्युग्बाधेत । अदायीति । सूत्रे चिणो निमित्तत्वेनोपादानादचिण्णलोरित्यनुवर्तनाच्च विधिनिषेधयोः पर्यायः स्यात्। वचनादिति। 'आतो युक् चिणि चे'ति

उ.] यथातथाय । एतौ पदार्थानतिवृत्तावव्ययीभावौ, तथा भावमनतिक्रान्तं यथातथं–सत्यं । पुरा यथाभूतं यद्वस्तु तदद्यापि तथाभावमनतिक्रान्तं–यथापुरम् । अतएव सूत्रे ह्रस्वनिर्देश इति केचित् । एतच्च 'यथातथाभाव' इति भाष्येण विरुध्यते । तस्मात्सूत्रेऽपि दीर्घपाठ एवोचित इति परे । अयं निपात इति । विशिष्टो निपात इत्यर्थः । अविपरीतार्थः–सत्यरूपोऽर्थः । एतदर्थ इति । सत्यरूपार्थ इत्यर्थः । [ यथातथायथापुरयोः पर्यायेण ] ॥

आतो युक् । ननु निरवकाशत्वाण्णल औत्वं बाधकं स्यादत आह—उत्तमस्येति । इदमुपलक्षणं—भूतपूर्वगत्यौत्वस्य, दरिद्रातेरालोपे प्रवृत्त्या चारितार्थ्यात् । विषयभेदेनाऽपवादत्वाऽभाव इति तु नेत्युक्तम् । पर्यायः स्यादिति। एवञ्च 'न प्राप्नोती'ति भाष्यस्य पक्षे न प्राप्नोतीत्यर्थ इति भावः । असन्दिग्धो विधिरेवेति । तदुक्तं भाष्ये–'वचनाच्चिणि भविष्यत्यचिण्णलोरिति वर्तते' इति । इदं प्रत्यक्षं

१ 'तद्धितप्रति' । २ मृजेर्वृद्धिः ( ७-२-११४ ) इत्यत्रोक्तम् ।
३ 'आदायि' 'आधायि' ।

वालाकिरित्यत्र प्राप्नोति ॥ लोपोऽत्र बाधको भविष्यति ॥ इदमिह सम्प्रधार्यं–लोपः क्रियतां युगिति,–किमत्र कर्तव्यं ?॥ परत्वाद्युक् ॥एवं तर्ह्यचामादेरिति वर्तते । यत्राचामादिराकारस्तत्र युगिति ॥ एवमपि ज्ञा देवता अस्य स्थालीपाकस्य ज्ञः स्थालीपाकः–अत्र प्राप्नोति । तस्मात्कुग्ग्रहणं कर्तव्यम्॥

## नोदात्तोपदेशस्य मान्तस्याऽनाचमेः ॥ ७।३।३४ ॥

अत्यल्पमिदमुच्यते–अनाचमेरिति ॥ [॥*॥अनाचमिकमिवमीनाम् ॥*॥] अनाचमिकमिवमीनामिति वक्तव्यम् । आचामः कामः वामः ॥ [ नोदात्तोप]

## शाच्छासाह्वाव्यावेपां युक ॥ ७।३।३७ ॥

॥*॥ णिप्रकरणे धूञ्प्रीञोर्नुग्वचनम् ॥*॥ णिप्रकरणे धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति प्रीणयति ॥*॥ पातेर्लुग्वचनम् ॥*॥ पालयति ॥

## प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥ ७।३।४४ ॥

'स्थ'ग्रहणं किमर्थम् ?॥ इदं विचारयिष्यते–"इत्वे कग्रहणं सङ्घातग्रहणं

---

प्र.]चिणः साक्षादुपादानान्निषेधो न भविष्यति। चिणि विधिः प्रत्यक्षशिष्टत्वादसन्दिग्धः, निषेधस्तु णलर्थ एवानुवर्तते अथ चिणर्थोऽपीति सन्दिग्ध इत्यसन्दिग्धो विधिरेव प्रवर्तते । अचामादेरिति वर्तत इति । नन्वेवं दरिद्रायके युङ्ग प्राप्नोति । एवं तर्हि दोषान्तरोपन्यासादयं दोषो नोक्तः।तदाह—**एवमपीति** । आदिवद्भावादत्र प्रसङ्गो यथा 'दाय' इत्यादौ । [ आतो युक् ] ॥

**नोदा** । **काम इति** । 'आयादय आर्धधातुके वे'ति यदा णिङ्नास्ति तदा घञि वृद्धिनिषेधस्य पर्युदासः । 'विश्रामशब्दस्त्वसाधुरेवोद्यमोपरमौ, 'संज्ञापूर्वको विधिरनित्य' इति वृद्ध्यभावात् । [ नोदात्तोप ] ॥

**शाच्छा** । **पातेर्लुगिति** । यद्यपि 'पाल रक्षणे' इत्यस्य पालयतीति सिध्यति तथापि पातेःपुङ्निवृत्तये लुगागमविधानम् । लुग्विकरणत्वात्तस्य युकोऽप्रसङ्गः।

**प्रत्ययस्था** । **स्थग्रहणमिति** । कादिति वर्णग्रहणं, न च वर्णमात्रं ककारः

---

उ.] तदानुमानिकमित्यर्थः । **आदिवद्भावादिति** । 'आद्यन्तवदेकस्मि'न्नित्यनेनाऽचामादित्वमिति भावः । [ आतो युक् चिण्कृतोः ] ॥

**नोदात्तो** । ननु कर्मेर्णिङि वृद्धौ णिलोपे कामः सिद्धोऽत आह—**आयादय इति** । **उद्यमोपरमेति** । तयोरनुदात्तोपदेशत्वादिति भावः । **वृद्ध्यभावादिति** । घञर्थे के साधु इत्यन्ये । [ नोदात्तो ] ।

**शाच्छा** । **युग्निवृत्तये इति** । 'अर्तिह्री'ति प्राप्तपुग्निवृत्तये इत्यर्थः । नन्वनेन पुङ्निवृत्तय इति वक्तुं युक्तमत आह—**लुग्विकरणत्वादिति** ।

---

१ 'वालाङ्कि' पा०। २ केचित्तु 'वक्तव्य'मित्यन्तं वार्त्तिकमाहुः। 'अवमिचमिकमीनाम्' पा०। ३ 'चामः' । ४ आवामः पा० । ५ लीलोर्नुग्लुकौ ७।३।३९ इत्यस्यापीह क्वचिदुल्लेखः । ६ 'णिच्प्रक' 'चिण्प्रक' पा० ।

वा स्याद्वर्णग्रहणं वे''ति। तद्यदा सङ्घातग्रहणं तदा स्थग्रहणं कर्तव्यम् । इहापि यथा स्यात्–कारिका हारिका । यदा हि वर्णग्रहणं तदा केवलः ककारः प्रत्ययो नास्तीति कृत्वा वचनाद्भविष्यति ॥

अथाऽसुप इति, कथमिदं विज्ञायते–'असुब्वतोऽङ्गस्ये'ति, आहो स्विन्न चेत्सुपः पर आ'बिति॥ किं चातः?॥ यदि विज्ञायते–असुब्वतोऽङ्गस्येति,–बहुचर्मिका–अत्र न प्राप्नोति । अथ विज्ञायते–'न चेत्सुपः पर आ'जिति, न दोषो भवति ॥ यथा न दोषस्तथाऽस्तु ॥

इदं विचार्यते–इत्वे कग्रहणं सङ्घातग्रहणं वा स्याद्वर्णग्रहणं वेति ? ॥

---

प्र.]प्रत्ययोऽस्तीति सामर्थ्यात्प्रत्ययावयवे प्रत्ययशब्दो वर्तिष्यत इति प्रश्नः । इतरः पक्षान्तरे प्रयोजनमाख्यातुमाह–**इदमिति** । वक्ष्यमाणस्य बुद्ध्या प्रत्यक्षीकृत्य परामर्शः। **इहापीति** । अन्यथा 'दत्तिके'त्यादावेव स्यात्।अज्ञाताद्यर्थविवक्षायामत्र कप्रत्ययः । स्थग्रहणे तु क्रियमाणे सर्वत्र भवति, प्रत्ययस्यापि व्यपदेशिवद्भावेन प्रत्ययस्थत्वात् ।**असुब्वत इति** । न सुब्वदसुब्वदिति नञ्समासः । 'असुप' इत्यस्य बहुव्रीहित्वप्रदर्शनाय भाष्यकारेण लाघवं नाश्रितं। तदाश्रयणेहि बहुव्रीहिरेव न्याय्यो न तु मतुबन्तः समासः । तत्रायं प्रश्नः–किमसुप इति बहुव्रीहिराश्रीयते,–न विद्यते सुब्यस्मिंस्तदसुबिति, अथ तत्पुरुषः प्रसज्यप्रतिषेधश्च,–न चेत् सुपः पर आबिति ?। प्रत्ययग्रहणेन तदन्तविधेः सुबन्तादितिं बोद्धव्यम् । **बहुचर्मिकेति** । बहूनि चर्माणि अस्यामिति बहुव्रीहिः । प्रत्ययलक्षणेन सुब्वदेतदङ्गमिति इत्वं न प्राप्नोति । 'न लुमताङ्गस्ये'ति निषेधोऽत्र नास्ति, लुमता लुप्ते यदङ्गं तस्य कार्ये स प्रतिषेधः, इदं तु टाप्यङ्गम् । **न दोषो भवतीति** । चर्मशब्दः सुबन्तो, न च तस्मातपर आप् , व्यवधानात् । बहवः परिव्राजका अस्यां सा बहुपरिव्राजकेति अत्र तु प्रत्ययलक्षणेन सुबन्तात्परिव्राजकशब्दात्पर आबिति प्रतिषेधः प्रवर्तते । पर्युदासाश्रयणे समासादसुबन्तात्पर आबिति स्यादेवाऽत्रेत्वम् । तथाऽसुप इत्यनर्थकं स्यादिति प्रसज्यप्रतिषेध आश्रीयते । **इत्व इति** । यद्यकारान्तस्य शब्दस्य

---

उ.] **प्रत्ययस्थात्** । ननु वक्ष्यमाणस्याऽप्रत्यक्षत्वात्कथमिदमा परामर्शोऽत आह–**वक्ष्यमाणस्येति** । ननु स्थग्रहणे दत्तकेत्यादौ प्रत्ययस्य कशब्दस्य प्रत्ययस्थत्वाऽयोगोऽत आह–**प्रत्ययस्यापीति** । **प्रसज्येति** । एवञ्च सौत्रत्वादसमर्थसमास इति भावः । ननु सुब्लोपात्कथमेतत्सुब्वदङ्गमत आह—**प्रत्ययलक्षणेनेति** । **टाप्यङ्गमिति** । आपि परे यदङ्गमविद्यमानसुप्कं तदवयवाऽकारस्य प्रत्ययस्थकात्पूर्वस्येत्त्वमिति सूत्रार्थादिति भावः। **चर्मशब्दः सुबन्त इति**। 'गोस्त्रियो'रिति सूत्रस्थभाष्यप्रामाण्येनबहु जस् चर्मन् जस् इत्यवस्थायां उत्तरजसुत्तरं कपि समासान्ते पूर्वसुपोस्तद्धितान्तत्वात्प्रातिपदिकत्वेन लुक्यपि प्रत्ययलक्षणेन सुबन्तत्वात्कपः पूर्वभागस्य

**कश्चात्र विशेषः** ॥*॥ इत्वे कग्रहणं सङ्घातग्रहणं चेदेतिकास्वप्राप्तिः ॥*॥ **इत्वे कग्रहणं सङ्घातग्रहणं चेदेतिकास्वप्राप्तिः । एतिकाश्चरन्ति ॥ वचनाद्भविष्यति ॥ अस्ति वचने[2] प्रयोजनम् ॥ किम् ? ॥ कारिका हारिकेति[3] ॥ अस्तु तर्हि वर्णग्रहणम्** ॥*॥ वर्णग्रहणं चेद्व्यवहितत्वादप्रसिद्धिः[4] ॥*॥ **वर्णग्रहणं चेद्व्यवहितत्वान्न प्राप्नोति । कारिका हारिका । अकारेण व्यवहितत्वान्न प्राप्नो-**

**प्र.]** कादिति निर्देशः ततः सङ्घातग्रहणम् । अथाऽऽगन्तुनाऽकारेण उच्चारणार्थेन निर्देशः, ततो वर्णग्रहणम् । ननु वर्णग्रहणे स्थग्रहणस्यानर्थक्यात् स्थग्रहणात्सङ्घातग्रहणेन भाव्यम् । नैतदस्ति । कोऽत्र निर्दोषः पक्ष इति विचार्यते । यदि च सङ्घातग्रहणपक्षो दोषवान्, तन्मा कारि स्थग्रहणमुपचयो भविष्यति । **एतिका इति** । एतदोऽकचि जसि त्यदाद्यत्वे टापीत्वे च रूपम् । अकचोऽकार उच्चारणार्थो न श्रवणार्थः । तेन धकिद्भिरकुदित्यादि सिध्यति । **वचनादिति** । यथैव कारिकेत्यादावेकादेशे कृतेऽनच्के ककारे संपन्ने भूतपूर्वगत्या भवति, एवमकज्विधिसूत्रे कशब्दः सङ्घात उच्चारित इति तदाश्रया इत्प्रवृत्तिः । **अस्तीति** । एकादेशस्य पूर्वविधौ स्थानिवद्भावात् । अथवा **वचना**दित्यस्यायमर्थः—न यासयोरिति वचनाज्ज्ञापकाद्भविष्यति । इतरस्त्वगृहीताभिप्राय आह—**अस्तीति** । ततश्चाभिप्रायमप्रकाश्य पक्षान्तरमाश्रयति—**अस्तु तर्हीति । व्यवहितत्वादिति** । ननु चापीत्यनेन ककारो न विशेष्यते, किं तर्ह्यकारः—'आपि च परतोऽकारस्य कात्पूर्वस्ये'ति व्यवहितस्याऽपि पूर्वत्वादित्वं

**उ.]** समाससंज्ञा । यद्वा कप्समाससंज्ञयोर्युगपत्प्रवृत्तिः । कपः समासावयवत्वं तु वाचनिकमेव । समासान्तविषये च सुबन्तात्तद्धितोत्पत्तिरित्यस्य त्यागः, प्रत्ययस्य निरर्थकत्वातपरिपूर्णं पदमित्यादिन्यायविषयाऽभावादिति भावः । एतेन 'कबन्तस्य प्रातिपदिकत्वेन ततः सुपि ततः समास' इत्यपास्तं, तावताऽप्यनेकसुबन्ताभावेन समासस्य दुरुपपादत्वात् । अत्रे त्वासिद्धेश्चेति दिक् । 'असुप' इत्यस्य प्रत्युदाहरणं दर्शयति—**बहव इति । उपचय इति** । तदकारणाल्लाघवमित्यर्थः । न च वर्णग्रहणे स्थग्रहणाऽभावे कान्तात्प्रत्ययादित्यर्थः स्यादिति वाच्यं, 'क्षिपकादीना'मिति निषेधवैयर्थ्यापत्तेः । एवञ्च पूर्वग्रहणमपि मास्तु, 'प्रत्यये की' त्येव युक्तं, कादावित्यर्थस्तु 'न यासयो'रिति निषेधसामर्थ्यान्नेति भावः । **उच्चारणार्थ इति**। एवञ्च प्रत्ययस्थकशब्दस्याऽभाव इति भावः । ननु वचनस्य कारिकादिरवकाशः स्यादत आह—**यथैवेति। एकादेश इति**। अन्तरङ्गत्वात् । वार्णादाङ्गमिति तु विभिन्नस्थानिकत्वान्नेति भावः । **स्थानिवद्भावादिति** । नचैवमकारस्य नाप्परत्वं, ककाराऽकाराभ्यां व्यवधानादिति वाच्यम् , सामर्थ्येनाऽदोषात् । अतएव 'न यासयो'रित्यादि चरितार्थम् । अतएवैतिकाशब्दे त्रिभिर्व्यवायेऽपि न दोषः। भाष्ये—**अकारेणेति** । ककारेण व्यवधानन्तु वचनात्सोढव्यमेवेति भावः । **व्यवहितस्यापीति** । पूर्वग्रहणमुभयान्वयी-

१ इदं प्रायो लुप्तम् । २ 'अस्तिह्यन्यद्वचने' । ३ इतिः क्वचिन्न । ४ 'दप्राप्तिः' पा०।

ति ॥ **एकादेशे कृते नास्ति व्यवधानम्** ॥ 'एकादेशः पूर्वविधौ स्थानिवद्भवती'ति स्थानिवद्भावाद्व्यवधानमेव॥एवं तर्ह्याहाऽयं–'प्रत्ययस्थात्कात्पूर्वस्ये'ति, न क्व चिदव्यवधानं, तत्र वचनाद्भविष्यति ॥*॥ वचनप्रामाण्यादिति चेद्रथकव्यादिष्वतिप्रसङ्गः ॥*॥ वचनप्रामाण्यादिति चेद्रथकव्यादिषु दोषो भवति । रथकव्या गर्गकाम्या ॥ नैष दोषः । येन नाऽव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । केन च नाऽव्यवधानम् ? ॥ वर्णेनैकेन ॥ सङ्घातेन पुनर्व्यवधानं भवति, न भवति च ।

अथ वा पुनरस्तु सङ्घातग्रहणम्॥ ननु चोक्त"मित्वे कग्रहणं सङ्घातग्रहणं चेदेतिकास्वप्राप्ति"रिति ॥ परिहृतमेतत्–'वचनाद्भविष्यती'ति ॥ ननु चोक्तम'स्ति वचने प्रयोजनम् । किम् । कारिका हारिके'ति ॥ अत्राप्येकादेशे कृते व्यपवर्गाऽभावान्न प्राप्नोति ॥ अन्तादिवद्भावेन व्यपवर्गः ॥ उभयत आश्रये नान्तादिवत् ॥ एवं तर्हि–'एकादेशः पूर्वविधौ स्थानिवद्भवती'-

प्र.] प्रवर्तिष्यते। नैतदस्ति। रथकव्यादावप्येवं प्रसङ्गात् । किं च 'कात्पूर्वस्ये'ति पूर्वग्रहणं कृतं न त्वापि पूर्वस्येति । ततश्च निर्दिष्टपरिभाषोपस्थानाद्व्यवधाने न प्राप्नोति । **तत्र वचनादिति** । आनन्तर्यमसम्भवान्नाश्रीयते । **रथकव्येति** । रथानां समूह इति 'इनित्रकव्यचश्चे'ति कव्यच् । **गर्गकाम्येति** । गर्गमिच्छत्यात्मन इति काम्यच्प्रत्ययान्तादप्रत्ययादित्यकारप्रत्ययः । **येन नाव्यवधानमिति** । नानन्तर्यं परित्यज्यते किंतु यावत्संभवति तावदाश्रीयते। यर्येवमेतिकाइत्यत्र द्वाभ्यामकाराभ्यां व्यवधानादित्वं न प्राप्नोति । एकस्तसंबन्ध्यकारो द्वितीयस्त्यदादीनाम इत्यकारः । नैष दोषः । द्वयोकारयोरेकादेशे कृते टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाऽकारेण व्यवधानं, न पुनः स्थानिवत्त्वप्रतिपत्तिः–यतो द्वावकारौ व्यवधायकौ स्याताम्, सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात् । **व्यपवर्गाऽभावादिति** । 'वार्णादाङ्गं बलीय' इत्येतदनाश्रित्योक्तम् । **उभयत इति** । 'आपि यः कशब्द' इत्येवमुभयमाश्रीयते । अथ त्वापि परतोऽकारस्य कात्पूर्वस्येत्याश्रयिष्यते तथाप्युभयमेवाश्रितं तुल्यकालं

उ.] त्यभिमानः। **कात्पूर्वस्येतीति**। तत्र पूर्वग्रहणं तु 'कटुके'त्यादौ परस्य कार्यित्वनिवृत्त्यर्थमावश्यकम् । **तसंबन्धीति** । तकारस्य संबन्धीत्यर्थः । **एकादेशे कृते इति** । 'अतो गुणे' इत्यनेन टापा सहैकादेशस्य स्थानिवद्भावं विना पूर्वैकादेशस्य स्थानिवत्त्वं वक्तुमशक्यं, तस्य टाबेकादेशेनापहारेणाऽदर्शनादिति भावः। **न पुनरिति**। अकारयोरेकादेशस्येति भावः । **सकृत्प्रवृत्त्येति** । 'न यासयो'रिति निषेधोऽप्यत एव चरितार्थः । **अनाश्रित्येति** । भिन्नस्थानिकत्वादिति भावः । ननु युगपदुभयाश्रयणे एव स निषेध इति तत्प्रत्याख्यानपरा'न्नैकः प्रेष्योऽविरोधार्थी युगपदुभयोः

१ 'स्यात इदाप्यसुप इति' । २ न क्वचिदप्यव्यव । ३ 'न च' पा० । ४ 'वचनाद्भविष्यती'ति वार्त्तिकमित्यन्ये' ।

ति स्थानिवद्भावाद्यपवर्गः ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-'भवत्येवं-जातीयकानामपीत्त्व'मिति यदयं 'न यासयो'रिति प्रतिषेधं शास्ति ॥

॥*॥ मामकनरकयोरुपसङ्ख्यानमप्रत्ययस्थत्वात् ॥*॥

मामकनरकयोरुपसङ्ख्यानं कर्तव्यम्। मामिका नरिका ॥ किं पुनः कारणं न सिध्यति ? ॥ 'अप्रत्ययस्थत्वात्' ॥*॥ त्यक्त्यपोश्च प्रतिषिद्धत्वात् ॥*॥ त्यक्त्यपोश्चोपसङ्ख्यानं कर्तव्यम्। दाक्षिणात्यिका इहत्यिका ॥

किं पुनः कारणं न सिध्यति ? ॥ 'प्रतिषिद्धत्वात्'। 'उदीचामातः स्थाने यकपूर्वाया' इति प्रतिषिद्धत्वात् ॥ [ प्रत्ययस्थात्कात् ] ॥

न यासयोः ॥ ७।३।४५ ॥

॥*॥ न यत्तदोः॥*॥ न यत्तदोरिति वक्तव्यम् ॥ इहापि यथा स्यात्-यकामधीमहे, तकां पचामह इति॥*॥प्रतिषेधे त्यकन उपसङ्ख्यानं॥*॥प्रतिषेधे त्यकनउपसङ्ख्यानं कर्तव्यम्। उपत्यका अधित्यका॥तत्तर्हि उपसङ्ख्यानं कर्तव्यम्?॥ न कर्तव्यम्।आचार्यप्रवृत्तिर्ज्ञापयति-'नैवंजातीयकानामित्वं भवती'ति यदयं

---

प्र.]भवति। एवंजातीयकानामिति। प्रकारवचने जातीयर्प्रत्ययः। अकज्वतामित्यर्थः। मामिकेति। ममेयं। 'युष्मदस्मदोरन्यतरस्यां खञ्चे'त्यन्यतरस्याङ्ग्रहणात्प्राग्दीव्यतोऽणित्यण्। 'तवकममकावेकवचने' इति ममकादेशः। 'केवलमामके'त्यनेन संज्ञाछन्दसोर्ङीपो नियमादन्यत्र टाप्।नरं कायतीति नरिका। दाक्षिणात्यिकेति। दक्षिणस्मिन्देशे [-दक्षिणा]। 'दक्षिणादाच्'। तत्र भवा 'दक्षिणापश्चात्पुरसस्त्य'गिति त्यक्। अज्ञाताद्यर्थविवक्षायां कः। इह भवा—इहत्यिका। 'अव्ययात्त्यप्'। पूर्ववत्कः। 'उदीचामात' इति पाक्षिकप्रतिषेधप्रसङ्गे वचनम् ॥

न यासयोः। या सेति प्रथमैकवचनान्तयोरुपादानाद्विभक्त्यन्तरे प्रतिषेधाऽप्रसङ्गादाह-(न) यत्तदोरिति। उपत्यकेति। 'उपाधिभ्यां त्यकन्नासन्नारूढयो'रिति त्यकन्। नैवंजातीयकानामिति। येऽनेकाचो व्यञ्जनादयः प्रत्ययाः संज्ञाविषयास्तेषामित्यर्थः। यदयमिति। ननु च तद्धितलुगर्थमिकारोच्चारणं स्यात्, अन्यथा पञ्चभिर्मृत्तिकाभिः क्रीत इत्या'र्हा'दिति ठकोऽध्यर्धपूर्वेति लुकि कृते' 'लुक्तद्धितलुकी'ति टापो लुकि निमित्ताऽभावादित्वं न स्यात्—पञ्चमृत्तिक इति। अन्तरङ्गांश्च विधीन्सर्वो-

---

उ.]करोती'त्यादिकाङ्क्षाष्याल्लभ्यतेऽत आह—तुल्यकालमिति। 'तुल्यकालमेवोभयमाश्रित' मित्यन्वयः। आप्ककारश्च युगपदकारविशेषणत्वेनाश्रिताविति भावः ॥

न यासयोः। यत्तदोरिति। सूत्रे स्वरूपं न विवक्षितमिति तात्पर्यं। संज्ञाविषया इत्यस्य प्रयोजनं चिन्त्यम्। ननु लुकः पूर्वमन्तरङ्गत्वादित्त्वमत

---

१ 'ममक' पा०। इदं प्रायो लुप्तम्। २ अत्रस्य व्याख्यानं-'न प्रत्ययस्थः ककारः' इति लुप्तमितिमन्ये। ३ अमात्यिकेति पा०। ४ इदं प्रायो लुप्तम्। ५ 'यकां यकामधीते' पा०। ६ 'तकां तकां' पा०। ७ इदं प्रायिकम्।

**'मृदस्तिक'**मितीत्वभूतं निर्देशं करोति ॥*॥पावकादीनां छन्दस्युपसङ्ख्यानं ॥*॥ **पावकादीनां छन्दस्युपसङ्ख्यानं कर्तव्यम् । हिरण्यवर्णाः शुचयः पावकाः । ऋक्षका**[2]**: अलोमकाः ॥ छन्दसीति किमर्थम् ? ॥ पाविका अलोमिका ॥*॥** आशिषि[3] चोपसङ्ख्यानं ॥*॥ **आशिषि चोपसङ्ख्यानं कर्तव्यम् । जीवतात् जीवका । नन्दतान्नन्दका । भवताद्भवका ॥*॥** उत्तरपदलोपे[3] चोपसङ्ख्यानं ॥*॥ **उत्तरपदलोपे चोपसङ्ख्यानं कर्तव्यम् । देवदत्तिका देवका । यज्ञदत्तिका यज्ञका ॥*॥** क्षिपकादीनां[3] चोपसङ्ख्यानम् ॥*॥ **क्षिपकादीनां चोपसङ्ख्यानं कर्तव्यम् । क्षिपका ध्रवका ध्रुवका चटका ॥*॥** तारका[3] ज्योतिष्युपसङ्ख्यानं ॥*॥ **तारका ज्योतिष्युपसङ्ख्यानं कर्तव्यम् । तारका । ज्योतिषीति किमर्थम् ? ॥ तारयतीति तारिका दासी ॥*॥** वर्णका तान्तवे उपसङ्ख्यानं ॥*॥ **वर्णका तान्तवे उपसङ्ख्यानं कर्तव्यम् । वर्णका । तान्तव इति किमर्थम् ? ॥ वर्णिका भागुरी लोकायतस्य ॥*॥** वर्तका शकुनौ प्राचामुपसङ्ख्यानं ॥*॥**वर्तका शकुनौ**

---

**प्र.]**लुग्बाधते न सुब्लुगेव, तथा च 'सनीस्रंस' इत्यादौ नलोपो न भवति । पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ टापा सहैकादेशो न भवति । अन्यथैकादेशस्यादिवद्भावादाब्ग्रहणेन ग्रहणाल्लुकि कृतेऽकारस्य श्रवणं न स्यात् । तदेवं सति प्रयोजने न ज्ञापकमिकारोच्चारणमिति चिन्त्यमेतत् । त्यिकन्निति प्रक्रियालाघवाय स्त्रीविषयत्वाद्वक्तव्ये त्यकन्नित्यकारोच्चारणमित्त्वाऽभावस्य न ज्ञापकम् । पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादौ तद्धितलुकि अकारश्रवणार्थत्वात्तस्य ।

**पावका इति** । पुनन्ति पावयन्तीति वा पावकाः । **जीवकेति** । 'आशिषि चे'ति वुन् । **देवकेति** । 'अनजादौ च विभाषा लोपो वक्तव्य' इति दत्तशब्दस्य लोपः । **क्षिपकेति** । क्षिपेरिगुपधत्वात् के कृते अज्ञातादिषु कः । अथ वा 'कुञ्छिल्पिसंज्ञयो'रिति कुन् । **ध्रुवकेति** । 'ध्रुव गतिस्थैर्ययोः' । ध्रुवकेति । 'ध्रू विधूनने' । **वर्णकेति** । वर्णयति महत्त्वादिकं गुणमिति **वर्णका**–प्रावरणविशेषः । तन्तूनां विकारस्तान्तवम् । 'ओरञित्यञ् । **वर्णिकेति** । व्याख्यानीत्यर्थः । **भागुरी–**

---

**उ.]**आह–**अन्तरङ्गांश्चेति** । **चिन्त्यमेतदिति**। वस्तुतस्तु भाष्यप्रामाण्यादेतद्विषयेऽन्तरङ्गानपीत्यस्य ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेनाऽनित्यत्वमङ्गीकार्यम्, अस्याऽनभिधानं (चे) वेत्याहुः । 'स्त्रीविषयत्वात्प्रक्रियालाघवाय त्यिकनिति वक्तव्यमित्यन्वयः । **पुनन्ति पावयन्तीति वेति** । अर्थद्वयस्याप्युपलंभादिति भावः । **ध्रु गतीति** । पचाद्यचि कुटादित्वाद्गुणाऽभावे अज्ञातादिषु कः कुन्वा ।

**वर्णयतीति** । स्वगतं गुणं प्रकाशयतीत्यर्थः । **व्याख्यानीति** । लोका-

---

१ अत्र सर्वत्र व्याख्याभाष्यं लुप्तमासीत् । २ 'ऋभुक्षाः' पा० । ३ अत्र 'आशिषि च' 'उत्तरपदलोपे च' 'क्षिपकादीनाञ्च' 'तारका ज्योतिषि' 'वर्णका तान्तवे' 'वर्त्तिका शकुनौ प्राचाम्' इत्येवं वार्त्तिकानि केचित्पठन्ति । ४ क्वचिन्नास्ति ।

प्राचामुसङ्ख्यानं कर्तव्यम् ॥*॥ वर्त्तका शकुनिः॥ शकुनाविति किमर्थम् ?॥ वर्तिका भागुरी लोकायतस्य। प्राचामिति किमर्थम् ?॥ वर्त्तिका ॥*॥ अष्टका पितृदेवत्ये उपसङ्ख्यानम् ॥*॥ अष्टका पितृदेवत्ये उपसङ्ख्यानं कर्तव्यम् । अष्टका । पितृदेवत्य इति किमर्थम् ? ॥ अष्टिका खारी ॥*॥ वा सूतकापुत्रकावृन्दारकाणामुपसङ्ख्यानम् ॥*॥ वा सूतकापुत्रकावृन्दारकाणामुपसङ्ख्यानं कर्तव्यम् । सूतका-सूतिका । पुत्रका-पुत्रिका । वृन्दारका[2] वृन्दारिका ॥ [नया]

## उदीचामातः स्थाने यकपूर्वायाः ॥ ७।३।४६ ॥

किमर्थं स्त्रीलिङ्गनिर्देशः क्रियते न यकपूर्वस्येत्येवोच्येत ? ॥ स्त्रीविषयो य आकारस्तस्य स्थाने योऽकारस्तस्य प्रतिषेधो यथा स्यादिह मा भूत-शुभं यातीति शुभंयाः शुभंयिका । भद्रंयाः-भद्रंयिका[3] ॥*॥ यकपूर्वे धात्वन्तप्रतिषेधः ॥*॥ यकपूर्वे धात्वन्तप्रतिषेधो वक्तव्यः॥ किं प्रयोजनम् ? ॥ सुनयिका सुशयिका[4] अशोकिका अपाकिका ॥ [ उदीचामातः स्थाने ] ॥

प्र.]टीकाविशेषः। अष्टकेति। 'इष्यशिभ्यां तक'न्निति तकन्। पितरश्च देवताः पितृदेवताः, तदर्थं कर्म-पितृदेवत्यम् । 'देवतान्तात्तादर्थ्ये य'दिति यत् । अष्टिकेति । अष्टौ परिमाणमस्याः। 'संख्याया अतिशदन्तायाः क'न्निति कन् । सूतकेति । 'न सामिवचने' इति प्रतिषेधाज्ज्ञापकात्स्वार्थे कन् । पुत्रिकेति । पुत्रशब्दाच्छार्ङ्गरवादित्वात् ङीन्प्रत्ययस्ततः स्वार्थे कन् । 'केऽण' इति ह्रस्वः । तस्य पक्षेऽकारो विधीयते । वृन्दारिकेति । वृन्दमस्यास्तीति 'शृङ्गवृन्दाभ्यामारकन्प्रत्ययो वक्तव्य' इत्यारकन् ॥ [ न यासयोः ] ॥

उदीचाम् । स्त्रीविषय इति । अर्थगतं स्त्रीत्वं शब्दे समारोप्य निर्देशः कृतः । शुभंयिकेति । शुभं याति, भद्रं यातीति क्विप् । शुभंभद्रंशब्दौ निपातौ । अज्ञाताद्यर्थविवक्षायां कः । 'केऽण' इति ह्रस्वः । यकपूर्व इति । धात्वन्ताभ्यां यकारककाराभ्यां परस्याऽऽतः स्थानेऽकारस्येत्त्वप्रतिषेधस्य प्रतिषेधः, तेनेत्त्वं भव-

उ.]यतशास्त्रस्य व्याख्यानरूपो ग्रन्थविशेष इत्यर्थः।'वर्त्तिका भागुरी'त्यत्रापि वर्तिकेत्यस्य व्याख्यानीत्यर्थः[5] । इष्यशिभ्यामिति । अश्नन्ति ब्राह्मणा अस्यामित्यर्थः । स्वार्थे कनिति । सूतैव सूतकेत्यर्थः । यावादित्वादित्यन्ये। पुत्रशब्दादिति। वार्तिके 'पुत्रके'ति अकारमध्यपाठोऽपपाठः, कैयटविरोधात् । अकार इति । 'वा-अ' इति च्छेदेनेत्यर्थः। सूतकादौ त्वित्त्वबाधनार्थ एव पक्षेऽकार इति बोध्यम् । [नयास] ।

उदीचामातः स्थाने यकपूर्वायाः । स्त्रीलिङ्गनिर्देशमात्रेण कथमाकारस्य स्त्रीविषयत्वं लभ्यतेऽत आह—अर्थगतमिति । धात्वन्तशब्देन तथाभूतौ यकारकारौ लक्ष्येते इत्याह—धात्वन्ताभ्यामिति । [उदीचामातः] ॥

१ 'अष्टका पितृदेवत्ये' इत्येवं वार्त्तिकमन्ये प्राहुः। एवमग्रेऽपि । २ 'वृन्दारिका वृन्दारका' । ३ 'भद्रयिका' पा०। ४ अयं क्वाचित्कः ।५ 'व्याख्यात्री' पा०।

**भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ॥ ७।३।४७ ॥**

**एषाद्वे नञ्पूर्वे अनुदाहरणे असुप इति प्रतिषेधात् ॥ अथ भस्त्राग्रहणं किमर्थं, न अभाषितपुंस्कादित्येव सिद्धम् ?॥**॥ भस्त्राग्रहणमुपसर्जनार्थम् ॥॥ **उपसर्जनार्थोऽयमारम्भः । अभस्त्रका[2] अभस्त्रिका ॥**॥ नञ्पूर्वग्रहणानर्थक्यं चोत्तरपदमात्रस्येद्वचनात्[3] ॥॥ **नञ्पूर्वग्रहणं चानर्थकम् ॥ किं कारणम् ? ॥ 'उत्तरपदमात्रस्येद्वचनात्'[3] । उत्तरपदमात्रस्येत्वं वक्तव्यम् । निर्भस्त्रका–निर्भस्त्रिका । बहुभस्त्रका–बहुभस्त्रिका॥**॥इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये सप्तमस्य तृतीये पादे प्रथममाह्निकम् ॥॥ ७।३।१ ॥

प्र.] त्येव । शोभनो नयोऽस्याः सुनया । नास्ति शोकोऽस्या अशोका । पूर्ववत्कः।

**भस्त्रै** । पाक्षिकप्रतिषेधार्थ आरम्भः । **एषाद्वे इति** । न एषका, न द्वके इति विगृह्याऽन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इत्यकृतेषु त्यदाद्यत्वादिषु समासे कृते सुब्लुकि च समासाद्या विभक्तिस्तस्यां त्यदाद्यत्वं, ततष्टाप् । स च प्रत्ययलक्षणेन सुबन्ताभ्यां पर इत्यसुप इतीत्त्वप्रतिषेधस्य व्यापारादनेषका इत्येव भवति । तस्मादनञ्पूर्वयोरेवैतयोः पाक्षिकप्रतिषेधः–एषका एषिका, द्वके द्विके इति । एषेति प्रथमैकवचननिर्देशादन्यत्र नित्यमित्त्वम्–'एतिकाश्चरन्ती'ति । **अभस्त्रिकेति** । नास्ति भस्त्रा अस्या इति बहुव्रीहावुपसर्जनह्रस्वत्वे कृते यष्टावुत्पद्यते स भाषितपुंस्कादभस्त्रशब्दात्पर इत्युत्तरसूत्रेण पाक्षिकप्रतिषेधाऽप्रसङ्गाद्भस्त्राग्रहणम् । **नञ्पूर्वग्रहणानर्थक्यमिति** । अपिग्रहणेन केवलानां समुच्चयादन्यपूर्वाणामप्रसङ्गान्न कर्तव्यं नञ्पूर्वग्रहणम् । तत्र पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ग्रहणात्सर्वेष्टसिद्धिः॥

॥ इति **कैयटकृते महाभाष्यप्रदीपे सप्तमस्य तृतीये प्रथमाह्निकम्** ॥

उ.] **भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि** । नित्यत्वस्य प्रत्ययस्थादित्येव सिद्धेः सूत्रारम्भफलमाह—**पाक्षिकेति** । 'उदीचा'मित्यनुवर्तनादिति भावः । **प्रत्ययलक्षणेनेति** । 'अन्तर्वर्तिसुब्लुक' इति शेषः । भाष्ये–**नञ्पूर्वे**त्युपलक्षणं, सपूर्वेऽनुदाहरणे इत्यस्याऽर्थस्य, तुल्यन्यायात् । तेन परमैषकेत्येवे' त्यादि बोध्यम् ।

**प्रथमैकवचनेति** । अतएव 'एषाद्वे नञ्पूर्वे अनुदाहरणे' इति भाष्ये 'एषेत्येव'क्तम् । अविवक्षितत्वे 'एतद्वी'त्येव वदेदिति बोध्यम्। **नास्ति भस्त्रेति** । एतेनानुपसर्जनेप्याद्याचार्याणामित्यात्वबाधनार्थं भस्त्राग्रहणमित्यपास्तम् । उपसर्जने चारितार्थ्येन बाधे मानाऽभावात् । नञ्पूर्वग्रहणकरणे दोषमाह—**अन्यपूर्वाणामप्रसङ्गादिति** । अथाऽपिग्रहणेन केवलानामन्यपूर्वाणां ग्रहस्तथापि न कार्यमेवेत्याह–**तत्र पदाङ्गेति** । भाष्ये—**उत्तरपदमात्रस्येत्त्वं वक्तव्यमिति** । उत्तरपदमात्रस्य यथेत्त्वं भवति तथा तद्व्याख्येयमित्यर्थः ॥ इति **श्रीनागोजीभट्टकृते** भाष्यप्रदीपोद्योते **सप्तमस्य** तृतीये **प्रथममाह्निकम्** ॥ ७।३।१ ॥

१ इदं वार्त्तिकमितिगौडाः । २ 'अभस्त्रिका अभस्त्रका' पा० । ३ 'स्येत्त्व' पा० ।

## ठस्येकः ॥ ७।३।५० ॥

**किमिदं ठादेशे वर्णग्रहणमाहोस्वित्सङ्घातग्रहणम् ? ॥ कश्चात्र विशेषः?॥** ॥*॥ ठादेशे वर्णग्रहणं चेद्धात्वन्तप्रतिषेधः ॥*॥ **ठादेशे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः[1]। पठिता[2] । पठितुम् ॥ अस्तु तर्हि सङ्घातग्रहणं** ॥*॥सङ्घातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधः॥*॥ **सङ्घातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधो वक्तव्यः। उणादीनां तावत्–कण्ठः[3] शण्ठः वण्ठः । इह च[4] मथितं पण्यमस्य माथितिक इति,–अकारलोपे कृते तान्तादिति कादेशः प्राप्नोति । वर्णग्रहणे पुनः सत्यल्विधिरयं भवति** ॥*॥ तस्माद्विशिष्टग्रहणम् ॥*॥ **तस्माद्विशिष्टस्य ठकारस्य ग्रहणं कर्तव्यम् ॥[तत्तर्हि कर्त्तव्यम् ?।][5]**

---

प्र.] **ठस्येकः। किमिदमिति** । किं व्यञ्जनमात्रं प्रतिपिपादयिषितमागन्तुना तूच्चारणार्थेन अकारेण निर्देशोऽथ सङ्घात एव स्थानी निर्दिष्ट इति प्रश्नः । **धात्वन्तप्रतिषेध इति** । सङ्घातग्रहणे त्वेष न दोषः। पठतीत्यत्रापि ठस्यानर्थक्यादर्थवद्ग्रहणपरिभाषयाऽर्थवत्सङ्घातग्रहणादप्रसङ्गः । वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अव्यापारः, वर्णग्रहणपक्षे च ठगादिष्वकार उच्चारणार्थो, वर्णमात्रं प्रत्ययः । **कण्ठ इति** । 'कणेष्ठः' । **शण्ठ इति** । शमेः–'शमिदाच्युस्रि'ति ठः। **वण्ठ इति** । वनो'ऽन्येभ्योपि दृश्यत' इति ठः । वर्णपक्षेऽप्युणादीनां प्रसङ्गः, सत्यति सङ्घातस्य प्रत्ययत्वे । इह च सङ्घातग्रहणे ठगादयः सङ्घाता एव प्रत्ययाः प्रतिज्ञायन्ते । **माथितिक इति** । सन्निपातलक्षणपरिभाषामनाश्रित्य चोद्यते । अन्यथाऽजादिसन्निपातेन तान्तता उपजाता कथमजादिविघातनिमित्तं स्यात् । वर्णग्रहणे त्वनल्विधाविति स्थानिवत्त्वनिषेधादिकस्य कादेशाऽप्रसङ्गः । ननु तान्तादङ्गात्परस्य ठस्य कादेशो विधीयते, न चैतत्तकारान्तमङ्गं, तकारान्तात्प्रत्ययस्याऽविधानात् । नैतदस्ति । एकदेशविकृतस्यानन्यत्वादङ्गं भवति, तकारान्तं चेति कादेशः प्राप्नोत्येव । **तस्माद्विशिष्टग्रहण-**

---

उ.] **ठस्येकः** । ननु विशिष्टोच्चारणात्संशयोऽयुक्तोऽत आह—**किं व्यञ्जनेति** । ननु पठतीत्यत्र ठशब्दोऽस्त्येवेत्यत आह **आनर्थक्यादिति** । ननु वर्णग्रहणेऽप्यानर्थक्यं तुल्यमत आह–**वर्णग्रहणे त्विति**। ननु ठगादिषु सङ्घातस्योपलब्धेस्तेषामिहाऽनुकृतत्वाद्वर्णग्रहणपक्षानुपपत्तिरत आह–**वर्णग्रहणपक्षे चेति** । अतएवाऽत्र पक्षेऽङ्गनिमित्तं **यष्टकार** इति वक्ष्यमाणं भाष्यं सङ्गच्छते । **वर्णपक्षेऽप्युणादीनामिति** । ठस्य सद्भावादिति भावः । ननु ठगादिषु वर्णमात्रस्य प्रत्ययत्वात्कथमत्र सङ्घातग्रहणमत आह—**इह चेति** । विशिष्टपदार्थमाह–**तद्धितस्येत्यादि** । वस्तुतः स्वरिताऽकारविशिष्टं पठनीयमित्यर्थः, 'विशिष्टस्य ठकारस्य ग्रहण'मिति भाष्यात् । माथितिस्तुकठक्छसोरितिवार्तिकस्थभाष्योक्तरीत्या संनिपातपरिभाषया सिद्ध इति

---

१ इदं व्याख्यानं लुप्तम् । २ 'पठति' पा० ३ 'कण्ठः वण्ठः शण्ठ' इति पा० । ४ चः क्वचिन्न । ५ इदं क्वचिदपि नास्ति ।

न कर्तव्यम् ॥अस्तु तावद्वर्णग्रहणम् ।ननु चोक्तं "ठादेशे वर्णग्रहणं चेद्धात्वन्त[1]-प्रतिषेध" इति॥ नैष दोषः-'अङ्गा'दिति वर्तते ॥न वै अङ्गादिति पञ्चम्यस्ति॥ एव तर्हि 'प्रत्ययस्थस्ये'ति वर्तते ॥ क्व प्रकृतम् ?॥'प्रत्ययस्थात्कात्पूर्वस्यात इ-दाप्यसुप' इति ॥ तद्वै पञ्चमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहाऽर्थः॥ अर्थाद्विभक्ति-वि[2]परिणामो भविष्यति । तद्यथा-'उच्चानि देवदत्तस्य गृहाणि । आमन्त्रय-स्वैनम् ।' 'देवदत्त'मिति गम्यते । 'देवदत्तस्य गावोऽश्वा हि[3]रण्यञ्च । आढ्यो वैधवेयः' । 'देवदत्त' इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं, द्वितीयानिर्दिष्टं च भवति । एवमिहापि-पुरस्तात्पञ्चमीनिर्दिष्टं सदर्थात्षष्ठी-निर्दिष्टं भविष्यति ॥ एवमप्युणादीनां प्रतिषेधो वक्तव्यः ॥ न वक्तव्यः । ॥*॥उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥*॥

एवमपि 'कर्मठ' इत्यत्र प्राप्नोति ॥ एवं तर्ह्यङ्गस्येति संबन्धषष्ठी विज्ञा-स्यते-'अङ्गस्य यष्ठकारः'॥ किञ्चा[4]ऽङ्गस्य ठकारः ? ॥ निमित्तम् ॥ यस्मिन्नङ्ग-मित्येतद्भवति ॥ कस्मिंश्चैतद्भवति ? ॥ प्रत्यये ॥

अथ वा पुनरस्तु सङ्घातग्रहणम् ॥ ननु चोक्तं 'सङ्घातग्रहणं चेदुणादि-माथितिकादीनां प्रतिषेध' इति ॥ उणादीनां तावत्प्रतिषेधो न वक्तव्यः । परिहृतमेतत्—"उणादयोऽव्युत्पन्नानि प्रातिपदिकानी"ति । यदप्युच्यते-"इह च मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते 'तान्ता'दिति कादेशः प्राप्नोती"ति । नैष दोषः-अकारलोपस्य स्थानिवद्भावान्न भविष्यति ॥

---

प्र.]मिति । 'तद्धितस्य ठादेरिक' इति कर्तव्यम् ।एवं च माथितिक इत्यत्र ठादेरिति वचनादल्विधित्वात्स्थानिवद्भावाऽभावात्कादेशस्याऽप्रसङ्गः । अङ्गादिति वर्तत इति । अर्थवशाद्विभक्तिविपरिणाम इति भावः । एवं तर्हीति । सामर्थ्यात्षष्ठ्यन्त-मूह्यते । इतरो न क्वचित्षष्ठ्यन्तं प्रकृतमिति मत्वाह-क्व प्रकृतमिति । र्था-दिति । ठस्येति षष्ठ्यन्तेन सम्बन्धात् षष्ठ्यन्तत्वेन विपरिणामः । कर्मणि घटते, 'कर्मणि घटोऽठ'जित्यठच् । अङ्गस्येति । संबन्धषष्ठीत्वेनोपादानाद्विशिष्टो निमित्त-निमित्तिभावलक्षणः संबन्धो विवक्षितः । तेनाङ्गाऽवयवस्याऽप्रसङ्गः। अङ्गव्यपदेश-निमित्तप्रत्ययग्रहणात्कर्मठ इति प्रत्ययावयवस्य न भवति । ननु समुदायस्य निमि-त्तत्वेनाऽवयस्यापि निमित्तत्वमाश्रीयते, तथा चक्रतुश्चक्रुरित्यत्र द्विर्वचननिमित्त-

---

उ.]भाष्यार्थ उचित इति भाति । यद्वोणादिविषयमेवैतत् । माथितिके त्वग्रे परिहरिष्यत इति भावः । 'अङ्गस्ये'त्यस्य प्रकृतत्वादङ्गादिति वर्तत इत्ययुक्तमत आह—अर्थ-वशादिति । धात्वन्तनिवृत्त्यर्थं पञ्चम्यन्तस्येहोपयोगादिति भावः । पञ्चम्यन्तस्य कथं षष्ठ्यन्तत्वमत आह—सामर्थ्यादिति । पञ्चम्यन्तस्याऽन्वयाऽयोग्यत्वादिति भावः । तेनाऽङ्गावयवस्येति। 'पठिते'त्यादौ । अरुचिपरिहारमुपपादयति—अङ्गव्य-

---

१ 'धात्वन्तस्य' पा०। २ 'परिणामो' पा०। ३ चः क्वचिन्न । ४ 'कश्च' पा०।

**न सिध्यति–पूर्वविधौ स्थानिवद्भावो न चायं पूर्वविधिः ॥अयमपि पूर्वविधिः। पूर्वस्मादपि विधिः पूर्वविधिरिति ॥ अथाप्युणादयो व्युत्पाद्यन्ते एवमपि न दोषः, क्रियते न्यास एव विशिष्टग्रहणं–'ठस्ये'ति ॥ [ ठस्येकः ] ॥**

**इसुसुक्तान्तात्कः ॥ ७।३।५१ ॥**

**इह कस्मान्न भवति,–आशिषा तरति–आशिषिकः । उषा तरति औषिकः ? ॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ अथेह कथं भवितव्यं–दोर्भ्यां तरति ?॥ दौष्क इति भवितव्यम् ॥ कथम् ?॥ यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ॥ [ इसुसुक्तान्तात्कः ] ॥**

प्र.] पदेशात्स्थानिवद्भवति । एवं तर्हि साक्षान्निमित्तमिह गृह्यते, स्थानिवत्त्वे तु लक्ष्यवशाद्यथाकथंचिन्निमित्तमाश्रीयते। **पूर्वस्मादपि विधिरिति** । सम्बन्धसामान्यवचनषष्ठ्यन्तस्य पूर्वशब्दस्य विधिशब्देन समास आश्रीयते । अथ वा वर्णग्रहणात्तदन्तत्वे लब्धे तान्तादित्यन्तग्रहणं प्रत्ययोपदेशकाले तान्तग्रहणार्थमिति माथितिके कादेशाऽप्रसङ्गः । **अथापीति** । सर्पिषा यजुषेत्यादौ षत्वाद्यर्थं व्युत्पत्तिपक्षोऽप्यङ्गीक्रियते । **(क्रियते) न्यास एवेति** । येषां ठशब्दानामिगिष्यते तेष्वकारः स्वरित उच्चारितः, तदनुकरणं स्वरितमेव ठस्येति, न चोणादिठस्याऽकारः स्वरित इत्यादेशाऽप्रसङ्गः । **[ ठस्येकः ]** ॥

**इसुसु । आशिषेति** । 'आङः शासु इच्छाया'मित्यस्मादाशासनमाशीरिति संपदादित्वाद्भावे क्विप् । 'आशासः क्वावुपसङ्ख्यान'मितीत्वम् । **उषेति** । वसेः क्विप् । 'वचिस्वपी'ति संप्रसारणम् । षत्वस्याऽसिद्धत्वादिसुसौ भवत इति कादेशप्रसङ्गः । **लक्षणेति । लाक्षणिकम्–**अनुमेयरूपम् । **प्रतिपदोक्तं** तु प्रत्यक्षरूपम् । **अथेति** । 'दौष्क' इति दृश्यते न च प्राप्नोतीति प्रश्नः । **दौष्क इति** । 'तरती'ति ठक् । उपसङ्ख्येयोऽत्र कादेश इति भावः। क्व चित्तु–"कथं ?॥ यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते॥" इति पाठः। तत्र 'यदी'ति निपातो नसन्देहार्थ उपात्तः किं तर्हि यदेत्यस्यार्थे वर्तते ॥ ओकारे य उकारः स उकारग्रहणेन गृह्यते । यत्र च समुदायाश्रयं कार्यं नास्ति तत्राऽवयवाः स्वकार्यस्य प्रयोजका एव । तथा च नुड्विधिलादेसवि-

उ.]**पदेशे इति। साक्षादिति** । समुदायस्यैव मुख्यं निमित्तत्वमित्यर्थः। **अथवेति** । 'इसुसु'गिति भिन्नं लुप्तपञ्चम्यन्तं पदं, 'ता'दिति भिन्नं । तेन तकारेणैवाऽन्तपदसंबन्ध इति वायुदत्तशब्दाट्ठचि दत्तलोपे 'वायुक' इत्यादौ न दोषः । नियमेन प्रत्ययोपदेशकाले इत्यर्थलाभः कथमितीदं चिन्त्यम् । सन्निपातपरिभाषयाऽपि माथितिके दोषवारणं प्रागुक्तं । कथं यथान्यासेन वारणं, तदाह—**येषामिति** ।

**इसुसु । षत्वस्येति** । 'शासिवसिघसीनाञ्चे'त्यस्येत्यर्थः। ननु समुदाये गुणभूता अवयवाः कथं स्वकार्यं प्रवर्त्तयेयुरत आह—**यत्र समुदायेति** । सन्देहा-

१ 'चरति' पा० । २ इतोऽग्रे'कादेश उपसङ्ख्यान'मित्यधिकः क्वचित्पाठः ।

## हो हन्तेर्ञ्णिन्नेषु ॥ ७।३।५४ ॥

**किमिदं ञ्णिन्नकारग्रहणं हन्तिविशेषणं 'ञ्णिन्नकारपरस्य हन्तेर्यो हकार' इति, आहोस्विद्धकारविशेषणं 'ञ्णिन्नकारपरस्य हकारस्य, स चेद्धन्तेरि'ति ?॥ कश्चात्र विशेषः ?** ॥*॥ हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः[1] ॥*॥ **हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः । घ्नन्ति घ्नन्तु अघ्नन् ॥ अस्तु तर्हि हकारविशेषणम् ॥**

॥*॥ हकारस्येति चेञ्णित्यप्राप्तिर्व्यवहितत्वात्[2][3] ॥*॥ **हकारस्येति चञ्णित्यप्राप्तिः। घातयति घातकः॥ किं कारणम् ?॥ 'व्यवहितत्वात्'। नकारेणव्यवहितत्वान्न प्राप्नोति॥ वचनाद्भविष्यति॥ इहापि वचनात्प्राप्नोति—हननमिच्छति हननीयति—हन-नीयतेर्ण्वुल्—हननीयक इति** ॥*॥ स्थानिवद्भावाच्चाऽचो नकारेऽप्रसिद्धिः॥*॥**स्थानिवद्भावाच्चाऽचो नकारेऽप्रसिद्धिः स्यात्[4] । घ्नन्ति घ्नन्तु॥ वचनाद्भविष्यति।** ॥*॥ वचनप्रामाण्यादिति चेदलोपे प्रतिषेधः॥*॥ **वचनप्रामाण्यादिति चेदलोपे प्रतिषेधो वक्तव्यः। हन्ता हन्तुम्।** [॥*॥ नकारग्रहणसामर्थ्यादलोपे

प्र.]नामा ऋकारावयवाश्रयाः प्रवर्तन्ते। अग्रहणपक्षे तु यथा नुड्विधिलादेशविनामेषु प्रतिविधीयते तथा दोष उपसङ्ख्यानं कर्तव्यमिति सन्देहार्थोपि यदिशब्दो व्याख्येयः॥

**हो हन्तेः । किमिदमिति ।** हन्तिरपीहोपात्तो हकारोऽपि, तत्र किं हकारस्य प्राधान्याद्विशेषणसंबन्धोऽथ प्रधानोपकाराय गुणस्यापि हन्तेः ?। पक्षद्वये च दोषदर्शनात्प्रश्नः । द्वन्द्वनिर्दिष्टास्तु ञ्णिन्ना एकयोगक्षेमा न्याय्या इति भिन्नेन संबन्धिना सम्बन्धं प्रतिपत्तुमनर्हाः—'ञ्णिति हन्तेर्नकारे हकारस्ये'ति । **हन्तेरिति ।** स्वावयवेन पौर्वापर्याऽयोगात् । **ञ्णित्यप्राप्तिरिति ।** 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानाद्धकारस्य च ञ्णिताऽऽनन्तर्याऽसंभवात् । **वचनादिति ।** निर्दिष्टपरिभाषोपस्थानाद्येन नाव्यवधानमिति शब्दान्तरव्यवायो निवर्त्यते। इतरस्तु व्यवधानसंभवान्निर्दिष्टाङ्गविकलपरिभाषोपस्थानं मत्वाह—**इहापीति । स्थानिवद्भावाच्चाऽच इति ।** अचो य आदेशो लोपस्तस्येत्यर्थः। **नकारग्रहणेति ।** सर्वत्र व्यवहितो नकारो

**उ.] र्थमिति ।** पक्षान्तरे परिहारस्यानुत्थानं दर्शयितुं सन्देहार्थोऽपि **यदिशब्दो** व्याख्येय इत्यर्थः । वर्णैकदेशानां वर्णग्रहणेन ग्रहणेऽप्यनर्थकत्वादप्रत्ययत्वाच्च कथमस्य प्रवृत्तिरिति चिन्त्यम् । अतएवाऽस्य क्वाचित्कपाठता कैयटेनोक्ता । दौष्के 'इणः ष' इति षत्वम् । [ इसुसुक्तान्तात्कः ] ॥

**हो हन्तेः । प्राधान्यादिति ।** विशेष्यत्वात्कार्यान्वयित्वाच्चेत्यर्थः । **प्रधानोपकारायेति ।** प्रधानस्य कुत्वस्य बहुविषयलाभरूपोपकारायेत्यर्थः । **द्वन्द्वनिर्दिष्टास्त्विति ।** सहविवक्षायां द्वन्द्वेन तन्निर्दिष्टानां तुल्यतया एकत्र सम्बन्धस्य न्याय्यत्वादित्यर्थः। **स्वावयवेनेति ।** भिन्नवस्तुविषयत्वात्पौर्वापर्यव्यवहारस्येत्यर्थः ।

१ इमानि वार्तिकानि प्रायो लुप्तानि । २ त्यप्रसिद्धिः पा० । ३ 'व्यवहितत्वा'दित्यंशः सर्वत्र लुप्तः । ४ स्यादिति क्वाचित्कम् ।

न[1] ॥*॥]। नकारग्रहणसामर्थ्यादल्लोपे न भविष्यति ॥ अस्त्यन्यन्नकारवचनस्य प्रयोजनम् ॥ ? किम् ? ॥ श्रूयमाणविशेषणम् । यत्र नकारः श्रूयते तत्र यथा स्यादिह मा भूत्–हतो हथ इति ॥*॥ सिद्धं तूपधालोप इति वचनात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ ['उपधालोप इति वचनात्'] । उपधालोपे चेति वक्तव्यम् ॥ सिध्यति, सूत्रं तर्हि भिद्यते ॥

यथान्यासमेवाऽस्तु । ननु चोक्तं–'हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धि'-रिति ? ॥ वचनाद्भविष्यति ॥ अथ वा पुनरस्तु–हकारविशेषणम् ॥ ननु चोक्तं 'हकारस्येति चेञ्ञ्णित्यप्राप्ति'रिति ? ॥ वचनाद्भविष्यति ॥ ननु चोक्त-'मिहापि वचनात्प्राप्नोति हननीयक' इति ? ॥ नैष दोषो, येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । न च क्वचिद्धात्ववयवेनाऽव्यवधानम्, एतेन पुनः सङ्घातेन व्यवधानं भवति[3], न च भवति । यदप्युच्यते–'स्थानिवद्भा-वाच्चाऽचो नकारेऽप्रसिद्धि'रिति । वचनाद्भविष्यति ॥ ननु चोक्तं 'वचनप्रामाण्या-दिति चेदल्लोपे प्रतिषेध' इति ॥ नैष दोषः । आनन्तर्यमिहाश्रीयते–'हकारस्य नकार' इति । क्व चिच्च संनिपातकृतमानन्तर्यं, न शास्त्रकृतमानन्तर्यं[4], क्व चिच्च न सन्निपातकृतं नापि शास्त्रकृतम् । लोपे सन्निपातकृतमानन्तर्यम्,

प्र.]हकारात्पर इति नकारग्रहणसामर्थ्याञ्ञ्णिद्ग्रहणसामर्थ्याच्च श्रुतिकृतमानन्तर्यमाश्र-यिष्यते । **सिद्धं त्विति** । नकारग्रहणमपनीय उपधालोपग्रहणं कर्तव्यम् । **वचना-द्भविष्यतीति** । एकग्रहणकवाक्यनिबन्धनानि बहूनि वाक्यानि लक्ष्यस्य संस्कारका-ण्युपप्लवन्ते।'हो हन्तेर्णिति''हो हन्तेर्ञ्निति''हो हन्तेर्न'इति । सहविवक्षायां द्वन्द्वेऽपि यथासंभवं विशेषणविशेष्यभाव इति ञिता णिता च हन्तिर्विशेष्यते, नकारेण हकारः। **येन नाव्यवधानमिति** । तस्मिन्निति निर्दिष्ट इति परिभाषोपस्थानेन धात्ववयवेन नित्यव्यवायाच्छब्दान्तरेण व्यवधानं निवार्यते। **वचनादिति** । सत्यपि स्थानिवद्भाव-कृते व्यवधाने श्रुतिकृताऽनान्तर्याश्रयणात् । **नापि शास्त्रकृतमिति** । यथामन्त्रितं

उ.] ननु वचनसामर्थ्याद्व्यवधाने प्रवृत्तावतिप्रसङ्गः स्यादत आह–**निर्दिष्टेति** । नन्व-जादेशस्य स्थानिवत्त्वं नत्वच इत्यत आह–**अचो य इति** । **ञ्णिद्ग्रहणसामर्थ्या-च्चेति** । सर्वत्र नकारपरत्वादेव सिद्धेस्तद्वैयर्थ्यमिति भावः । घातयतीत्यादावप्य-न्तरङ्गत्वात्पूर्वं कुत्वं, ततस्तत्वमिति तात्पर्यम् । ननु सत्यपि वचने स्वावयवेनपौर्वाप-र्याभावादप्रतिपत्तिरत आह–**एकग्रहणकेति** ।**सहविवक्षायां द्वन्द्वेपीति**। 'हो हन्ते'-रिति समुदायविषयान्वयेन स साधुरिति भावः। सौत्रो द्वन्द्व इत्यन्ये। **श्रुतिकृतेति** । सामर्थ्यादिति भावः । भाष्ये 'न शास्त्रकृतमानन्तर्य'मिति पाठः । . क्व पुनः शास्त्र-कृतमानन्तर्यमत आह–**यथेति** । अत्र हि अविद्यमानवद्भावाच्छ्रौतव्यवधानेऽपि

१ इदं वार्तिकं क्वाचित्कम् । भाष्यमेवेदमित्यन्ये । २ इदं क्वचिन्न । ३ 'भवति च' पा० । ४ 'शास्त्रकृतमनान्तर्यं' पा० ।

न शास्त्रकृतमानन्तर्यम्[1], अलोपे नैव सन्निपातकृतं नापि शास्त्रकृतम्। यत्र कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः ॥ [ होहन्तेर्ञ्णिन्नेषु ] ॥

## अभ्यासाच्च ॥ ७।३।५५ ॥

॥*॥ अभ्यासात्कुत्वमसुपः ॥*॥ अभ्यासात्कुत्वमसुप इति वक्तव्यम्। इह मा भूत्–हननमिच्छति हननीयति, हननीयतेः सन् जिहननीयिषतीति ॥ तत्तर्हि वक्तव्यम्? ॥ न वक्तव्यम्। 'हन्तेरभ्यासा'दित्युच्यते न चैष हन्तेरभ्यासः ॥ हन्तेरेषोऽभ्यासः[2] ॥ कथम्? ॥ 'एकाचो द्वे प्रथमस्ये'ति ॥ एवं तर्हि 'हन्तेरङ्गस्य योऽभ्यासस्तस्मा'दित्युच्यते न चैष हन्तेरङ्गस्याऽभ्यासः ॥ हन्तेरङ्गस्यैषोऽभ्यासः ॥ कथम्? ॥ 'एकाचो द्वे प्रथमस्ये'ति ॥ एवं तर्हि यस्मिन् हन्तिरङ्गं तस्मिन्योऽभ्यासस्तस्मादित्युच्यते, यस्मिंश्चाऽत्र हन्तिरङ्गं न तस्मिन्नभ्यासो, यस्मिंश्चाभ्यासो[3] न तस्मिन्हन्तिरङ्गं भवति। [अभ्यासाच्च] ॥

प्र.]पूर्वमविद्यमानवदित्युक्तं तथाऽकारस्य शास्त्रेणाऽव्यवधायकत्वं न क्व चित्प्रतिपादितमित्यर्थः। कुतश्चिदिति। निर्दिष्टपरिभाषोपस्थानात्। [ हो हन्तेः ] ॥

**अभ्यासा। असुप इति।** असुबन्तावयवस्य हन्तेरभ्यासात्परस्य कुत्वं न तु सुबन्तावयवस्येत्यर्थः। **हन्तेरभ्यासादिति।** अङ्गाधिकारेण चाऽभ्यासेन च प्रत्ययस्याक्षेपादभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मात्कुत्वमिति भावः।इतरस्त्वगृहीताभिप्राय आह–**हन्तेरिति।** पूर्वोक्तेनाऽभिप्रायेणाह–**हन्तेरङ्गस्येति।** तथा चोक्तं 'सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावा'दिति। **न चैष हन्तेरङ्गस्येति।** अभ्यासनिमित्ते प्रत्यये हन्तिरत्र नाङ्गमित्यर्थः। इतरोऽङ्गमात्रमाश्रित्याह–**हन्तेरिति।** आचार्यः स्वाभिप्रायं प्रकाशयति–**एवं तर्हीति।** यथा जघनिथेति थलि हन्तिरङ्गं, तस्मिन्नेव चाऽभ्यासः। [ अभ्यासाच्च ] ॥

उ.]शास्त्रकृतमव्यवधानं,न तथेह, तथा शास्त्राऽभावादित्यर्थः। [ हो हन्तेः ] ॥

**अभ्यासाच्च।** नन्वभ्यासस्य क्वापि सुबन्तत्वाऽभावादसुप इति व्यर्थमत आह–**असुबन्तेति।** 'जिहननीयिषती'त्यत्र सुबन्तात्क्यज्विधानेन सुबन्तावयवो हन्तिरित्यर्थः। 'आचारक्विबाख्यानण्यन्तेभ्यः सनादिकमनभिधानान्नास्त्येवे'ति भावः। तत्र कुत्वे इष्टापत्तिस्तु न, वक्ष्यमाणप्रत्याख्यानविरोधात्। ननु हन्तेरेवाऽयमभ्यासोऽत आह—**अङ्गाधिकारेण चेति। अभ्यासनिमित्ते प्रत्यय इति।** प्रत्यासत्त्येति भावः। अङ्गेन प्रत्ययाक्षेपे बीजमाह–**तथा चोक्तमिति।** 'अङ्गस्ये'-त्यत्र। अत एवास्याऽङ्गाधिकारे पाठश्चरितार्थः। नन्वङ्गाधिकारपाठाऽभावेऽपि अभ्यासेन स्वघटितसमुदायस्य प्रत्ययान्तत्वाक्षेपे तत्र प्रत्ययस्य प्रकृत्याकाङ्क्षायां प्रत्यासत्त्योपस्थिततत्वेन हन्तेरेव संबन्धेन 'जिहननीयिषती'त्यादौ नाऽतिप्रसङ्गः। स्पष्टा चेयं रीतिर्हृः संप्रसारणमभ्यस्तस्येत्यत्र कैयट इति चेन्न, शब्दानुपस्थित-

१ इदं क्वचिन्न। २ 'रेवाऽभ्यासः' 'हन्तेरेवैषोऽभ्यासः'। ३ 'न्नभ्यासो' पा०।

## हेरचङि ॥ ७।३।५६ ॥

**अचङीति किमर्थम् ?॥ प्राजीहयद्दूतम्[1] ॥*॥ हेश्चङि प्रतिषेधानर्थक्यमङ्गाऽन्यत्वात् ॥*॥ हेश्चङि प्रतिषेधोऽनर्थकः ॥ किं कारणम् ? ॥ 'अङ्गान्यत्वात्' । ण्यन्तमेतदङ्गमन्यद्भवति ॥ लोपे कृते नाऽङ्गान्यत्वम् ॥ स्थानिवद्भावादङ्गान्यत्वमेव ॥*॥ ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वविज्ञानार्थम्[2] ॥*॥ एवं तर्हि ज्ञापयत्याचार्यो'ऽन्यत्र ण्यधिकस्य कुत्वं भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ 'प्रजिघाययिषती'त्यत्र कुत्वं सिद्धं भवति ॥ [ हेरचङि ] ॥**

## सँल्लिटोर्जेः ॥ ७।३।५७ ॥

॥*॥ जिग्रहणे ज्यः प्रतिषेधः ॥*॥ **जिग्रहणे ज्यः प्रतिषेधो वक्तव्यः जिज्यतुः जिज्युरिति ॥ स तर्हि प्रतिषेधो वक्तव्यः ? ॥ न वक्तव्यः 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'[3]त्येवमेतस्य न भविष्यति ॥ सा तर्ह्येषा परिभाषा कर्तव्या ? ॥ अवश्यं कर्तव्या, अध्याप्य गत इत्येत्रमर्थम् ॥**

---

**प्र.] हेर । अचङीति किमर्थमिति ।** यस्मिन्हिनोतिरङ्गं तस्मिन्नभ्यासे विज्ञायमाने,–णौ हिनोतिरङ्गं चङ्यभ्यास इति कुत्वं न भविष्यतीति मत्वा प्रश्नः ।

**अन्यत्रेति ।** सनादावित्यर्थः । **[ हेरचङि ] ।**

**सन्लिटोः । जिज्यतुरिति ।** 'ज्या वयोहानौ' लिड्यतुसि ग्रहिज्यादिसूत्रेण संप्रसारणे कृते पूर्वैकादेशे च यद्यपि 'हल' इति दीर्घत्वं क्रियते तथाप्येकदेशविकृतस्याऽनन्यत्वाद्यथा जयतेर्जिगीषतीत्यत्र कुत्वं भवत्येवं[4] जिनातेः प्राप्नोति । **अध्याप्येति ।** 'विभाषाऽऽप' इत्ययादेश इङादेशात्पुगन्तात्परस्य णेर्न भवति ॥

---

**उ.]** प्रत्ययाक्षिप्तप्रकृतेः शाब्दबोधविषयत्वे मानाऽभावात् । अत्र चैवमादीनामङ्गाधिकारे पाठ एव ज्ञापकः। परे त्वत्र प्रत्ययाक्षेपस्य नोपयोगः, 'हन्तेरङ्गावयवस्य योऽभ्यास' इत्यर्थेऽङ्गाभ्यासयोर्द्वयोरपि शास्त्रेण निमित्तत्वग्रहात्, प्रत्यासत्त्याऽङ्गसंज्ञानिमित्तनिमित्तकाभ्यासस्यैव ग्रहणमिति भाष्यार्थमाहुः। भाष्ये–**यस्मिंश्चाभ्यास इति ।** यन्निमित्तद्वयोः पूर्वोऽभ्यास इत्यर्थः।लिडादेः सप्तम्यन्तपदेनैव द्वित्वं प्रति निमित्तत्वबोधनात्तदभिप्रायेण भाष्ये सप्तमीनिर्देशः । विषयसप्तमी वा । **[अभ्यासाच्च]॥**

**हेरचङि । यस्मिन् हिनोतिरिति ।** पूर्वसूत्रोक्तरीत्येत्यर्थः। 'कुत्वविज्ञानार्थ'–मित्यनेन भाष्येणाऽस्य कुत्वमात्रविषयता नान्यविषयतेति ध्वन्यते। (भाष्ये) **प्रजिघायथिषतीति ।** एवमुत्तरसूत्रविषये प्रजिगाययिषतीत्यपि बोध्यम् । **[हेरचङि] ॥**

**सँल्लिटोर्जेः ।** यद्यपि दीर्घात्परं कुत्वं तथापि नित्यो दीर्घ इति भावः । **इङादेशादिति ।** इङः 'क्रीङ्जीना'मित्यात्वेऽर्त्तिह्रीति पुकि यदाबिति रूपं तस्मादित्यर्थः ।

---

१ 'द्रूतम्' पा० । २ 'विधानार्थं पा० । ३ ॥*॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमध्याप्य गतमित्येवमर्थम्' ॥*॥ इत्येवं वार्तिकमेतदित्यन्ये॥ ४'भवेदित्येवं' पा० ।

## न क्वादेः ॥ ७।३।५९॥

॥*॥ क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात् ॥*॥

क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ कुत्वं कस्मान्न भवति ? ॥ 'निष्ठायामनिटः कुत्ववचनात्' ॥ निष्ठायामनिटः कुत्वं वक्ष्यामि, सेटश्चैते निष्ठायाम् ॥ यदि निष्ठायामनिटः कुत्वमुच्यते कथं शोकः समुद्ग इति ? ॥*॥ शुच्युब्ज्योर्घञि कुत्वम् ॥*॥ शुच्युब्ज्योर्घञि कुत्वं वक्तव्यम् ॥ कथमर्कः ? ॥*॥ अर्चेः कविधानात्सिद्धम् ॥*॥ नैतदञ्जन्तम्, औणादिक एष कशब्दस्तस्मिन्नाष्टमिकं कुत्वम् ॥ [ न क्वादेः ] ॥

प्र.] न क्वादेः । क्वाद्यजीति । 'चजोः कुघिण्ण्यतोर्निष्ठायामनिट' इति वक्तव्यं, तेनैव क्वाद्यजादीनां कुत्वनिवृत्तेः सिद्धत्वान्नाऽर्थः प्रतिषेधेनेत्यर्थः । ननु ग्लुचुग्लुञ्चु-कुजुखुजूनां निष्ठायामनिट्त्वाद्घिण्ण्यतोः कुत्वं वार्तिककारमतेन प्राप्नोति, सूत्रकार-मतेन तु 'न क्वादे'रिति प्रतिषेधप्रसङ्गः । तथाऽर्जिसर्जितर्जीनां निष्ठायां सेट्त्वात् कुत्वाऽप्रसङ्गः । उच्यते । वार्तिककारस्य सूत्रकारात्प्रमाणतरत्वात्तन्मतेन तु कुत्वस्य भावाऽभावाववगन्तव्यौ । नन्वसत्यजेः प्रतिषेधे 'वीत' इति निष्ठायामनि-ट्त्वात् 'समाज' इति कुत्वं प्राप्नोति । नैतदस्ति । व्यादेशो निष्ठायामनिण्न त्वजिः । न च स्थानिवद्भावः, 'अद्–निष्ठायाम'निडिति लौकिके व्यपदेशोऽस्ति । शास्त्रीयेष्वेव कार्येषु स्थानिवत्त्वाद्वलादावार्धधातुके विकल्प इष्यत इति वीभावाऽभावपक्षे 'अजित' इति निष्ठायामजिः सेडेव । कथमिति । शुच्युब्जी निष्ठायां सेटौ । 'ई शु-चिर् पूतिभावे' इति यद्यपि निष्ठायामनिट्, तथाप्यर्थभेदाश्रयः प्रश्नः । शुच्युब्ज्योर्घ-ञीति । यथान्यासेऽपि घञ्येव यथा स्याण्ण्यति मा भूदिति नियमार्थं वाच्यं, तदेव न्यासभेदे विध्यर्थमिति भावः । यद्यपि गमेर्ड्डुपसर्गाड्डुप्रत्यये सति 'समुद्र'

उ.] न क्वादेः । निष्ठायामनिट्त्वादिति । 'उदितो वे'ति क्त्वायां विकल्पाद्यस्य विभाषेति निष्ठायामिण्निषेधादिति भावः । कुत्वाऽप्रसङ्ग इति । 'वार्तिककृन्मते' इति शेषः। वार्तिककारस्येति । तस्य भाष्यकृता तदप्रत्याख्यानात् । भाष्यकारस्य-चाऽज्ञानकल्पनापेक्षयैकस्य सूत्रकृतस्तत्काले तावन्मात्रलक्ष्यस्मरणकल्पना युक्तेति भावः । उक्ताऽनुक्तदुरुक्तचिन्ताकरत्वं हि वार्तिककारत्वं । स्थान्यादेशयोरभेद-माश्रित्य शङ्कते–नन्विति । समाज इति । 'समुदोरजः पशु'ष्विति पशुषु अपि, ततोऽन्यत्र 'हलश्चे'ति घञ् । भेदेनोत्तरं । न च स्थानिवद्भाव इति । इदं चि-न्त्यम् , आदेशस्य तेन स्थानिवद्भावो न तु स्थानिन आदेशवद्भाव इति (हेतोः।) अतोऽत्रायमग्रन्थ इति बोध्यम् । निष्ठायामनिडिति । 'श्वीदितो निष्ठाया'मिति प्रतिषेधादिति भावः । अर्थभेदेति । 'शुच शोके' इत्यस्य न सिद्ध्यतीत्यर्थः । ननु

१ इदं क्वचिन्न। २ अत्र ॥*॥ 'अर्क इत्यर्चेः कविधानात्सिद्ध' मित्येवं वार्तिकं भवेत्। ३ 'नवैतद्घञ' पा० ।

## भुजन्युब्जौ पाण्युपतापयोः ॥ ७।३।६१ ॥

॥*॥ भुजः पाणा ॥*॥ भुजः पाणाविति वक्तव्यम् ॥ कथं न्युब्ज उपतात इति ? ॥*॥ न्युब्जेः कर्तृत्वादप्रतिषेधः ॥*॥ [ न्युब्जेः कर्तृत्वादप्रतिषेधः।] । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ कुत्वं कस्मान्न भवति ? ॥ 'कर्तृत्वात्' । नैतद्धञन्तम् । कर्तृप्रत्यय एषः । न्युब्जतीति न्युब्जः ॥ ननु च अधिकारणसाधनो वै लक्ष्यते घञ्,–न्युब्जिताः शेरतेऽस्मिन्न्युब्ज उपताप इति ॥ एषोऽपि हि कर्तृसाधन एव ॥ कथं ?॥ न्युब्जयतीति न्युब्जः॥

## यजयाचरुचप्रवचर्चश्च ॥ ७।३।६६ ॥

॥*॥ प्रवचिग्रहणमनर्थकं वचोऽशब्दसंज्ञाभावात् ॥*॥ प्रवचिग्रहणमन-

---

प्र.] इति सिध्यति, तथाप्युब्जेर्घञि जकारनिवृत्तये कुत्वमभ्युपेयम् । औणादिक इति। 'कृदाधारार्चिकलिभ्यः कः' । धिण्ण्यतोस्त्वर्चोऽर्च्यमिति भवति । [न क्वादेः] ।

भुज । भुजेस्तौदादिकस्य रौधादिकस्य वा घञि गुणकुत्वनिषेधौ निपात्येते । भुजः पाणाविति । न्युब्जोपतापग्रहणं न कर्तव्यमित्यर्थः । लोके बाहौ भुजशब्दो भुजावयवत्वात्प्रयुज्यते । कर्तृप्रत्यय इति । पचाद्यच्[1] । न्युब्जतीति। न्युब्जन्त्यस्मिन्नित्यधिकरणं प्रदर्शनीयम् । भाष्ये तु वस्तुमात्रं कथितम्[2] । एषोऽपीति । यस्मिन् व्याधौ न्युब्जिताश्चेष्टारहिताः शेरते स व्याधिस्तान् न्युब्जयतीत्यच् । न चाऽत्र घञचोः स्वरे विशेषः, थाथादिसूत्रेणाऽन्तोदात्तत्वविधानात् । भुजशब्दस्तु[3] घञ्याद्युदात्तो भवति । अचि त्वन्तोदात्तः स्यात् । [भुजन्युब्जौ पाण्युपतापयोः]।

---

उ.] वचनेन परिहारे गौरवमत आह–यथान्यासेऽपीति । क्व्युपसर्गादिति । समुत्पूर्वादन्येष्वपि दृश्यते इति डः । [ न क्वादेः ] ॥

भुजन्युब्जौ । तौदादिकस्येति । कुटिलीक्रियत इति तदाऽर्थः । रौधादिकस्येति । अभ्यवह्रियतेऽनेनेति तदाऽर्थः । सूत्रे एव सत्त्वाद्वक्तव्यत्वानुपपत्तिरत आह–न्युब्जेति। लोके बाहाविति। मणिबन्धादधः पञ्चशाखप्रभेदः पाणिः, बाहुश्च समुदित इति तदनुपपत्तिरिति भावः । भुजावयवत्वादिति बहुव्रीहिः । सूत्रस्थपाणिपदस्य पाण्यवयवके लक्षणेति केचित्। भाष्ये तु वस्तुमात्रमिति । अन्तभावितण्यर्थतयेति भावः । इतर एतदजानान आह—अधिकरणेति । स्वाशयं प्रकटयति—एषोऽपीति । 'न्युब्जिता' इत्यस्य व्याख्यानं—चेष्टारहिता इति । ननु भुजेरप्यचि भुजस्य सिद्धत्वात्किं तत्रापि वचनेनेत्यत आह–भुजशब्दस्त्विति । अन्तोदात्तः स्यादिति । इगुपधलक्षणकेऽप्येवं स्यादिति भावः । वस्तुतः संज्ञापूर्वकविधेरनित्यत्वे मानाऽभावाद्गुणाऽभावार्थमपि तन्निपातनं बोध्यम् ॥ [भुज] ॥

यजयाचयत । भाष्ये–प्रपूर्वो वचिरशब्दसंज्ञायामिति । तत्रैवेत्यर्थः। एतेन 'प्रवाच्यं नाम ग्रन्थविशेष' इति वृत्त्युक्तं चिन्त्यम् । 'अविवाक्यस्य विशेष-

---

१ इदं क्वचिन्न । २ अयं पाठः 'कथित'मित्यनन्तरं दृश्यते। ३ 'शब्दो घञि' पा०।

र्थकम् ॥ किं कारणम् ? ॥ 'वचोऽशब्दसंज्ञाभावात्' । वचोऽशब्दसंज्ञायां प्रतिषेध उच्यते, प्रपूर्वश्च वचिरशब्दसंज्ञायां वर्तते । ॥*॥ उपसर्गनियमार्थम् ॥*॥ उपसर्गनियमार्थं तर्हि[1] इदं वक्तव्यम् । प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधो यथा स्यादिह मा भूत्–अविवाक्यमहरिति[2] । ॥*॥ उपसर्गपूर्वनियमार्थमिति[3] चेदविवाक्यस्य विशेषवचनात्सिद्धम् ॥ * ॥ [ उपसर्गपूर्वनियमार्थमिति[4] चेदविवाक्यस्य विशेषवचनात्सिद्धमेतत् ] । विशेषत[5] एव तद्वक्तव्यम्-अविवाक्यमहरिति ॥ क्व माभूत् ?॥ अविवाच्यमेवान्यदिति ॥*॥ ण्यप्रतिषेधे त्यजेरुपसङ्ख्यानम् ॥*॥ ण्यप्रतिषेधे त्यजेरुपसङ्ख्यानं कर्तव्यम् । त्याज्यम् ॥

## भोज्यम्भक्ष्ये ॥ ७।३।६९ ॥

॥*॥ भोज्यमभ्यवहार्ये[6] ॥*॥ भोज्यमभ्यवहार्य इति वक्तव्यम् । इहापि यथा स्यात्–भोज्यः सूपः भोज्या यवागूरिति ॥ किं पुनः कारणं न सिध्यति ? ॥ भक्षिरयं खरविशदे एवं वर्तते तेन द्रवे[7] न प्राप्नोति ॥ नावश्यं भक्षिः खरविशदे एव वर्तते ॥किं तर्हि ?॥ अन्यत्रापि वर्तते। तद्यथा–अब्भक्षो वायुभक्ष इति ॥ [ भोज्यं भक्ष्ये ] ॥

प्र.] यज । अविवाक्यस्येति । यद्ययं नियमः क्रियते तदाऽविवाक्यमित्येव स्यान्न त्वविवाच्यमिति । द्वयमपि चैतद्विषयविभागेनेष्यत इति यत्नान्तरं कार्यं, न त्वयं नियमः । अन्योपसर्गपूर्वस्य च प्रतिषेध इष्यत एव । दशरात्रस्य यज्ञविशेषस्य दशममहः–अविवाक्यमुच्यते,यस्मिन् याज्ञिका न विब्रुवते–न[8] नानावाक्यान्युच्चारयन्तीत्यर्थः । तत्र पृषोदरादित्वात्कुत्वमन्यत्र प्रतिषेध इति प्रवचिग्रहणं प्रत्याख्यातम् । त्यजेरिति । पूज्यमिति तु ण्यन्तस्य पूजे रूपम् । [ यजयाचयत ] ।

भोज्यम् । नावश्यमिति–भाष्यकारः सूत्रन्यासं समर्थयते । अब्भक्ष इति । न च शब्दान्तरसन्निधिगम्यं सामान्यवाचित्वमिति शक्यं वक्तुम् । न हि शब्दस्या-

उ.]वचना'दित्यस्य नियमानुपपत्तौ हेतुत्वमुपपादयति–यद्ययमिति।यत्नान्तरं–नियमादन्यत् । नन्वेवमन्योपसर्गपूर्वस्य न स्यादिति शङ्कायामिष्टापत्तिमाह—अन्योपसर्गेति। तथा च प्रयुज्यते–'निर्वाच्या विधे'ति। न विब्रुवत इत्यस्य व्याख्यानं- 'न नानावाक्ये'त्यादि। बाहुलकादधिकरणे कृत्यः। पृषोदरादित्वादिति । पृष्टोदरादिष्वविवाक्यमहरिति पठनीयमिति भावः। पूज्यमिति त्विति । एवञ्च 'पूजेश्चे'ति वृत्तिश्चिन्त्येति भावः । [ यचयाचयत ] ॥

भोज्यं। ननु भक्षिः खरविशदविषय एव, अब्भक्ष इत्यादौ शब्दान्तरसन्निधानात्सामान्यवृत्तित्वमिति शङ्कते–नचेति । उत्तरयति–नहीति । अनेकार्थस्याभिधे-

१ तर्हि पा० । २ 'महरिति' क्वचिन्न । ३ ईदृशं व्याख्याभाष्यं सम्प्रति लुप्तमिति मन्ये । ४ 'उपसर्गनियमा' । ५ 'विशेषः' पा० । ६ इदं क्वचिन्न । ७ 'द्रवद्रव्ये' पा० ।८ 'ने'ति क्वचिन्न ।

## घोर्लोपो लेटि वा ॥७।३।७०॥

॥*॥ वेति शक्यमवक्तुम्[1] ॥*॥ कस्मान्न भवति–तदग्निरग्नये ददात् ? ॥ अस्त्वत्र लोपः, आटः श्रवणं भविष्यति । तेनोभयं सिध्यति–दधद्रत्नानि दाशुषे । दधा[2]द्रत्नानि दाशुषे ॥ [ घोर्लोपो लेटि वा ] ।

## ओतः श्यनि ॥ ७।३।७१ ॥

॥*॥ ओतः शिति ॥*॥ ओतः शितीति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ ॥*॥ उत्तरत्र शिद्ग्रहणाऽभावाय ॥*॥ तत्रायमप्यर्थः 'ष्ठिवुक्लमुचमां शिती'ति शिद्ग्रहणं न कर्तव्यं भवति ॥ ननु च भोः श्यन्ग्रहणमपि तर्ह्युत्तरार्थं कर्त्तव्यं[3]म् । 'शमामष्टानां दीर्घः श्यनी'ति श्यन्ग्रहणं न कर्तव्यं भवति ॥ अत्राप्यस्तु–शितीत्येव । यदि[4] शितीत्युच्यते 'अनुत्वेन्द्रो भ्रमतु मदतु'–अत्रापि प्राप्नोति ॥ शमादिभिरत्र शितं विशेषयिष्यामः–'शमादीनां यः शि'दिति ॥ कश्च शमादीनां शित् ? ॥ शमादिभ्यो यो विहितः ॥ एवमपि तस्यति यस्यति–अत्र प्राप्नोति ॥ 'अष्टाना'मिति वचनान्न भविष्यति ॥ [ ओतः ]

---

प्र.]ऽनभिधेयं शब्दान्तरसन्निधानेनाऽभिधीयते, नित्यत्वाच्छब्दार्थसंबन्धस्य । भोज्यं भक्ष्यं लेह्यं पेयमित्यत्र गोबलीवर्दन्यायेन विशेषविषयत्वं भुजिभक्ष्योर्ज्ञेयम् ॥

**घोर्लो** । भाष्यकारेण 'वे'ति प्रत्याख्यातम् । के चित्त्वनित्यमागमशासनमिस्य ज्ञापकं वाग्रहणं वर्णयन्ति । अनित्यत्वात्तस्याऽऽ[5]व्यसति ददादिति न स्यादिति तत्सिद्धये वाग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयति । [ **घोर्लोपो** ] ।

**ओतः** । **ओत इति** । न हि श्यनोऽन्य ओतः शिदस्ति । **तत्रायमप्यर्थ इति** । न केवलं मात्रालाघवं यावदयमप्यर्थ इत्यर्थः । **भ्रमत्विति** । 'वा भ्राशे'तिवचनात्पक्षे शप् । **मदत्विति** । व्यत्ययेन शप् । **शमादिभ्यो यो विहित इति** । श्यन्नेव सर्वेभ्यः शमादिभ्यो विहित इति स एव गृह्यते । **एवमपीति** । शिद्विशेषणे

---

उ.] यत्वे हि तस्य बोधनियामकत्वमात्रमिति भावः । [ **भोज्यं भक्ष्ये** ] ॥

**घोर्लोपो** । **केचित्त्वनित्यमिति** । अस्याऽर्थस्य भाष्यकृताऽस्पृष्टत्वादिदमप्रामाणिकं । जह्वेत्याद्यसाध्वेवेत्यन्ये । [ **घोर्लोपो लेटि वा** ] ॥

**ओतः श्यनि** । **नहीति** । न च 'भवती'त्यस्ति, 'ओत' इत्यस्य विहितविशेषणत्वाऽङ्गीकारात् । 'भवतेर' इत्यादिनिर्देशेन प्रतिपदोक्तौकारस्यैव ग्रहणाच्च । ओकारान्तप्रकृतिकाचारक्विबन्तास्तु न सन्त्येवाऽनभिधानादिति भावः। **न केवलमिति**। 'क्सस्ये'ति 'लुग्वे'तिच सूत्रे 'ओत' इत्यतः प्रागेव पाठ्ये । 'लुग्वे' त्यत्रापि लोपपदसम्बन्धे बाधकाऽभाव इति भावः । ननु शबपि शमादिभ्यो विहित एवेत्यत आह—**श्यनेवेति** । दिवादिभ्य इत्यादिग्रहणस्य व्यवस्थार्थकतया श्यन् शमादि-

---

१ कैयटादयस्तु भाष्यमेवेदमिति मन्यन्ते । २ 'दधात्' इत्येव क्वचित्पाठः । 'ददात्' । ३ 'वक्तव्यम्' पा० । ४ 'यदा' । ५ 'त्वस्मादाव्यसति' पा० ।

## ष्ठिवुक्लमुचमां शिति ॥ ७।३।७५ ॥

॥*॥ दीर्घत्वमाङि चमः[1] ॥*॥ दीर्घत्वमाङि चम[1] इति वक्तव्यम् । आचामति , इह मा भूत्–चमति[2] विचमतीति ॥ [ ष्ठिवुक्लमुचमां शिति ] ॥

## इषुगमियमां छः ॥ ७।३।७७ ॥

॥*॥ इषेश्छत्वमहलि ॥*॥ इषेश्छत्वमहलीति वक्तव्यम् । इह मा भूत् इष्णाति इष्यति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । 'अची'ति वर्तते ॥ एवमपीषाणेत्यत्र प्राप्नोति ॥ अथाऽहलीत्यप्युच्यमाने[4] कस्मादेवाऽत्र छत्वं[5] न भवति ?॥ नैवं विज्ञायते–न हल् अहल् , अहलीति ॥ कथं तर्हि ? ॥ अविद्यमानो हलस्मिन्सोऽयमहल् ,अहलीति ॥ यद्येवमचीत्यपि वर्तमाने न दोषः । न ह्यचा शिद्विशेष्यते–'शिति भवति, कतरस्मिन्?,अची'ति ॥ कथं तर्हि ?॥ शिताऽज्विशेष्यते,–'अचि भवति, कतरस्मिन्?,शिती'ति [इषगमियमां छः] ॥

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७।३।७८ ॥

॥*॥ पिबेर्गुणप्रतिषेधः ॥*॥ पिबेर्गुणप्रतिषेधो वक्तव्यः,पिबति–लघूपध·

---

प्र.]शमादीनामुपयोगात्कार्यिनिर्देशाऽभावात् । अष्टानामिति । 'अष्टाना'मित्यनेन सङ्ख्येयाः कार्यिणो निर्दिश्यन्ते, ते च सन्निधानाच्छमादय एव विज्ञायन्ते। [ओतः श्यनि]

ष्ठिवु । 'ष्ठिवुक्लमुचमां शिती'ति सूत्रपाठादाह–दीर्घत्वमाङि चमेरिति । अथ वा सूत्रे तन्त्रमाङ् , न तु यथोपेयिवानित्यत्रोपशब्दोऽतन्त्रमिति प्रदर्शनाय वार्तिकारम्भः । [ ष्ठिवुक्लमुचमां शिति ] ॥

इष । 'इषुगमी'ति पाठोऽनार्ष इत्याह—इषेश्छत्वमहलीति । इषाणेति । 'इष आभीक्ष्ण्ये' इत्यस्माद्धलः श्नः शानज्झाविति शानच् । स चाऽजादिरिति च्छत्वप्रसङ्गः । अथेति । 'अहली'ति तत्पुरुषे शानजजादिरिति भावः । न ह्यचेति । विशेषणविशेष्यभावे कामचारात् । तदादिविधिस्तदन्तविधिवद्विशेषणेन भवति, न विशेष्येण । [ इषगमियमां छः ] ।

---

उ.]शब्दोच्चारणेन विहितो ननु शप् तथेति परे । कार्यिनिर्देशाऽभावादिति । शमादिविहितशित्यङ्गस्य दीर्घ इत्यर्थः स्यादिति भावः । [ ओतः श्यनि ] ॥

ष्ठिवुक्लमु । ननु सूत्रे एवाऽऽचमामितिपाठाद्वार्तिकमनर्थकमत आह—ष्ठिव्वित । स पाठोऽनार्ष इति भावः । तमपि[6] पाठं स्थापयति—अथवेति ॥

इषगमि । 'इषुगमी'ति पाठे तौदादिकस्यैवोदितः पाठादन्यस्य ग्रहणशङ्कैव नेत्यत आह–अनार्ष इति । गणेऽप्यनुदित एव पाठ इत्यर्थः । न विशेष्येणेति । एवञ्चाऽज्रूपे शितीत्यर्थान्न दोष इति भावः । अत्राऽचीत्यस्य मण्डूकानुवृत्तिर्बोध्या ।

---

१ 'चमेरिति' पा० । २ 'उच्चमति' पा० । ३ 'इषु' पा० । ४ 'हलीत्यप्युच्यमाने' पा० । ५ 'छत्वं' क्वचिन्न । ६ ष्ठिवुक्लम्वाचमामितिपाठमपि ।

गुणः प्राप्नोति । स तर्हि प्रतिषेधो वक्तव्यः ?॥ न वक्तव्यः ॥ गुणः कस्मान्न भवति ? ॥ पिबतिरदन्तः । ॥*॥ अदन्त इति चेदुक्तम् ॥*॥ किमुक्तम् । "धातोरन्त इति चेदनुदात्ते च-बग्रहण"मिति । अथ 'वाऽङ्गवृत्ते पुनर्वृत्ताववविधिर्निष्ठितस्ये'त्येवं न भविष्यति ॥ [ पाघ्राध्मास्थाम्ना ] ॥

## ज्ञाजनोर्जा ॥७।३।७९॥

दीर्घोच्चारणं किमर्थं, न 'ज्ञाजनोर्ज' इत्येवोच्येत ?॥ का रूपसिद्धिः-जानाति जायते ? ॥ अतो दीर्घो यञीति दीर्घत्वं भविष्यति ॥ एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा-'अङ्गवृत्ते पुनर्वृत्तावविधि'रिति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ पिबतेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ॥ [ ज्ञाजनोर्जा ] ॥

---

प्र.] पाघ्रा । धातोरन्त इति चेदिति । 'धातो'रित्यत्र द्वौ पक्षावुक्तौ-अन्त इति वर्तते न वा, यद्यनुवर्तते तदा 'अनुदात्ते चे'ति सूत्रं कर्तव्यं 'ददाती'त्याद्युदात्तार्थं, तथा 'पिबन्ती'त्यादावाद्युदात्तत्वं मध्योदात्तनिवृत्त्यर्थं बाऽन्तस्य धातोर्वक्तव्यम्।अन्तग्रहणनिवृत्तौ तु क्रमप्राप्तत्वादादेरेवोदात्तत्वं सिध्यति । तत्रायं निर्णयः-'अन्त' इति वर्तते ऊर्णोत्याद्यर्थम् । 'अनुदात्ते चे'ति कृतमेव । पिबतेश्चाद्युदात्तनिपातनमिह कार्यम् । अथवेति । सत्यपि हलन्तत्वे गुणाऽभावः । पिबादेशेनैवाऽङ्गस्य प्रयोगाऽर्हत्वात् । [ पाघ्राध्मास्थाम्ना ] ।

ज्ञा ज । अतो दीर्घो यञीति । तत्र सार्वधातुकग्रहणं तुरुस्तुसूत्रादनुवर्तते न तु तिङीति। अत एवाऽऽने मुक् पूर्वान्तः कृतो न परादिः, दीर्घप्रसङ्गात् । अङ्गवृत्त इति । 'ज्यादादीयस' इत्याकारविधानस्य ज्ञापकत्वे 'जा' इति दीर्घोच्चारणं दीर्घ-

---

उ.] अतएव 'क्रमः परस्मैपदे'ष्विति दीर्घः श्यन्यपि भवति । अतएव भगवता तत्सूत्रं विहायाऽत्रैवैतद्विचारोऽकारीति बोध्यम् । [ इषगमियमां छः ] ॥

पाघ्रा । आदेरेवेति । इदं च तत्रैवोपपादितम् । 'धातो'रिति सूत्रस्थपूर्वपक्षवार्तिकग्रहणं तत्रत्यसिद्धान्तवार्तिकस्याऽप्युपलक्षणमित्याशयेनाह-तत्रायमिति। कृतमेवेति । इदमेव ज्ञापकं धातोरित्यत्रान्ताधिकारस्येति भावः । [पाघ्रा] ॥

ज्ञाजनोर्जा । जनिरत्र ज्ञासाहचर्याच्छ्रूयमाणविकरण एव न, जुहोत्यादिरित्याहुः। नन्वतो दीर्घ इत्यत्र 'तिङी'त्यनुवृत्तेः कथं जानातीत्यत्र दीर्घोऽत आह-अतो दीर्घ इत्यादि । अत्रत्यमेतज्ज्ञापनपरं, ज्यादादीयस' इति सूत्रस्थश्च भाष्यमेकदेश्युक्तिः, अदन्तत्वेनैव गुणप्रतिषेधवार्त्तिकप्रत्याख्यानसम्भवेनाऽस्य यत्नस्य गुरुत्वात् । भ्यसोभ्यमिति सूत्रस्थश्च भाष्यमत्रत्यैतदेकदेशिमतेनैवेति बोध्यम् । फलान्तरन्तु नाऽस्या उपलभ्यते । नन्वनेन दीर्घेऽजानाम्भो इत्यादावनन्त्यस्य

---

१ इदं वाक्यं क्वचिन्न। २ इदं वार्तिकमित्यन्ये। 'पिबि' पा०। ३ 'त्येषाऽङ्ग' । ४ 'विधिर्निष्ठितस्येति' । ५ 'पिबे' पा०। ६ 'धातोः'(६-१-१६२) इत्यत्रोक्तम् ।

## जुसि च ॥७।३।८३॥

॥*॥ जुसि गुणे यासुद्प्रतिषेधः ॥*॥ जुसि गुणे यासुडादौ प्रतिषेधो वक्तव्यः । चिनुयुः सुनुयुरिति ॥ [ स तर्हि प्रतिषेधो वक्तव्यः ?] । न वक्तव्यः । नैवं विज्ञायते—'मिदेर्गुणः जुसि चे'ति ॥ कथं तर्हि ? ॥ 'मिदेर्गुणोऽजुसि चे'ति ॥ किमिदम्–'अजुसी'ति ? ॥ अजादावुस्यजुसीति ॥ इहाऽपि तर्हि प्राप्नोति–'चक्रुः जहु'रिति ॥ एवं तर्हि शितीति वर्तते ॥ एवमप्यजुहवुः अबिभयुरित्यत्र न प्राप्नोति ॥ ननुच भूतपूर्वगत्या भविष्यति ॥ न सिध्यति, न ह्युस् शिद्भूतपूर्वः ॥ उस् शिद्भूतपूर्वो नास्तीति कृत्वा उसि यश्शिद्भूतपूर्वस्तस्मिन् भविष्यति ॥ अथ वा क्रियते न्यास एव–अविभक्तिको निर्देशः । नैवं विज्ञायते–'मिदेर्गुणो जुसि चे'ति॥कथं तर्हि ? ॥ 'मिदेर्गुण उ जुसि[1] चे'ति ॥ किमिदमु जुसीति ?॥ उकारादौ जुसि [उ जुसीति] । अथ वाऽचीति वर्तते तेन जुसं विशेषयिष्यामो'ऽजादौ जुसी'ति ॥ [ जुसि च ] ॥

## जाग्रोऽविचिण्णल्ङित्सु ॥ ७।३।८५ ॥

इह जागरयति जागरक इति गुणे कृते रपरत्वे चाऽत उपधाया इति

---

प्र.]श्रवणार्थम्।एतद्दीर्घोच्चारणे तु ज्ञापके तदाकारविधानमाकारश्रवणार्थम्।[ज्ञाजनो]।

**जुसि च । चिनुयुरिति** । तद्भक्तस्तद्ग्रहणेन गृह्यत इति गुणप्रसङ्गः । **शितीति वर्तत इति** । 'ष्ठिवुक्लमुचमां शिती'त्यतः । न च लिटि शिदस्ति । **एवमपीति** । 'उसि शिती'ति सामानाधिकरण्येन संबन्धं मन्यते। इतरस्तूसि यः शित्, तस्मिन्निति संबन्धं मत्वाह–**भूतपूर्वगत्येति** । प्रत्ययलक्षणस्तु नास्ति, 'न लुमताऽङ्गस्ये'ति निषेधात् । **उकारादाविति** । यासुडादेरनुकारादित्वाद्ग्रहणाऽभावः । अनुबन्धनिर्देशाच्च लिडादेशस्योसो ग्रहणाऽभावः । **अचीति वर्तत इति** । 'क्सस्याची'त्यतः । [ जुसि च ] ।

**जाग्रोऽवि । इहेति** । अङ्गवृत्त इत्यनाश्रित्योच्यते। गुणस्याऽवकाशः–जागरित

---

उ.] प्लुतो न स्यात् । 'अत आत्'–इत्येव सिद्धे तत्रत्यदीर्घग्रहणस्य प्लुतव्यावर्त्तकताया हरदत्तादिभिरुक्तत्वात् , अतएव पचामि भोरित्यादौ न प्लुतः । नचाऽनन्त्यपदस्य टेरिति तदर्थातपचामीत्यादौ तत्प्राप्त्यभावेन किमर्थं दीर्घग्रहणेन तन्निराकरणमिति वाच्यम्, दीर्घग्रहणसामर्थ्येनाऽन्त्यविषय एव टेरित्यस्य सम्बन्धादितिचेन्न ; ज्ञापकपरभाष्यप्रामाण्येन तत्रत्यदीर्घग्रहणस्य स्पष्टार्थतया तदर्थकत्वाऽभावकल्पनात् ॥

**जुसिच । नच लिटीति** । जुसि यः शित्तत्र परेऽङ्गस्य गुण इति सूत्रार्थः । ननु प्रत्ययलक्षणसत्त्वे किं भूतपूर्वगत्येत्यत आह—**प्रत्ययलक्षणन्त्विति** । भाष्ये–**गुण उ जुसीति** । गुणेति लुप्तविभक्तिकमिति भावः । [ **जुसि च** ] ॥

**जाग्रो । अनाश्रित्येति** । अगतिकगतित्वादिति भावः । तस्या असत्त्वाच्चे-

---

१ 'क्वचिन्नेदं' । २ "मिदेर्गुणोऽजुसि चेत्यविभक्तिको निर्देशः" वार्त्तिकं परे ।

**वृद्धिः प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः** ॥*॥ चिण्णलोः प्रतिषेधसामर्थ्यादन्यत्र गुणभूतस्य वृद्धिप्रतिषेधः ॥*॥ **यदयमचिण्णलोरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'न गुणाभिनिर्वृत्तस्य वृद्धिर्भवती'ति ॥**

**किं पुनरयं पर्युदासो—'यदन्यद्विचिण्णलिड्भ्य' इति, आहोस्वित्प्रसज्याऽयं प्रतिषेधो–'विचिण्णल्ङिल्सु ने'ति ? ॥ कश्चाऽत्र विशेषः ?** ॥*॥ प्रसज्य प्रतिषेधे जुसि गुणप्रतिषेधप्रसङ्गः 'उत्तमे च[3] णलि' ॥*॥ **प्रसज्य प्रतिषेधे जुसि गुणप्रतिषेधः प्राप्नोति–अजागरुः ।** *उत्तमे च णलि* । **उत्तमेचणलि प्रतिषेधः प्राप्नोति–अहं जजागर[3] ।** ॥*॥ न वाऽनन्तरस्य प्रतिषेधात् । **न वैष दोषः ॥ किं कारणम् ? ॥ 'अनन्तरस्य प्रतिषेधात्' । अनन्तरं यद्गुणविधानं[4] तस्य प्रतिषेधः ॥ कुत एतत् ? ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति ।** ॥*॥ जुसि पूर्वेण गुणविधानम् ॥*॥ **जुसि पूर्वेण गुणो विधीयते 'जुसि चे'ति ।** ॥*॥ णलि च ॥*॥ **[णलि च][5] । किम् ? ॥ 'न वानन्तरस्य[6] प्रतिषेधा'दित्येव । णलि च पूर्वेण गुणो विधीयते–'सार्वधातुकार्धधातुकयो'रिति ॥**

---

**प्र.]**इति । 'अचो ञ्णिती'ति वृद्धेरवकाशः–कारक इति । 'जागरयती'त्यादावुभयप्रसङ्गे परत्वाद्गुणे कृते'ऽत उपधाया' इति वृद्धिः प्राप्नोति । **गुणभूतस्येति** । गुणशब्दः स्वरूपपदार्थकः । गुणशब्देन भूतो निष्पन्नो-गुणभूतः । एवं गुणशब्देनाऽभिनिर्वृत्तो गुणाऽभिनिर्वृत्तः । यद्यनेन गुणे कृतेऽत उपधाया इति वृद्धिःस्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात्, कृते गुणे वृद्ध्या रूपस्य सिद्धत्वात्, तस्माच्चिण्णलोः प्रतिषेध उपधावृद्ध्यभावस्य ज्ञापकः । वृद्धिमात्राऽभावस्य तु न ज्ञापकः,–तथा च 'ह्यन्तक्षणे'त्यत्र जागृग्रहणमजागरीदित्यत्र वृद्धिनिषेधार्थं कृतम् । अन्यथा गुणे कृते 'अतो ल्रान्तस्ये'त्यनेन वृद्धिर्न भविष्यतीति किं जागृग्रहणेन ?। **अजागरुरिति** । लङ् ।'सिजभ्यस्तविदिभ्यश्चे'ति जुसादेशः, तस्य ङित्त्वाज्जुसि चेत्यनेनापि प्राप्तस्य गुणस्य निषेधः प्राप्नोति । तथा 'जजागरे'त्यत्र णित्त्वाऽभावपक्षे 'सार्वधातुकार्धधातुकयो'रित्यनेनाऽपि प्राप्तस्य गुणस्य निषेधप्रसङ्गः । पर्युदासपक्षे तु न दोषः । तत्र विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते न च तेषु निषिध्यत इति लक्षणाऽन्तरेण गुणः प्रवर्तत एव ।

---

**उ.]**त्यन्ये । ननु गुणात्पूर्वमचो ञ्णितीति वृद्धिः किं न शक्यतेऽत आह—**गुणस्येति** । 'अचिण्णलो'रित्यनेन वृद्धिविषयेऽस्य गुणस्य विशिष्य विधानादपवाद इति वक्तुं युक्तम् । **निष्पन्न इति** । भूधातुरुत्पत्त्यर्थ इति भावः । **किं जागृग्रहणेनेति** । तत्र तु सामान्यापेक्षज्ञापकत्वमाश्रित्य जागृग्रहणं प्रत्याख्यातमुपाध्यायैः । अत्रत्यभाष्यस्वरसोऽपि सामान्यापेक्षज्ञापकत्व एव दृश्यते । **निषेधप्रसङ्ग इति** ।

---

१ इदं क्वचिदपि नास्ति । २ इदमिह प्रायो नास्ति, अग्रेच इदं वार्त्तिकत्वेनान्यैः पठितम् । ३ 'जजागार' पा० । ४ 'विधानं' पा० । ५ इदं क्वचिदपि नास्ति । ६ मन्तरप्रतिषे' पा० ।

**अथ वा पुनरस्तु पर्युदासः** ॥*॥ अतोऽन्यत्र विधाने वावगुणत्वम् ॥*॥ **अतोऽन्यत्र विधाने वावगुणत्वं वक्तव्यम्। जागृविः।** ॥*॥ न वा पर्युदाससामर्थ्यात् ॥*॥ **न वा वक्तव्यम्॥ किं कारणम्? ॥ [ 'पर्युदाससामर्थ्यात्' ] । पर्युदाससामर्थ्यादत्र गुणो न भविष्यति ॥ अस्त्यन्यत्पर्युदासे प्रयोजनम्॥ किम्?॥ क्विबर्थं पर्युदासः स्यात्। शुद्धपरस्य विशब्दस्य प्रतिषेधेग्रहणम्[1],अनुनासिकपरश्च क्वौ विशब्दः॥ वस्वर्थन्तर्हि पर्युदासः स्यात् जागृवांसो अनुग्मन्॥ कथं पुनर्वेः पर्युदास उच्यमानो वस्वर्थः[2] शक्यो विज्ञातुम्? ॥ सामर्थ्याद्वस्वर्थमिति[3] विज्ञास्येत।** ॥*॥ वस्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम् ॥*॥ **वस्वर्थमिति[3] चेत्तन्न॥ किं कारणम्? ॥ 'सार्वधातुकत्वात्सिद्धम्' । [ सार्वधातुकत्वात्सिद्धमेतत्[4] ] ॥ कथं सार्वधातुकसंज्ञा? ॥ छान्दसः क्वसुः, लिट् छन्दसि सार्वधातुकमपि भवति। तत्र**

---

**प्र.]**जागृविरिति। 'ग्रहजागृभ्यो वि'न्निति सूत्रपाठाश्रयेण चोद्यते। यदा तु 'जृशस्तृजागृभ्यः क्वि'न्निति पाठस्तदा किन्त्वादेवार्धधातुकलक्षणगुणाऽप्रसङ्गः। यद्यपि प्रसज्यप्रतिषेधेऽप्ययं दोषोऽनन्तरस्य निषेधात्, तथापि पर्युदासो दोषवानिति प्रतिपादनायेदमुच्यते। **न वेति।** यदि 'जागृवि'रित्यत्र लक्षणान्तरेण गुणः स्याद्वेः पर्युदासोऽनर्थकः स्यात्। **क्विबर्थ(म्)इति।** नहि लक्षणाऽन्तरेण गुणप्रसङ्गः। नचाऽत्र तदनुबन्धकपरिभाषोपतिष्ठते, अनुबन्धस्याऽनिर्देशादिति 'वि'ग्रहणेन क्विबपि गृह्यत इति भावः। **शुद्धपरस्येति।** विशब्दे इकारो निरनुनासिक उच्चारित इति क्विपो ग्रहणं नास्ति। तस्य हीकारोऽनुनासिकः। **वस्वर्थ इति।** विशब्दः सप्तम्यन्तो निर्दिश्यते, निपातनाच्च सप्तम्या अलुक्, यथा-'वरेयलोपे'ति। अथ वा इकार उच्चारणार्थ इति तत्र तदादिविधानात् क्वसोर्ग्रहणं भवतीति भावः। इतरस्तु यथोक्तमप्रतिपद्य 'वी'ति समुदायो निर्दिष्ट इति मत्वाह-**कथं पुनरिति।** इतरः पूर्वोक्तेनाभिप्रायेणाह—**सामर्थ्यादिति।** औणादिको न पर्युदस्यते, लक्षणान्तरेण प्रसङ्गादिति सामर्थ्याद्वकारादेः क्वसोर्ग्रहणमित्यर्थः। **छान्दस इति।** भाषायां सदवस-

---

**उ.]**तत्र पक्षे विशेषाऽभावेन सर्वस्य गुणस्य निषेधः स्यादिति भावः। भाष्ये-**पूर्वेणेति।** व्यवहितपूर्वेणेत्यर्थः। **तथापीति।** त्वत्पक्षोऽपि दुष्ट इति प्रसज्यप्रतिषेधवादिना प्रतिपाद्यत इत्यर्थः। **नहि तत्रेति।** कित्वादिति भावः। ननु क्विपो ह्यनुबन्धकत्वाद्ग्रहणं नेत्यत आह-**नचात्र तदन्विति। तस्य हीकार इति।** विधेयविषये उच्चारणार्थवर्णानामपीत्संज्ञालोपौ। अन्यथा तद्विशिष्टविधिसंभावनया तदश्रवणे मानाऽभावादिति भावः। ननु वसौ विशब्दाऽभावात्कथमत्र ग्रहणमाशङ्क्यतेत्यत आह-**विशब्द इति।** औणादिकविशब्दग्रहणेन सप्रयोजनत्वात्कथं सामर्थ्यमत आह—**औणादिक इति।** 'लिटः कानज्वा क्वसुश्चे'त्यत्र 'छन्दसी'त्यनुव-

---

१ 'प्रतिषेधग्रहणं'। २ 'वस्वर्थं'। ३ 'क्वस्वर्थं' पा०। ४ अयमंशः क्वचिन्न।

'सार्वधातुकमपिन्ङि'दिति ङित्वात्पर्युदासो भविष्यति ॥ अथ वा वकारस्यैवेदमशक्तिजेनेकारेण ग्रहणम् ॥ [ जाग्रोऽविचिण्णल्ङित्सु ]॥

## पुगन्तलघूपधस्य च ॥ ७।३।८६ ॥

॥*॥ संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ॥*॥ संयोगे गुरुसंज्ञायां भेत्ता भेत्तुमिति गुणो न प्राप्नोति । ॥*॥ विध्यपेक्षं लघोश्चासौ ॥*॥ विध्य-

प्र.] श्रुभ्य एव क्वसुर्नान्येभ्य इति भावः। केचित्तु भाषायामपि क्वसुमिच्छन्ति त एवं परिहरन्ति–'असंयोगाल्लिङ्कि'दिति सिद्धे कित्त्वे क्वसोः कित्त्वं प्रतिषेधविषयस्याऽपि गुणस्य प्रतिषेधार्थमिति क्वसौ गुणाऽभावः । **अथ वेति ।** अनच्कस्य हल उच्चारयितुमशक्यत्वादिकार उच्चारणार्थो निर्दिष्ट इति वकारादेर्ग्रहणं,क्वसौ (च) प्रतिविहितमिति औणादिक एव पर्युदस्यते, तत्सामर्थ्याल्लक्षणान्तरेणापि गुणो न भवति, क्विपस्तु लोपाद्वर्णाश्रये प्रत्ययलक्षणनिषेधाच्च पर्युदासं नेच्छन्ति। **अन्ये** तु यथाऽतृणेडिति प्रत्ययलक्षणेन इमागमो भवति वर्णस्य प्रत्ययविशेषणत्वादेवं क्विपोऽपि पर्युदास इत्याहुः । [ **जाग्रोऽविचिण्णल्ङित्सु** ] ॥

**पुगन्त । संयोग इति ।** धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये संयोगे गुर्विति गुरुसंज्ञायां लघुसंज्ञाया बाधनाद्भेत्तेति गुणो न भवति । अजादौ च 'भेदन'मित्यादौ सावकाशो गुणः । **विध्यपेक्षमिति ।** 'गुणविधान'मिति शेषः । लघूपधस्य ये सार्वधातुकार्धधातुके तयोरङ्गस्य गुण इत्यर्थः । ननु पञ्चम्यभावात्कथं विधानं भविष्यति । उच्यते। षष्ठीपक्षे(ऽपि) लघूपधस्य ये सार्वधातुकार्धधातुके, के च तस्य, ये तस्माद्विधीयेते इत्युपपद्यते विधानविशेषणम् । ननु सांप्रतिकलघूपधसंभवे कथं

उ.] र्तनादिति भाष्याभिप्रायः। अतएव 'भाषायां सदे'ति चरितार्थम् । **केचित्त्विति ।** संयोगान्तधातुभ्यस्तु अनभिधानात्क्वसुरेव नेति तदाशयः । भाष्यविरोधोऽत्रारुचिः । कित्त्वन्तु तितीर्वानित्यादौ 'ऋच्छत्यृता'मिति गुणनिषेधेन चरितार्थमिति बोध्यम् । वस्तुतो 'विभाषा पूर्वाह्णे'ति सूत्रस्थभाष्यप्रामाण्याद्भाषायां क्वस्वङ्गीकारेऽपि जागृधातोर्लोके तस्याऽनभिधानाद्दोषाऽभाव इति वक्तुं युक्तम् । 'अथवा वकारस्ये'ति भाष्यग्रन्थो 'वस्वर्थः शक्यो विज्ञातुं, सामर्थ्या'दित्युत्तरं बोध्यः । तेनैव सङ्गतेः । **प्रत्ययलक्षणप्रतिषेधाच्चेति ।** च्विणादिसाहचर्येण श्रूयमाणस्यैव वेर्ग्रहणाच्चेत्यपि बोध्यम् । अतएव भाष्योक्तपूर्वपक्षेणाऽविरोधः । **अन्येत्विति ।** भाष्योक्तपक्षयोः फलभेदोऽत्रारुचिः । [ **जाग्रोऽविचिण्णल्** ] ॥

**पुगन्तल । गुणविधानमितीति ।** भाष्येऽपि लघुग्रहणशब्देन गुणविधानं लक्ष्यत इति बोध्यम् । **तयोरङ्गस्येति ।** प्रत्यासत्त्या लघूपधस्याऽङ्गस्येत्यर्थः । **केच तस्येति ।** अङ्गप्रत्यययोर्विधाननिमित्तसंबन्धस्याऽङ्गसंज्ञाशास्त्रे दृष्टत्वादिति भावः । भाष्ये–लघोश्चासावित्यस्य—लघूपधाचासावित्यर्थः । **सांप्रतिकलघूपधसंभवे**

१ श्लोकवार्त्तिकमेतत् । २ 'लघूपधाद्ये विहिते' पा० ।

**पेक्षं लघुग्रहणं कृतं, लघोश्चाऽसौ विहितः ।**

॥*॥ कथं कुण्डिर्न दुष्यति ? ॥*॥ **कुण्डिता हुण्डिता,—अत्र कस्मान्न भवति ?** ॥*॥ धातोर्नुमः । *॥ **धातोर्नुम्विधावुक्तं, तत्र धातुग्रहणस्य प्रयोजनं 'धातूपदेशावस्थायामेव नुम्भवती'ति ।** ॥*॥ कथं रञ्जेः ॥*॥ **कथं रञ्जेरुपधालक्षणा वृद्धिः ?—आश्चर्यो रागः विचित्रो रागः** ॥*॥ स्यन्दिश्रन्थ्योर्निपातनात् ॥*॥ **यदयं स्यन्दिश्रन्थ्योरवृद्ध्यर्थं निपातनं करोति तज्ज्ञापयत्याचार्यो—'भवत्येवञ्जातीयकानां वृद्धि'रिति ॥**

॥*॥ अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः॥*॥ **अनल्लोपः—दध्ना सक्थ्ना । शिदीर्घत्वं—कुण्डानि वनानि॥ एवं तर्हि—**॥*॥ अभ्यस्तस्य यदाऽहाचि ॥*॥

---

**प्र.]** विधानं विशेष्यते, व्याप्तिन्यायाश्रयात्, एवं हि हलादावजादौ च गुणः सिध्यति। **कथं कुण्डिरिति** । अङ्गाधिकारे नुमो विधानादकृत एव नुमि प्रत्ययो लघूपधाद्विधीयते, तस्मिन् परतो नुमि गुणः प्राप्नोति । **उक्तं तत्रेति** । तेन 'कुण्डे'ति 'गुरोश्च हल' इत्यकारः सिध्यति, अन्यथा क्तिन् स्यात् । **कथं रञ्जेरिति**। यदि षष्ठीनिर्देशे (ऽपि) विधानं विशेष्यते तदान्यत्राऽपि प्रसङ्गः। ततश्चाऽकारोपधाद्विहिते प्रत्यये वृद्धिर्विधीयमाना रञ्जेः प्रत्ययोत्पत्तेः पुरस्तान्नकारोपधत्वाद्वृद्धिर्न प्राप्नोति । **राग इति** । 'रञ्जेश्च' 'घञि च भावकरणयो'रिति नलोपः। ननु चोपधाया अकारस्य वृद्धिरुच्यते, न च ततः प्रत्ययविधिसंभव इति विध्यपेक्षत्वं नाश्रयिष्यते, एवं मन्यते—अकारोपधाद्यो विधीयते सोऽवयवादप्यनुमानाद्विहितो भवति। **स्यन्दिश्रन्थ्योरिति**। नलोपार्थं वृद्ध्यभावार्थं निपातनं। यदि च वृद्धिविधौ विधानं विशेष्यते ततो वृद्धिप्रसङ्गाऽभावात्तदभावार्थं निपातनं न[3] क्रियेत, नलोपसिद्धये विधिरेवाश्रीयेत । अनेकप्रयोजनसिद्धये निपातनाश्रयणम्। **अनल्लोपइति**। 'अल्लोपोऽन' इत्यत्र षष्ठीनिर्देशेऽन्नन्ताद्विहिते प्रत्यये लोपो विधीयमानो 'राज्ञ' इत्यादावेव स्यान्नाऽस्थ्ना दध्नेत्यादौ । शिदीर्घत्वं च 'सामानी'त्यादावेव स्यान्न तु 'कुण्डानी'त्यादौ । तस्मात् षष्ठीनिर्देशे विधानविशेषणे दोषप्रसङ्गाद्गुणो भेत्तुर्न सिध्यति । **अभ्यस्तस्येति** । अज्ग्रहणस्य

---

**उ.] इति** । स्थानषष्ठीत्वसंभवेन प्रधानगुणविशेषणत्वे संभवतीत्यर्थः । **अन्यथा क्तिन्स्यादिति**। ततश्चात्र लघूपधाद्विधानाऽभावेन न गुण इत्यर्थः। भाष्ये **धातोर्नुम** इति हेतौ पञ्चमी । यतस्तत्र धातोर्नुम्नाऽङ्गस्य तस्मादित्यर्थः । **कथं रञ्जेरिति** चोद्यस्य प्रकृते सङ्गतिं दर्शयति—**यदीति** । **अवयवादप्यनुमानादिति** । अवयवात्मकत्वात्समुदायस्येति भावः । ननु नलोपार्थमेव निपातनं स्यादत आह—**नलोपसिद्धये इति** । 'रञ्जेश्च' 'घञि चे'त्युत्तरमेव स्यदिश्रन्थी पठेदित्यर्थः। वार्त्तिके 'अनल्लोप' इति पाठे अनन्तस्य योऽल्लोपः सोऽनल्लोप इत्यर्थः । 'अनल्लोप' इति पाठे अनङो लोपोऽर्थात्तत्संबन्ध्यकारस्येत्यर्थः । **शिदीर्घत्वं**—'सर्वनामस्थाने चाऽसंबुद्धा'वित्य-

---

१ श्लोकवार्त्तिकमिदम् । २ 'रजेः' पा०। ३ 'वृद्धिः प्राप्नोति'। ४ सप्तम्यन्तं क्वचित् ।

**यदयं 'नाऽभ्यस्तस्याचि पिति सार्वधातुक' इत्यज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो—'भवत्येवंजातीयकानां गुण' इति** ॥*॥ लङर्थं तत्कृतं भवेत् ॥*॥ **लङर्थमेतत्स्यात्—अनेनेक्** ॥*॥ क्सनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥*॥

**'यदयं त्रसिगृधिधृषिक्षिपेः क्नुः' 'इको झल्' 'हलन्ताच्चे'ति क्सनौ कितौ करोति तज्ज्ञापयत्याचार्यो—'भवत्येवंजातीयकानां गुण' इति** ॥

॥*॥ संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ॥१॥
धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनड्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥२॥
अभ्यस्तस्य यदाऽहाचि लङर्थं तत्कृतं भवेत् ।
क्सनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥३॥*॥

## नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ७।३।८७ ॥

॥*॥ अभ्यस्तानामुपधाह्रस्वत्वमचि पस्पशाते चाकशीमि वावशतीरिति दर्श-

---

प्र.] प्रयोजनं 'नेनेक्ती'त्यादौ गुणप्रतिषेधो मा भूत्। यदि च हलादावलघूपधत्वाद्गुणो न स्यात्तदा गुणस्य प्राप्तिरेव नास्तीति किं तन्निषेधनिवारणार्थेनाऽज्ग्रहणेन ?। **लङर्थमिति** । लुप्ते प्रत्यये गुणप्रतिषेधनिवारणायाऽज्ग्रहणं न ज्ञापकम् । **अनेनेगिति** । 'णिजिर् शौचपोषणयो'रित्यस्माल्लङि तिप्शप्श्लुः। द्विर्वचनं । निजां त्रयाणां गुणः श्ला'वित्यभ्यासस्य गुणः । 'हल्ड्याब्भ्य' इति तिलोपः । प्रत्ययलक्षणेन लघूपधगुणः ।

**क्सनोरिति** । ननु सनः कित्त्वममभावार्थं स्यात्—सिसृक्षति दिदृक्षत इति कथं ज्ञापकम् ? । उच्यते । यद्येतावत्प्रयोजनं स्यात्—'सृजिदृशोर्झल्यमकित्सनो'रित्येव ब्रूयात्, तस्माद्गुणप्रतिषेधार्थमपि कित्त्वं ज्ञापकमेव । किन्तु धिप्सति धीप्सतीत्यत्र नलोपार्थं सनः कित्त्वं स्यादिति क्नोरेव कित्त्वं ज्ञापकम् । [ पुगन्तलघूपधस्य च ]

**नाभ्य । अभ्यस्तानामिति** । गुणप्रतिषेधमविधाय ह्रस्वत्वमेव विधेयं, सर्वेष्ट-

---

उ.] नेन। तत्रापि नान्ताद्विहिते सर्वनामस्थाने इत्यर्थः स्यादिति भावः। **लुप्ते प्रत्यय इति** । प्रत्ययलोपे संयोगाऽभावेन गुरुत्वाऽभावाल्लघूपधत्वमस्त्येवेत्यर्थः । **क्नोरेवेति** । संयोगात्परत्वे सति ह्रस्वत्वरूपलघुत्वशरीरघटकसंयोगस्य प्रत्यासत्त्याऽङ्गावयवस्यैव ग्रहणम्, ईदृशार्थाश्रयणे च क्नोः कित्त्वं ज्ञापकमिति भावः । यद्वा भूतपूर्वलघूपधत्वमाश्रित्य गुण इति भावः । परे तु—'सृजिदृशोर्झल्यमकित्सनि' 'इको झल्' 'रभे'रिति लघुन्यासेन सिद्धे सामान्यतोऽतिदेशस्य गुणप्रतिषेधार्थत्वमिति भाष्याशयः । 'इको झल्—हलन्ताच्चेति' प्रकरणे 'रुदविदे'ति सूत्रेण विहितसनः कित्त्वमपि ज्ञापकं बोध्यम् । [ पुगन्तलघूपधस्य च ] ।

**नाभ्यस्तस्याचि पिति सार्वधातुके** । 'गुणनिषेधविधौ सत्येव उपधाह्रस्वत्वं वक्तव्य'मिति वार्तिकाऽर्थभ्रमं निरस्यति—**गुणप्रतिषेधमिति** । गुणे तस्य ह्रस्वे

नात् ॥*॥ **अभ्यस्तानामुपधा(या) ह्रस्वत्वमचि वक्तव्यम् ॥ किं प्रयोजनम् ?॥ 'पस्पशाते चाकशीमि वावशतीरिति दर्शनात्'** । **पस्पशाते चाकशीमि वावशतीरिति प्रयोगो दृश्यते । 'कपोतः शरदं पस्पशाते' । 'अहं भुवनं चाकशीमि' । 'वावशतीरुदाज'दिति** ॥*॥ बहुलं छन्दस्यानुषग्जुजोषदिति दर्शनात् ॥*॥ **बहुलं छन्दसीति वक्तव्यमुपधाह्रस्वत्वम् ॥ किं प्रयोजनम् ? ॥ 'आनुषग्जुजोषदिति दर्शनात्' । यस्त आतिथ्यमानुषग्जुजोषत् ॥ यद्युपधाह्रस्वत्वमुच्यते 'प्रियां मयूरः प्रति नर्नृतीति' । 'यद्वत्त्वं नरवर ! नर्नृतीषि हृष्टः'[2]–अत्र गुणः प्राप्नोति । तस्मान्नाऽर्थ उपधाह्रस्वत्वेन ॥**

**कस्मान्न भवति–'पस्पशाते' 'चाकशी'ति 'वावशती'रिति ?॥** स्पशिकशिवशयः[3] प्रकृत्यन्तराणि ॥ [ नाभ्यस्तस्याचि पिति सार्वधातुके ] ॥

## भूसुवोस्तिङि ॥ ७।३।८८ ॥

॥*॥ भूसुवोः प्रतिषेधे तिङि[1] एकाज्ग्रहणं बोभवीत्यर्थम्[4] ॥*॥ **भूसुवोः**

प्र.]सिद्ध्य इति भावः। **किं प्रयोजनमिति**। गुणनिषेधे ह्रस्वे चाऽविशेषं मत्वा प्रश्नः ।

**पस्पशात इति** । स्पशिर्वार्तिककारवचनादपठितोऽपि धातुस्तस्माल्लेट् व्यत्ययेनात्मनेपदं, टेरेत्वं, लेटोऽडाटावित्याट्। शपो बहुलं छन्दसीति श्लुः द्विर्वचनम् । **चाकशीमीति**। काशृ दीप्तौ यङ्लुग् लट् मिप् शब्लुक् । 'यङो वे'तीडागमः। **वावशतीरिति** । 'वाशृ शब्दे' यङ्लुक् लट् शतृ ङीप् । **जुजोषदिति** । 'जुषी प्रीतिसेवनयोः । लेट् । व्यत्ययेन परस्मैपदं तिप् । 'इतश्च लोपः परस्मैपदे'ष्विति इकारलोपे लेटोऽडाटावित्यट् । व्यत्ययेन शपः श्लुः। द्विर्वचनं। गुणे कृते ह्रस्वाऽभावः। **यदि तर्हीति** । यदि गुणनिषेधं प्रत्याख्यायोपधाह्रस्वो विधीयते तदा नर्नृतीति गुणरपरत्वयोः कृतयोर्ह्रस्वभाविन्युपधा नास्तीति रूपं न सिध्यतीति गुणनिषेध एव ज्यायान् । ननु परत्वाद्गुणं बाधित्वा ह्रस्वो भविष्यति, 'सकृद्गतौ विप्रतिषेध' इति पुनर्गुणो न भविष्यति । एवं तर्हि पुनः प्रसङ्गविज्ञानाद्गुणः स्यात् । **स्पशिकशिवशय इति** । 'स्पश बाधनस्पर्शनयोः' 'कश गतिशासनयो'रिति केचित्पठन्ति । अन्ये तु 'कस गतिशासनयो'रिति, तन्मतेन कशिः सौत्रो धातुः । कशेर्मुट् । 'प्रतिष्कशश्च कशे'रिति पाठात् । 'वश कान्तौ' । [ **नाभ्यस्तस्याचि पिति सार्वधातुके** ] ॥

भू । **एकाज्ग्रहणमिति** । द्विर्वचने कृतेऽनेकाच्त्वे गुणनिषेधनिवृत्त्यर्थम् ।

उ.]इकि नेनिजतीत्यादिसिद्धेरिति भावः । **अविशेषमिति** । नेनिजतीत्यादावित्यर्थः । **उपधा नास्तीति** । जातेऽपि ह्रस्वे रूपाऽसिद्धेरेवेत्यपि बोध्यम् । **ननु परत्वादिति** । इदं चिन्त्यं, गुणस्य नित्यत्वात् । सौत्रत्वमुपपादयति–**कशेरिति** ॥

**भूसु** । **द्विर्वचने कृत इति**। उत्तरखण्डस्य भूत्वात्प्राप्तिः, । भूशब्दान्तस्याऽङ्गस्येत्यर्थ इति भावः । ननु 'माभू'दित्यत्रापि अनेकाच्त्वाद्गुणः स्यादत आह—

१ इदं क्वचिल्लुप्तम् । २ 'हृष्टम्' । ३ भाष्यमिदमित्यन्ये । ४ 'बोभवतीत्यर्थं' पा० ।

प्रतिषेधे एकाज्ग्रहणं कर्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'बोभवतीत्यर्थम्' । इह मा भूत् बोभवतीति ॥ यद्येकाज्ग्रहणं क्रियते—अभूत्—अत्र न प्राप्नोति ॥ क्व तर्हि स्यात् ?॥ 'मा भूत्' ॥ तस्मान्नाऽर्थ एकाज्ग्रहणेन ॥ कस्मान्न भवति 'बोभवती'ति ? ॥ [ ॥*॥ बोभूत्वित्येतन्नियमार्थम् ॥*॥ बोभूत्वित्येतन्नियमार्थं भविष्यति 'अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रे'ति ॥ क्व मा भूत्—बोभवतीति । [ भूसुवोस्तिङि ] ॥

## तृणह इम् ॥ ७।३।९२ ॥

किमर्थं तृहिरागतश्नम्को गृह्यते न 'तृहेरिम्भवती'त्येवोच्येत ?॥ ॥*॥ तृणहिग्रहणं श्नमिमोर्व्यवस्थार्थम्॥*॥ तृणहिग्रहणं [क्रियते॥ किं प्रयोजनं ? ॥ 'श्नमिमोर्व्यवस्थार्थम्' । ] श्नमि कृते इम्यथा स्यात् ॥*॥ तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वात् ॥*॥ तृहिग्रहणे हि सतीम्विषये श्नमोऽभावः स्यात् ॥ किं कारणम् ? ॥ 'अनवकाशत्वात्' । अनवकाश इम् श्नमं बाधेत ॥ इदमयुक्तं वर्तते॥ किमत्राऽयुक्तम् ? ॥ "तृणहिग्रहणं श्नमिमोर्व्यवस्थार्थ"मित्युक्त्वा, तत उच्यते—"तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वा"दिति । तत्र वक्तव्यं—'तृणहिग्रहणं श्नमिमोर्भावाय, तृहिग्रहणे हीम्विषये

---

प्र.]बोभवतीति। यङ्लुगन्ताल्लेट् तिप्। 'लेटोडाटा'वित्यट् । मा भूदिति।न माङ्योग इत्यड्प्रतिषेधादेकाच्त्वम् । अत्रैवेति । सिद्धे गुणनिषेधे निपातनं नियमार्थम् ; यद्येवं सोषवीतीति,—गुणनिषेधः प्राप्नोति । उच्यते । यथा भाष्यं तथा भवत्येव, योगापेक्षं ज्ञापकमिति वक्तव्ये नियमार्थमिति वचनात् । अथ वा नियमार्थेन निपातनेन द्वयोरपि भूसुवोर्यङ्लुकि गुणनिषेधो निवार्यते । यद्वा छान्दसो यङ्लुक्, न च सुवो यङ्लुगन्तस्य छन्दसि प्रयोगः। भाषायां तु क्व चिद्यङ्लुग् भवति न सर्वत्र॥

तृणह । किमर्थमिति । 'तृहू' इत्यस्य निवृत्त्यर्थो विकरणनिर्देशो न भवति, ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानादिति प्रश्नः । नद्य-

---

उ.]न माङिति। नियमार्थमिति।'भवतेश्च यङ्लुकि निषेधस्तर्हि बोभूत्वित्यत्रैवे'ति नियम इत्यर्थः । अथवेति । 'भूसुवो'रिति यः प्रतिषेधः स यङ्लुकि चेद्बोभूत्वित्यत्रैवे'ति नियम इत्यर्थः । 'एकाज्ग्रहणं कर्तव्य'मिति वार्तिकेन समानफलकत्वाय द्विविधोऽत्र नियमः—'छन्दस्येव' 'लोट्येवे'ति च । अतएव वार्तिकारम्भे भाषायां गुणापत्तिर्दूषणं नोद्भावितमित्येके । परे त्वाहुः—भाषायामस्य यङ्लुगन्तप्रयोगे दृढतरं न मानं, बोभूत्वित्यस्य छान्दसेषु पाठस्तु यङ्लुकश्छान्दसत्वादेव । तदाह—भाषायां त्विति । [ भूसुवोस्तिङि ] ।

तृणह इम् । तृहू इत्यस्येति । नचाऽस्यैव यङ्लुगन्तस्य व्यावृत्त्यर्थं स्यादिति

---

१ 'बोभवी' पा० । २ 'बोभवीतीति' । इतिः क्वचिन्न । ३ इदं क्वचिदपि नास्ति । भाष्यमिदमित्यन्ये । ४ इदं क्वचिन्न । ५ 'श्नमभावः' पा० ।

श्नमभावोऽनवकाशत्वा'दिति ॥ तर्त्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । 'व्यवस्थार्थ'मित्येव सिद्धं, न ह्यसतो व्यवस्थाऽस्ति ॥ [ तृणह इम् ] ॥

## तुरुस्तुशम्यमः सार्वधातुके ॥ ७।३।९५ ॥

सार्वधातुक इति वर्तमाने पुनः सार्वधातुकग्रहणं किमर्थम् ? ॥ *॥ [ सार्वधातुक इति वर्त्तमाने ] पुनः सार्वधातुकग्रहणमपिदर्थम् ॥*॥ अपिदर्थोऽयमारम्भः । 'अध्रिगो शमीध्वं' 'सुशमि शमीध्वं' 'शमीध्वमध्रिगो' ॥

## बहुवचने झल्येत् ॥ ७।३।१०३ ॥

॥*॥ अतो दीर्घाद्बहुवचन एत्वं विप्रतिषेधेन ॥*॥ अतो दीर्घाद्बहुवचन एत्वं भवति विप्रतिषेधेन । 'अतो दीर्घो यञि' 'सुपि चे'त्यस्यावकाशः— वृक्षाभ्यां प्लक्षाभ्याम् । 'बहुवचने झल्ये'दित्यस्यावकाशो—वृक्षेषु प्लक्षेषु । इहोभयं प्राप्नोति—वृक्षेभ्यः प्लक्षेभ्यः । एत्वं भवति विप्रतिषेधेन ॥ [बहुवचने ] ।

## अम्बार्थनद्योर्ह्रस्वः ॥ ७।३।१०७ ॥

[॥*॥ डलकवतीनां प्रतिषेधः ॥*॥] ॥ डलकवतीनां प्रतिषेधो वक्तव्यः ।

---

प्र.]सत इति । 'व्यवस्थार्थ'मित्येवं ब्रुवता पूर्वं श्नमो भावः पश्चादिमित्युक्तं भवति । 'श्नमो भावाये'ति तूच्यमाने क्रमो न प्रदर्शितः स्यात् । [ तृणह इम् ] ॥

तुरु । अपिदर्थमिति । 'नाभ्यस्तस्याचि पिति सार्वधातुके'इति सार्वधातुकग्रहणं पिद्विशेषणसंबद्धमिति तदनुवृत्तौ पितोऽप्यनुवृत्तिः स्यादिति तन्निवृत्त्यर्थमन्यत्सार्वधातुकग्रहणमित्यपितोऽपि ईड्भवति । हल्ग्रहणमनुवर्तते, न हि तत्सार्वधातुकग्रहणेन सहनिर्दिष्टं, यतस्तन्निवृत्तौ हलो निवृत्तिः स्यात् । शमीध्वमिति । शमेरन्तर्भावितण्यर्थात्प्रैषे लेट् । व्यत्ययेनात्मनेपदं, शप् । तस्य 'बहुलं छन्दसी'ति लुक् ।

---

उ.]वाच्यं,सानुबन्धकत्वेनाऽस्थाऽग्रहणमित्यत्र तात्पर्यात् ।यङ्लुक्सत्त्वे मानाऽभावाच्च। भाष्ये—अनवकाशत्वादिति । नच श्नमि कृते तन्मध्यपतितन्यायेनेमोऽवकाशः, मिदचोऽन्त्यादित्येकवाक्यतया तृहोऽन्त्यादच ऋकारात्पर इमित्यर्थेन श्नमि ऋकारस्याऽन्त्यत्वाभावेन तदप्राप्तेः । पुनर्वाक्यार्थे तु न मानम् । अनेनैव न्यायेनेमि श्नमोऽभावः । तद्ध्वनयन्नाह—श्नमिमोर्भावायेति । न ह्यसतो व्यवस्थास्तीति च । यद्वा तत्कालेऽवश्यं प्राप्तिसत्त्वेन तदप्राप्तिविषयेऽवकाशाऽभावेनाऽनवकाशत्वमित्यर्थः । पूर्वमिति । 'व्यवस्थार्थ' मित्यनेन श्नमिमो भावः क्रमश्च दर्शित इति भावः । [ तृणहइम् ] ॥

तुरुस्तु । नन्वेवं हल्ग्रहणस्यापि निवृत्तिः स्यादत आह—हल्ग्रहणमिति । 'उतो वृद्धि'रित्यतः । ननु शमिरकर्मकस्तत्कथं पशुविशसनप्रत्यायकतया सकर्मकोऽत आह—शमेरिति । शबिति । अत्रापि 'व्यत्ययेने'त्यपकृष्यते, श्यन्विकरणो हि शमिः परस्मैपदी च । [ तुरुस्तुशम्यमः सार्वधातुके ] ॥

अम्बार्थ । ननु शब्दस्य विशेष्यत्वात्स्त्रीलिङ्गनिर्देशोऽनुपपन्नोऽत आह—

---

१ 'व्यवस्थेति' इति पा० । २ इदं क्वचिदपि नास्ति । ३ इदं क्वाचित्कम् ।

**अम्बाडे ! अम्बाले ! अम्बिके !** ॥*॥ तलू[1] ह्रस्वत्वं वा ङिसंबुद्ध्योः ॥*॥ **तलू[2] ह्रस्वत्वं वा ङिसंबुद्ध्योरिति वक्तव्यम् । देवत देवते । देवतायां देवते ॥**

**स तर्हि प्रतिषेधो वक्तव्यः ? ॥ न वक्तव्यः ॥ स कथं न वक्तव्यो भवति ?** ॥*॥ अम्बार्थं द्व्यक्षरं यदि ॥*॥ **यद्यम्बार्थं द्व्यक्षरं गृह्यते ॥**

**तत्तर्हि ह्रस्वत्वं वक्तव्यम् ?** ॥ [ ॥*॥ अवश्यं[3] छन्दसि ह्रस्वत्वमुपगायन्त मां पत्नयो गर्भिणयो युवतय इत्येवमर्थम् ॥*॥ ] । **अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्—उपगायन्तु मां पत्नयो गर्भिणयो युवतय इत्येवमर्थम्** ॥*॥ मातृणां मातच्पुत्रार्थमर्हते ॥*॥ **मातृणां मातजादेशो वक्तव्यः ॥ [किं प्रयोजनम् ? ॥][4]। 'पुत्रार्थमर्हते' । गार्गीमात वात्सीमात ॥** [ अम्बार्थनद्योर्ह्रस्वः ] ॥

---

प्र.] **अम्बा । डलकवतीनामिति** । अर्थगतेन स्त्रीत्वेनाम्बार्थाः शब्दा निर्दिष्टाः । श्रुत्यपेक्षया वा स्त्रीत्वेन निर्देशः । असंयुक्तानां च डलकानां ग्रहणादक्काऽल्लेति ह्रस्वो भवत्येव । **देवत इति**। ङौ ह्रस्वे कृते 'ङ्याब्ग्रहणेऽदीर्घ'इति स्थानिवत्त्वनिषेधादाम्याडागमौ न भवतः । **अम्बार्थमिति** । द्व्यच एवाम्बार्थस्य ग्रहणाड्डलकवतामर्थात्प्रतिषेधः कृतो भवति । **अवश्यमिति** । 'व्यत्ययो बहुल'मिति दीर्घस्य ह्रस्वः । **मातृणामिति** । पूर्वपदे बहवो मातृशब्दा इति बहुवचनं । मातृशब्दस्य मातजादेशो वक्तव्यो यो मातृशब्दः पुत्रार्थं पुत्रमभिधातुमुपादीयते।बहुव्रीहौ च वर्तिपदैरन्यपदार्थोऽभिधीयते इति तत्रैवाऽयं संबुद्धौ मातजादेशः। **गार्गीमातेति**। गार्गी माता यस्येति बहुव्रीहौ 'नद्यृतश्चे'ति कप् 'येननाऽप्राप्त' इति मातजा बाध्यते । यः पुत्रः श्लाघ्यगुणत्वात्कुलसंभूतया मात्रा व्यपदेशमर्हति तत्र मातजादेशो, न त्वन्यत्र । गर्गवत्साभ्यां गर्गादिभ्यो यञ् । 'यञश्चे'ति ङीप् । [ **अम्बार्थनद्योर्ह्रस्वः** ] ।

---

उ.]**अर्थगतेनेति।अम्बा**–माता। **श्रुत्यपेक्षयेति**।शब्द एव विशेष्योऽध्याहर्तव्य इत्यर्थः। **असंयुक्तानामिति**। अतएव प्रत्याख्यानेन फलैक्यं । भाष्ये–**द्व्यक्षरमिति** । व्यञ्जनसहितोऽच्–अत्राक्षरम् । 'द्व्यजम्बार्थे'ति सूत्रं पाठ्यं । प्रतिषेधाच्चेदं लभ्यिति भावः। **तत्तर्हि ह्रस्वत्वमिति** । 'तल्ह्रस्वत्वं वे'त्येतत्। तलन्तस्य ह्रस्वत्वं वेति तदर्थः । **पूर्ववदेवेति** । अर्थगतं पूजाद्योतकं बहुत्वमादाय बहुवचननिर्देश इत्यर्थः । 'पूर्वपदे बहव' इति पाठे तु–सति पूर्वपदे उत्तरपदभूतास्ते बहव इत्यर्थः । कथं मातृशब्दस्य पुत्रार्थाऽभिधानायोपादानमत आह–**बहुव्रीहौ चेति**। 'अर्हत' इत्यस्योपयोगमाह–**यः पुत्र इति** । **श्लाघ्यत्वादिति**। एतच्चाऽर्हः प्रशंसायामिति प्रशंसाऽर्थविहितशतृप्रयोगाल्लभ्यते । 'पुत्रार्थमर्हते' इत्यत्र सापेक्षत्वेऽप्यत एव निपातनात्समासः । **नान्यत्रेति**। यत्र पितुरसंविज्ञानेन मात्रा व्यपदेशस्तत्र न भवतीत्यर्थः।[**अम्बार्थ**]।

---

१ 'तलो' २ 'तलो ह्रस्वत्वं' पा० । ३ मन्ये ईदृशमिदमेव वा वार्त्तिकमत्र लुप्तं तस्य च व्याख्यामात्रमुपलभ्यते सम्प्रति । "अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्" इति वार्त्तिकं, तथैव तद्व्याख्यानं च 'क' पुस्तके । ४ इदं क्वचिन्न ।

## ह्रस्वस्य गुणः ७।३।१०८।

इह कस्मान्न भवति—नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु ?॥ 'ह्रस्ववचनसामर्थ्यात्'।[1] अस्त्यन्यद्ध्रस्ववचने प्रयोजनम् ?॥ किं[2] ?॥ पृथग्विभक्तिमोच्चीचरमिति ॥ शक्या[3] पृथग्विभक्तिरनुच्चारयितुम् ॥ कथम् ? ॥ एवमयं ब्रूयात् 'अम्बार्थानां ह्रस्वः' 'नदीह्रस्वयोर्गुण' इति॥ यद्येवमुच्यते 'जसि चे'-त्यत्र नद्या अपि गुणः प्राप्नोति ॥ एवं तर्हि योगविभागः करिष्यते—'अम्बार्थनद्योर्ह्रस्वः'। ततो 'ह्रस्वस्य'। ह्रस्वस्य च ह्रस्वो भवति ॥ किमर्थमिदं ? ॥ गुणं वक्ष्यति तद्बाधनार्थम् ॥ ततो 'गुणः'। 'गुणश्च भवति ह्रस्वस्ये'ति ॥ अथ वा 'ह्रस्वस्य गुण' इत्यत्राऽम्बार्थनद्योर्ह्रस्व इत्येतदनुवर्तिष्यते ॥ [ह्रस्वस्य गुणः]।

## जसि च ॥ ७।३।१०९ ॥

॥*॥ जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधायाः ॥*॥ जसादिषु छन्दसि वेति वक्तव्यम् ॥ किमविशेषेण ? ॥ 'ने'त्याह। 'प्राङ्णौ चङ्युप-

---

प्र.] ह्रस्व। इह कस्मादिति। ह्रस्वविधानं नद्या गुणविध्यर्थमेव स्यात्। पृथगिति। यद्यम्बार्थानां ह्रस्व इत्युक्त्वा 'नद्या गुणो ह्रस्वस्य चे'त्युच्यते तदा[4] पृथगुच्चारयितव्या भवति। एवमयं ब्रूयादिति। ह्रस्वं विधाय गुणे विधीयमाने प्रक्रियागौरवं भवतीति लाघवार्थं साक्षादेव गुणं विदध्यात्। नद्या अपीति। एकसमासनिर्देशाद्द्वयोरपि नदीह्रस्वयोरनुवृत्तिप्रसङ्गात्। ह्रस्वस्य चेति। 'ह्रस्वस्ये'त्यत्राम्बार्थनद्योरित्यनुवर्तते, तेन नद्या ह्रस्वे कृते तस्य गुणबाधनाय ह्रस्व एव क्रियते। अथवेति। सिद्धे ह्रस्वे पुनरनुवृत्त्या तद्विधानं गुणबाधनार्थम्। [ ह्रस्वस्य गुणः ] ॥

जसि च। जसादिष्विति। आदिशब्दः प्रकारवाची। प्रकरणेऽस्मिन्येषु कार्यं

---

उ.] ह्रस्वस्य। ननु 'नदी'त्यादौ ह्रस्वविधानाद्गुणो न भविष्यतीत्यत आह—ह्रस्वविधानमिति। पृथग्विभक्तिरिति। तथा च गौरवं स्यादित्यर्थः। एवञ्च तत्परिहारायैवमुच्यते इति सामर्थ्योपक्षयान्नदीत्यादौ गुणः स्यादेवेति भावः। नन्वेवं निर्देशस्य यथान्यासेन समानत्वाल्लाघवाऽभावेन 'एवं ब्रूया'दित्ययुक्तमत आह—ह्रस्वं विधायेति। साक्षादेवेति। तदविधानाच्च गुणाभावोऽनुमीयत इत्यर्थः। तेन नद्या इति। अम्बार्थानां पुनर्ह्रस्वविधाने प्रयोजनाभावान्नदीविषयमेतद्ध्रस्वविधानमित्यर्थः। मातृशब्दे 'ऋतो ङी'ति गुणबाधोऽपि स्यादिति नदीग्रहणमात्रमनुवर्तत इति तत्त्वम्। पुनरनुवृत्त्येति। वाक्यभेदेनेत्यर्थः। 'अम्बार्थनद्योर्गुण' इत्येव सिद्धे ह्रस्वविधानसामर्थ्यान्न गुण इति कश्चित्तन्न, इक्परिभाषोपस्थितावम्बेत्यादौ गुणाऽनापत्तेः। तदनुपस्थितौ तु मातृवाचकाऽनःशब्देऽपि गुणापत्तेः। तस्य नपुंसकत्वेऽपि 'त्रपो' इतिवत्पक्षे गुणापत्तिरिति बोध्यम्। [ ह्रस्वस्य गुणः ] ॥

---

१ इदं वार्त्तिकमित्यन्ये। २ इदं क्वचिन्न। ३ 'शक्यं' पा०। ४ 'तथा' पा०।

धायाः' ॥ किं प्रयोजनम् ?॥ ॥*॥ अम्बे दर्वि शतक्रत्वः पश्वे नृभ्यः[1] किकिदीव्या ॥*॥ अम्बे–अम्ब । दर्वे[2]–दर्वि । शतक्रत्वः–शतक्रतवः । पश्वे नृभ्यः, पशवे नृभ्यः। किकिदीव्या–किकिदीविना ॥ [ जसि च ] ॥

## घेर्ङिति ॥ ७।३।१११ ॥

॥*॥ घेर्ङितिगुणविधाने ङीसार्वधातुके प्रतिषेधः ॥*॥ घेर्ङितिगुणविधाने ङीसार्वधातुके प्रतिषेधो वक्तव्यः । पट्वी मृद्वी कुरुत इति ॥*॥ सुबधिकारात्सिद्धम् ॥*॥ [सुबधिकारात्सिद्धम् ]। सुबिति वर्तते॥ क्व प्रकृतम् ? ॥ 'सुपि च' 'बहुवचने झल्ये'दिति ॥ [ घेर्ङिति ] ॥

## याडापः ॥ ७।३।११३ ॥

इह[1]ातिखट्वाय अतिमालायेति ह्रस्वत्वे कृते स्थानिवद्भावाद्याड्प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। न वक्तव्यः ॥*॥ याड्विधानेऽतिखट्वायेत्यप्रतिषेधो ह्रस्वादेशत्वात् ॥*॥ याड्विधानेऽतिखट्वायातिमालायेत्यप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ याट्कस्मान्न भवति ?॥ ह्रस्वादेशत्वात्' । ह्रस्वादेशोऽयम् । उक्तमेतत्[3] 'ङ्याब्ग्रहणेऽदीर्घ' इति ॥ अथेदानीमसत्यपि स्थानिवद्भावे दीर्घ-

---

प्र.]विधीयते ते जसादय इति पूर्वयोगनिर्दिष्टानामपि ग्रहणम् । दर्वीति।'कृदिकारादक्तिन' इति पक्षे ङीष्विधानात्सिध्यति रूपद्वयम् । ङीष्विकल्पं त्वनपेक्ष्यैतदुक्तम् ।

शतक्रत्व इति। 'जसि चे'ति गुणाऽभावपक्षे 'प्रथमयो'रिति पूर्वसवर्णदीर्घोऽपि 'वाछन्दसी'ति वचनान्न भवतीति यणादेशः प्रवर्तते । किकीदिविशब्दः कृविघृष्वित्युणादिषु निपातितः । [ जसि च ] ॥

घेः । कुरुत इति । 'शेषो घ्यसखी'ति यस्य नदीसंज्ञा नास्ति स घिसंज्ञ इति कुरुशब्दो घिः ।[ घेर्ङिति ] ॥

याडा । अतिखट्वायेति । खट्वामतिक्रान्त इति प्रादिसमासे ह्रस्वे च कृते चतुर्थ्येकवचनस्य 'ङेर्य' इति प्राप्नोति, 'याडाप' इति च, तत्र परत्वाद्याड्प्राप्नोति, तत्र कृते दीर्घत्वे चाऽतिखट्वायै देवदत्तायेतिप्रसङ्गः।ह्रस्वादेशत्वादिति। यतो ह्रस्वादेशः कृतस्ततो रूपभेदादाब्ग्रहणेन तस्य ग्रहणाऽभावात्। स्थानिवत्त्वं च नास्तीत्याह–

---

उ.] जसि च । प्रकारः–सादृश्यं । तच्चैकप्रकरणनिर्दिष्टत्वनिबन्धनं । किकीदिविः–पक्षिविशेषः । अनपेक्ष्येति । तदा ह्येकमन्तोदात्तं स्यात् । आद्युदात्तमेव प्रयोगद्वयमिष्यते इति भाष्यकृदभिप्रायमन्ये । [ जसि च ] ॥

घेर्ङिति । ननु कुरुशब्दस्य कथं घिसंज्ञा, 'यू स्त्र्याख्या'वित्यपेक्षया शेषविज्ञानादत आह—शेषो घीति । [ घेर्ङिति ] ।

याडापः । परत्वादिति । नित्यत्वेनोत्कृष्टत्वादित्यर्थः । लाक्षणिकं रूपमिति । नचैवं 'खट्वायै' इत्यत्रापि सवर्णदीर्घे लाक्षणिकत्वमिति तत्रापि न स्यात्, आदि-

---

१ इदं क्वाचित्कम् । २ 'दर्वि–दर्वे' पा० । ३ 'उक्तश्चैतत्' पा० ।

त्वे कृते ओंबसौ भूतपूर्व इति कृत्वा याङ्कस्मान्न भवति ? ॥ 'लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ ननु चेदानीं सत्यपि स्थानिवद्भाव एतया परिभाषया शक्यमुपस्थातुम् ?॥ 'नेत्याह । न हीदानीं क्वचिदपि स्थानिवद्भावः स्यात् ॥ [ याडापः ] ॥

**ङेराम्नद्याम्नीभ्यः ॥ ७।३।११६ ॥**

॥*॥ इदुद्भ्यामाम्विधानमौत्वस्य परत्वात् ॥*॥ इदुद्भ्यामाम्विधेयः,–शकट्यां पद्धत्यां धेन्वामिति ॥ किं पुनः कारणं न सिध्यति ? ॥ 'औत्वस्य परत्वात्' । परत्वादौत्वं प्राप्नोति ॥*॥ योगविभागात्सिद्धम् ॥*॥ [योगविभागात्सिद्धमेतत्] । योगविभागः करिष्यते 'ङेराम्नद्याम्नीभ्यः' । तत 'इदुद्भ्याम्' । 'इदुद्भ्यामुत्तरस्य ङेराम्भवती'ति । शकट्यां पद्धत्यां धेन्वामिति । तत 'औदच्च घेः' ।

**औदच्च घेः ॥ ७।३।११८-११९॥**

॥*॥ औत्वे योगविभागः ॥*॥ औत्वे योगविभागः कर्तव्यः । 'औत्' ।

---

प्र.]उक्तं चैतदिति । लक्षणेति । अकारस्य दीर्घे सत्याबिति लाक्षणिकं रूपमिति न तस्य ग्रहणम् । ननु चेति । 'ङ्याब्ग्रहणेऽदीर्घ' इति न वक्तव्यमिति चोद्यते । 'नेत्याहे'ति परिहारः । [ याडापः ] ।

ङेराम्। शकट्यामिति।शकटिशब्दस्य 'ङिति ह्रस्वश्चे'ति वा नदीसंज्ञाविधानात्तदभावपक्षे घिसंज्ञायां शकटाविति भवति । नदीसंज्ञापक्षे तु परत्वादौत्वं प्राप्नोति । आमोऽवकाशः—कुमार्यामिति । औत्वस्याऽवकाशः–सख्यौ पत्याविति, अत आह –इदुद्भ्यामिति । पूर्वविप्रतिषेध आश्रयणीय इत्यर्थः । ननु कृते औत्त्वे पुनःप्रसङ्गविज्ञानादाम् भविष्यति, पुनरौत्त्वं न भविष्यति, चक्रकेष्विष्टतो व्यवस्थापनात् । नैतदस्ति । द्रव्यपदार्थपक्षे सकृद्गतिपरिभाषयाऽऽम्न स्यात् । योगविभाग इति । 'इदुद्भ्या'मित्यत्र योगे नदीग्रहणानुवृत्त्या सख्यौ पत्यावित्यत्रामोऽप्रसङ्गः।[ ङेराम् ]।

औदच्च घेः। औत्व इति । एकयोगे त्वत्त्वौत्त्वयोः सन्नियोगशिष्टत्वाद्यत्रात्त्वं तत्रौ-

---

उ.]वद्भावेन प्रवृत्तेः।यत्र लक्षणप्रवृत्तिं विना तद्रूपाऽसंभवस्तदेव लक्षणप्रतिपदोक्तपरिभाषानिषेधविषयः। नचैत्तत्तथा, एकादेशतः प्रागपि तद्रूपसत्त्वादिति केचित् । अतएवाऽऽकारप्रश्लेषेण वार्तिकप्रत्याख्यानेऽपि न दोष इति बोध्यम्। यत्तु तत्पक्षेऽङ्गस्याबन्तविशेषणात्वेनाऽऽबन्ताङ्गाऽभावान्न दोषः । उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वादिति, तन्न, 'अतिखट्वाये'त्युदाहरणविषयवार्त्तिकस्य, तत्प्रत्याख्यानाय प्रश्लेषस्य च वैयर्थ्यापत्तेः । स्थानिवद्भावेऽपि प्राप्त्यभावात्खट्वाया अर्द्धेऽर्द्धखट्वायामित्यादौ याडनापत्तिरिति दिक् । [ याडापः ] ।

ङेराम्नद्याम्नीभ्यः । शकट्यामिति । अत्र प्रयोगे शकटिशब्दस्येत्यर्थः । ननु योगविभागे 'सख्या'वित्यादावप्याम्स्यादत आह–इदुद्भ्यामित्यत्रेति । [ङेराम् ]।

---

१ 'आप् चासौ' पा० । २ 'नहि तदानीं' पा० ।

औद्धवतीदुद्याम् । ततः 'अच्च घे'रिति । अकारश्च[1] भवति घेरिति ॥ किमर्थो योगविभागः ?॥*॥सखिपतिभ्यामौत्त्वार्थः[2]॥*॥सखिपतिभ्यामौत्त्वं यथा स्यात्। सख्यौ पत्यौ ॥*॥ एकयोगे ह्यप्राप्तिरत्त्वसन्नियोगात् ॥*॥ एकयोगे हि सत्यौत्त्वस्याऽप्राप्तिः ॥ किं कारणम् ? ॥ 'अत्त्वसन्नियोगात्' । अत्त्वसन्नियोगेनौत्त्वमुच्यते तेन यत्रैवात्वं तत्रैवौत्त्वं स्यात् ॥*॥ नवाऽकारस्याऽन्वाचय[3]वचनाद्यथा क्यङि सलोपः ॥*॥ न वाऽर्थ औत्त्वे योगविभागेन ॥ किं कारणम् ? ॥ अकारस्यान्वाचय[3]वचनात्' । प्रधानशिष्टमौत्त्वमन्वाचय[3]शिष्टमत्त्वम् । 'यथा क्यङि सलोपः ।' तद्यथा प्रधानशिष्टः क्यङ् प्रातिपदिकमात्राद्भवति । यत्र च सकारस्तत्र लोपः ॥

॥*॥अत्त्वे टाप्प्रतिषेधः ॥*॥ अत्त्वे टापः प्रतिषेधो वक्तव्यः। शकटौ पद्धतौ धेनौ । अत्वे कृते[ 'ऽत इति'[4] ] टाप् प्राप्नोति ॥*॥ न वा सन्निपातलक्षणस्याऽनिमित्तत्वात् ॥*॥ नवा वक्तव्यः। किं कारणम् ?॥ सन्निपातलक्षणस्याऽनिमित्तत्वात्' । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'त्येवं न[5] भविष्यति ॥*॥ डित्करणाद्वा[6] ॥*॥ अथ वा डिदौकारः[7] करिष्यते–औ डिच्च घेः ।

प्र.]त्त्वं स्यात्। सख्यौ पत्याविति। असखीतिप्रतिषेधात्, पतिः समास एवेतिनियमाच्चाऽनयोर्नास्ति घिसंज्ञा, अख्याख्यत्वाच्च नास्ति नदीसंज्ञा।यदा सखिशब्दः स्त्रियां वर्तते तदा सख्यशिश्वीतिभाषायामिति ङीषा भाव्यं, पतिशब्दस्य तु स्त्रीवृत्तेर्यज्ञसंयोगादन्यत्र 'ङिति ह्रस्वश्चे'ति पक्षे नदीसंज्ञेति पत्यामिति भवति । न वेति । अन्वाचये 'च'-शब्दः। इदुद्भ्यां परस्य ङेरौद्भवति यत्र तु घिसंज्ञाऽस्ति तत्र तस्यात्त्वमिति अत्त्वानपेक्षमौत्त्वं प्रधानशिष्टम् । अत्त्व इति । टापि सत्यौङ आप इति शीभावः प्राप्नोति, यदा तत्र सामान्यग्रहणाऽर्थो ङकारो वर्णनिर्देशो वा। यदा तु पूर्वाचार्यनिर्देशस्तदा प्रथमाद्वितीयाद्विवचनयोरेव शीविधानादस्याऽप्रसङ्गः । अन्ये टापि याड्प्रसङ्गमाहुः । न वेति। 'या से'त्यादौ टाब्भवति,'त्यदाद्यकारष्टाब्विधे'रिति दोषेषु परिगणनात् । डित्करणाद्वेति । अन्तोदात्तेषु स्वरभेदोऽपि नास्ति । डित्त्वे उदात्तनिवृत्तिस्वरेण भाव्यम्, अडित्त्वे त्वेकादेश उदात्तेनोदात्त इति । ननु डित्त्वे सख्यौ पत्याविति टिलोपप्रसङ्गः । नैतदस्ति । 'औङ्चि घे'रिति न्यासः क्रियते । 'पत्यावैश्वर्य' इति

उ.] औत् । अच्च घेः । सखिपत्योः स्त्रियां वृत्तौ कथं भाव्यं, तत्राह—यदा सखीति । एवञ्च तस्य सख्यामित्येवेति भावः ।यज्ञसंयोगादन्यत्रेति । यज्ञसंयोगे हि पत्न्यामिति भवति । आद्युदात्तेषु स्वरभेदप्रसङ्ग एव न, अन्तोदात्तेष्वपि नेत्याह–डित्त्वे इति । अघेरिति । सामान्यापेक्षं ज्ञापकमिति भावः । वस्तुतः शङ्कैवाऽ

१ क्वाचित्कमेतत् । २ 'त्वार्थम्' पा० । ३ 'न्वादेशवच' पा० । ४ इदं क्वचिन्न । ५ 'स्येति टान्न भविष्यति' पा० । ६ 'ङित्कर' पा० । ७ 'ङिदौकारः' पा० ।

## आङो नाऽस्त्रियाम् ॥ ७।३।१२० ॥

किमर्थमस्त्रियामित्युच्यते ना'ऽऽङो ना पुंसी'त्येवोच्येत ? ॥ का रूपसिद्धिः–त्रपुणा जतुना ? ॥ नुमा सिद्धम् ॥ नैवं शक्यम् इह ह्यमुना ब्राह्मणकुलेनेति मुभावस्याऽसिद्धत्वान्नुम्न स्यात् । 'अस्त्रिया'मिति पुनरुच्यमाने न दोषो भवति ॥ कथम् ? ॥ वक्ष्यत्येतत्'नमुटादेश' इति ॥*॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते सप्तमस्य तृतीये द्वितीयमाह्निकम् ॥ पादः समाप्तः ॥*॥

## णौ चङ्युपधाया ह्रस्वः ॥ ७।४।१ ॥

अथ णिग्रहणं किमर्थं न 'चङ्युपधायाः ह्रस्व' इत्येवोच्येत ? ॥ 'चङ्यु-

---

प्र.]निपातनाद्वाऽघेष्टिलोपाऽभावः।विंशतावित्यत्र 'ति विंशतेर्डिती'ति तिलोपो न भवति, 'नस्तद्धित'इतियोगविभागात्।तत्र तद्धित इत्यत्र तिविंशतेर्डितीति, न इति चाऽनुवर्तते। 'टे'रित्येतत्तु नानुवर्तते, अतद्धितानां डित्करणसामर्थ्यात् । अथ वा टेरित्यनुवर्तताम्, तथाऽप्यतद्धितानां डित्करणसामर्थ्याद्यथैव ह्यभस्य लोपो भवति एवमतद्धितेष्वपि । [ औत् ] ॥

आङो । किमर्थमिति । 'आङो ना पुंसी'त्युच्यमाने मात्रालाघवं भवतीष्टं च सिध्यतीति प्रश्नः । नुमेति । 'इकोऽचि विभक्ता'वित्यनेन । अमुनेति । 'पुंसी'त्युच्यमाने नपुंसके नाभावो न स्यात् । नुमपीग्लक्षणो मुत्वस्याऽसिद्धत्वान्नास्ति । न मु टादेश इति । टाया आदेशष्टायामादेश इत्यनेकविभक्त्यन्तसमासाश्रयेण नाभावे कर्तव्ये ने च परतो दीर्घे मुत्वस्य सिद्धत्वाद्घिलक्षणो नाभावो भवत्य'तो दीर्घो यञि' 'सुपि चे'ति दीर्घत्वं न भवतीति सर्वेष्टसिद्धिः ॥*॥ इति॰ कैयटकृते महाभाष्यप्रदीपे सप्तमस्य तृतीये द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥*॥

णौ चङ्युपधाया ह्रस्वः । अथ णिग्रहणमिति । ह्रस्वग्रहणादुपधाग्रहणाच्च

---

उ.]युक्ता, इदुद्भ्यामुत्तरस्य ङेरौत्, घेः परस्य तु स डिदित्यर्थात्। योगविभागादिति। 'तद्धित' इति विभज्य तत्र 'विंशतेर्डिति' 'न'इति चानुवर्त्य वाक्यभेदेन व्याख्येयमिति भावः । टेरित्येतदिति । 'तस्य 'टेर्डिति लोप' इति स्वातन्त्र्येणैवाऽर्थो न तु 'तद्धित' इत्येतदेकवाक्यतयेति भावः । 'अतद्धितामा'मिति पाठे यथाऽतद्धितानां 'डा' इत्यादीनां डित्करणसामर्थ्यात्सिद्धान्तेऽभत्वेऽपि टिलोपस्तथाऽतद्धितत्वेऽपि भविष्यतीति तदनुवृत्तावपि न क्षतिरित्यर्थः । क्वचित्तु 'तद्धिताना'मिति पाठः । यथा ड्मतुपादितद्धितेऽभत्वेऽपि लोपस्तथा औडादावतद्धितत्वेऽपि लोप इत्यर्थः । क्वचित्तु तत्सामर्थ्यादेवोभयवैकल्येऽपि डादौ लोप इति बोध्यम् । [ औत् ] ।

आङो ना । ननु 'न मुने' इत्यस्य तन्त्रेण नाभावे नकारे च कृते कर्तव्ये च मुत्वं नाऽसिद्धमित्यर्थान्नपुंसके नुमा सिद्धमित्यत आह–भाष्ये—वक्ष्यत्येतदिति । एवञ्च वार्तिकैकवाक्यतया सूत्रेऽपि नाभावे कृते कर्तव्ये चेत्येवार्थ इति भाव इति

---

१ इदं क्वचिन्न । २ 'तद्धितानां' पा० ।

**पधाया ह्रस्व' इतीयत्युच्यमाने–अलीलवत् अपीपवत्–ऊकारस्यैव ह्रस्वत्वं प्रसज्येत ॥ नैतदस्ति प्रयोजनम्, वृद्धिरत्र बाधिका भविष्यति ॥**

**वृद्धौ तर्हि कृतायामौकारस्यैव ह्रस्वत्वं प्रसज्येत ॥ नैतदस्ति–अन्तरङ्गत्वादत्राऽऽवादेशो भविष्यति । न हीदानीं ह्रस्वभाविन्युपधा भवति । तस्माण्णिग्रहणं कर्तव्यम् ॥**

---

प्र.] चङा णिराक्षिप्तः, न ह्यण्यन्तानां चङि ह्रस्वभागुपधाऽस्ति। ह्रस्वश्रुत्या ह्यचपरिभाषोपस्थानादच उपधाया ह्रस्वेन भाव्यम् । न श्रिद्रुस्रुधेट्श्वीनामजुपधा । कमिगुप्योस्तु ह्रस्व एवोपधा । तत्र णावन्तरङ्गत्वाद्वृद्ध्यादिषु कृतेषु चङ्युपधाह्रस्वभाङ्नास्तीति सामर्थ्याच्चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्वो विज्ञास्यत इति प्रश्नः । इतरो यथाश्रुतसंभवाच्चङि यः प्रत्यय इत्यध्याहारो न युक्त इति वचनादन्तरङ्गमपि वृद्ध्यादि ह्रस्वो बाधेतेति मत्वाह–**चङ्युपधाया इति** । इतरस्तु चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्व इत्यध्याहारेण सूत्रार्थसंभवादयुक्ताऽन्तरङ्गबाधेति मत्वाह–**वृद्धिरत्रेति** । इतरो हलस्याऽनवकाशतां मत्वाह–**औकारस्येति** । नन्वेवं वृद्धिरनर्थिका स्यात् । एतदेव तर्ह्युच्यते वृद्ध्याऽत्र न भाव्यम् । अभ्युपगम्य तु वृद्धिरुच्यते–**वृद्धौ तर्हि कृतायामिति** । अपवादत्वाद्धि ह्रस्वो वृद्धेर्बाधक आवादेशस्य चेति भावः । इतरो वाक्याध्याहारेण ह्रस्वस्य सावकाशतां मत्वाह–**नैतदस्तीति** । इतरो यथाश्रुतसंबन्धसंभवादनवकाशतामेव मत्वाऽऽह–**न हीदानीमिति** । ननु वृद्धिं बाधित्वा भवतूका-

---

उ.]सर्वेष्टसिद्धिः। इति श्री शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते **भाष्यप्रदीपोद्द्योते सप्तमा**ध्याय**स्य तृतीये** पादे **द्वितीयमा**ह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥

**णौ चङि । ह्रस्वग्रहणादिति** । ह्रस्वविधानादित्यर्थः । विधेयसमर्पकह्रस्वग्रहणेन तल्लिङ्गात्परिभाषोपस्थानादिति यावत् । **वृद्ध्यादिष्विति** । आदिनाऽऽवादि, अदीदयदित्यादौ युक् । **चङिः यः प्रत्यय इति** । स च णिरेवेति णिग्रहणमनर्थकमित्यर्थः । **यथाश्रुतेति** । अनुपसंजातविरोधन्यायादिति भावः । अयमेव सिद्धान्त्याशयः । भाष्ये–**ऊकारस्यैवेति**। न त्वपीपचदित्यादाविति भावः। **नन्वेवमिति** । यद्यौकारस्य ह्रस्व उकारस्तर्हि प्रतिपत्तिगौरवपरिहारायोकारस्यैव ह्रस्वोऽस्त्वित्याशयः । अत्र वदन्ति-वृद्धिशास्त्रमर्थवदेवाऽन्यत्र । अत्र प्रवृत्तिरपि पर्जन्यन्यायेनेति चिन्त्यमिदम्–**वृद्ध्याऽत्र न भाव्यमिति**। **आवादेशस्य चेति** । वृद्धिबाधनद्वारेति भावः । **अपवादत्वाद्धीति** । क्रमेण संस्कारे वृद्धिप्राप्तिकाले ह्रस्वाऽप्राप्त्या इदं चिन्त्यम् । पदसंस्कारे तु वक्तुं शक्यं, परन्तु भाष्यस्य क्रमसंस्काराभिप्रायेण प्रवृत्तिर्लक्ष्यते । ह्रस्वभाव्युपधाया 'अलीलव'दित्यादावप्यभावाच्छास्त्रं व्यर्थमेव स्यादिति णिग्रहणं कार्यमिति भाष्याशयः । पदसंस्कारेऽपि तत्तद्धातुं सिद्धं कृत्वा तत्प्रकृतिकपदसंस्कार इति धातुसंज्ञासमकालमेव वृद्धिरिति तद्बाधो ह्रस्वे-

---

१ इदं क्वचिन्न । २ 'वृद्ध्यावादिषु' पा० । ३ 'तर्ही'ति क्वचिन्न ।

**अथ चङ्ग्रहणं किमर्थं न 'णावुपधाया' इत्येव सिद्धम् ॥ 'णावुपधाया ह्रस्व' इतीयत्युच्यमाने कारयति हारयत्यत्रापि प्रसज्येत ॥ नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति 'न णावेव ह्रस्वत्वं भवती'ति यदयं मितां ह्रस्वत्वं शास्ति ॥ इहापि तर्हि न प्राप्नोति–अचीकरत् अजीहरत् ॥ वचनाद्भविष्यति॥ इहापि तर्हि वचनात्प्राप्नोति–कारयति हारयति । तस्माच्चङ्ग्रहणं कर्तव्यम् ॥**

**अथोपधाग्रहणं किमर्थम् ? ॥ ॥*॥ णौ चङ्युपधाग्रहणमन्त्यप्रतिषेधार्थम् ॥*॥ णौ चङ्युपधाग्रहणं क्रियते ॥ किं प्रयोजनम् ? ॥**

**'अन्त्यप्रतिषेधार्थम्' । अन्त्यस्य ह्रस्वत्वं मा भूत् ।**

**'णौ चङि ह्रस्व'इतीयत्युच्यमाने अलीलवत् अपीपवत्–अन्त्यस्यैव**

---

**प्र.]**रस्य ह्रस्वस्तस्मिंस्तु कृते बाधितत्वान्माभूद्वृद्धिः,गुणस्तु केन वार्यते ?,ततो गुणेऽवादेशे च सिद्धमलीलवदिति । नैतदस्ति । गुणस्य वृद्ध्या बाधितत्वाद्वृद्धेश्च ह्रस्वेन, भ्रष्टावसरस्य गुणस्य कुतः पुनः प्रवृत्तिरिति उवङ् प्रसज्येत । 'अदीदप'दित्यत्र च ह्रस्वेन पुग्बाध्येत । 'अपीपव'दित्यादौ च नैव ह्रस्वः स्यादिति णिग्रहणं क्रियते । यदा चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्तदा वृद्ध्यावादेशयोः कृतयोः पुकि च णिलोपस्य स्थानिवत्त्वाऽभावाच्चङि उपधा ह्रस्वभाविनी संभवतीति णिग्रहणं न कर्तव्यम् । सूत्रकारेण चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो न कृत इति णिग्रहणं कृतम् । **अथेति ।** मितां ह्रस्वविधानादनेन सर्वत्र णौ ह्रस्वो भविष्यति । प्रयोगदर्शनाच्चेष्टाऽनिष्टव्यवस्थाश्रयितव्येति मत्वा प्रश्नः । इतो वचनमन्तरेणेष्टानिष्टविभागो दुर्ज्ञान इति मत्वाह **णावुपधाया इति । अथोपधाग्रहणमिति ।** न्यायान्नाग्लोपिशास्वृदितामिति निषेधाच्च लिङ्गादुपधाया एव ह्रस्वो भविष्यतीति प्रश्नः । **चङ्युपधाग्रहणमिति ।** असत्युपधाग्रहणेऽच्परिभाषोपस्थानादचाऽङ्गस्य विशेषणादजन्तस्याऽङ्गस्य ह्रस्वो विधीयमानोऽलोन्त्यस्येत्यन्त्यः स्यात् । लू इ अत् इति स्थिते ऊकारस्य ह्रस्वत्वप्रसङ्गः ।

---

**उ.]** नाऽशक्यः । एतेनाऽदीदपदित्याद्यपि चिन्त्यम् । भ्रष्टावसरन्यायश्चाऽत्र शास्त्रे नास्तीत्यसकृदावेदितम् । **यदात्विति ।** यदर्थं तद्वार्तिकं तस्याऽत्रैव सूत्रे 'णेर्णिच्युपसङ्ख्यान'मित्यनेन साधयिष्यमाणत्वात्तदनावश्यकमिति णिग्रहणम् । एतदुत्तरसूत्रे कैयटे एव स्पष्टम् । ननु चङ्ग्रहणाऽभावे 'कारयती'त्यत्रापि स्यादत आह–**मितामिति । वचनमन्तरेणेति ।** मन्दबुद्धीनामित्यर्थः । ननूपधाग्रहणाऽभावेऽचकाङ्क्षदित्यादावतिप्रसङ्गोऽत आह–**न्यायादिति ।** 'येन नाव्यवधान'मिति न्यायादित्यर्थः । निषेधज्ञापकेनाऽन्त्याऽचोऽपकर्षः, न्यायाच्च व्यवहितव्यावृत्तिरिति बोध्यम् । **असतीति ।** एवञ्चाऽलीलवदित्यत्रैव स्यात् , 'अपीपच'दित्यादौ तु न स्यादिति भावः । **पूर्ववदिति ।** अनवकाशत्वाद्वृद्ध्यादेर्बाधकं–ह्रस्वत्वं स्यादिति भावः । एतत्पूर्ववदेवाऽयुक्तमित्यन्ये । नन्वेवं तदनुषङ्गेणैव सिद्धे 'न तदस्ती' त्यादि भाष्यं व्यर्थ-

---

१ 'दिति' पा० ।

ह्रस्वत्वं प्रसज्येत ॥ नैतदस्ति प्रयोजनम्—अन्तरङ्गत्वादत्राऽऽवादेशो भविष्यति । न तर्हीदानीं[1] ह्रस्वभाव्यन्त्योऽस्ति, 'अन्त्यो ह्रस्वभावी नास्ती'ति कृत्वा वचनादनन्त्यस्य[2] भविष्यति ॥ इहापि तर्हि[3] वचनात्प्राप्नोति—अचकाङ्क्षत्, अववाञ्छत्[4] ॥ येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ॥ केन च नाव्यवधानम् ?॥ वर्णेन[5] । एतेन पुनः सङ्घातेन व्यवधानं भवति (च[8]) न भवति च । [ ॥*॥ उत्तरार्थन्तु[6] ॥*॥ ] उत्तरार्थं तर्ह्युपधाग्रहणं कर्तव्यम् । 'लोपः पिबतेरीच्चा[7]ऽभ्यासस्य' उपधाया यथा स्यात् ।

प्र.] वृद्धिरत्र बाधिका भविष्यतीति पूर्ववत्सर्वत्रानुषञ्जनीयं। न्यायव्युत्पत्तये चाऽन्यदभिधातुमाह—**नैतदस्तीति**। इतरो ह्रस्वं निरवकाशत्वादन्तरङ्गाणां बाधकं मत्वाह—**न तर्हीदानीमिति** । इतरो विशेषणविशेष्यभावे कामचारादङ्गेनाऽज्विशेष्यते—'अङ्गस्य यत्र तत्र स्थितस्याऽचो ह्रस्वो भवती'त्येवं विध्यन्तराण्यपि न बाधितानि भवन्ति, ह्रस्वश्च सावकाशो भवतीति मत्वाह—**अन्त्यो ह्रस्वभावीति** । अङ्गस्येति चावयवषष्ठीविज्ञानादलोन्त्यस्येत्यस्योपस्थानाऽभावः । **येन नाव्यवधानमिति** । 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानाद्येन शब्देनाऽवश्यं व्यवधानं तेन व्यवहितेऽपि कार्यं विज्ञायमानमन्यव्यवधाने न प्रवर्तते। ण्यङ्गाभ्यां ह्यज्विशेष्यते 'णौ परतोऽङ्गस्य योऽ'जिति सामर्थ्यादेकवर्णव्यवधानमवश्यंभावित्वादाश्रीयते । एकस्मिंस्तु विषयेऽन्त्यसदेशयोर्ह्रस्वभाविनोरसंभावादनन्त्यविकारेऽन्त्यसदेशस्यैव ग्रहणमिति परिहारो नोक्तः । **अपीप्यदिति** । 'अलोन्त्यस्ये'ति युक्तो लोपप्रसङ्गादुत्तरार्थमुपधाग्रहणम् ।

ननु ह्रस्वाऽपवादो लोपो विज्ञायमान उत्सर्गदेशत्वादपवादानामुपधाया एव भविष्यति । नैतदस्ति । ह्रस्वश्रुत्याऽच्परिभाषोपस्थानादङ्गेन चाऽचो विशेषणाद्युक्तं यदुपधाह्रस्वः स्यात्, लोपविधौ तु 'पिबते'रिति स्थाने षष्ठ्या अन्त्येऽल्युपसंहारादन्त्यस्यैव लोपः स्यात्। भिन्नदेशावप्युत्सर्गापवादौ दृश्येते, यथा शप्श्नमौ, काऽकचौ।

उ.] मत आह—**न्यायेति** । 'येन नाव्यवधान'मित्यादेः न्यायस्य **व्युत्पत्तये**—व्युत्पादनायाऽन्यत्—'इहापि वचना'दित्यादि वक्तुमुक्तमप्याहेत्यर्थः । भाष्ये—**अन्तरङ्गत्वादावादेशो भविष्यतीति** । वृद्धावावादेशो भविष्यतीत्यर्थः । अलोन्त्यपरिभाषायां सत्यां कथमनन्त्यस्य स्यादत आह—**इतर इति**। **अवयवषष्ठीति** । स्थाने विज्ञातस्य हि सोऽनुसंहार इत्यर्थः । ननु णावित्यनेनाङ्गविशेषणादेष न्यायोऽत्र नावतरतीत्याशयेनाह—**ण्यङ्गाभ्यां हीति** । उपधाग्रहणकरणलाघवाऽनुरोधेन णिपरस्याऽङ्गसंबन्धिनोऽच इत्यर्थः करिष्यत इत्यभिमानः । प्रत्ययस्याऽङ्गांशे उत्थिताकाङ्क्षत्वादियमेकदेशयुक्तिः । **लोपविधौ त्विति** । तत्राऽच्परिभाषोपस्थित्यभावादित्यर्थः । **स्थाने षष्ठ्या इति** । तस्या एव युक्तत्वादिति भावः । **भिन्नदेशाविति** । स्थान-

१ 'नहीदानीं' पा० । २ दन्त्यस्य । पा० । ३ 'पि वचन' पा०। ४ 'अववाङ्क्षत्'पा०। ५ 'वर्णेनैकेन'पा०। ६ इदं क्वचिन्न । ७ 'री चा' । ८ 'लन्य' पा०।

अपीप्यत्, अपीप्यताम्, अपीप्यन् ॥ अथेह कथं भवितव्यम्–मा भवानटिटदिति, आहो स्विन्माभवानाटिटदिति॥मा भवानाटिटदिति[एवं][3] भवितव्यम्॥ ह्रस्वत्वं कस्मान्न भवति ? ॥ द्विर्वचने कृते परेण रूपेण व्यवहितमिति कृत्वा ॥ इहमिह संप्रधार्यं,–द्विर्वचनं क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम्?॥ परत्वाद्ध्रस्वत्वम् ॥ नित्यं द्विर्वचनम्[1] । कृतेऽपि[2] ह्रस्वत्वे प्राप्नोत्यकृतेऽपि ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–'द्विर्वचनाद्ध्रस्वत्वं बलीय' इति यदयमोणिमृदितं करोति॥ कथं कृत्वा ज्ञापकम् ?॥ ऋदित्करण एतत्प्रयोजनम्–ऋदितां नेति प्रतिषेधो यथा स्यात्। यदि चाऽत्र पूर्वं द्विर्वचनं स्यादृदित्करणमनर्थकं स्यात्, द्विर्वचने कृते परेण रूपेण[3] व्यवहितत्वाद्ध्रस्वत्वं न भविष्यति । पश्यति त्वाचार्यो–'द्विर्वचनाद्ध्रस्वत्वं बलीय' इति तत ओणिमृदितं करोति । तस्मान्मा भवानटिटदित्येव[4] भवितव्यम् ॥

॥*॥ उपधाह्रस्वत्वे[5] णेर्णिच्युपसङ्ख्यानम् [ णिचा व्यवहितत्वात्[3] ] ॥*॥ उपधाह्रस्वत्वे[5] णेर्णिच्युपसङ्ख्यानं कर्तव्यम्। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन॥ किं पुनः कारणं न सिध्यति ?॥ 'णिचा व्यवहितत्वात्'॥ णिलोपे कृते नास्ति व्यवधानम् ॥ स्थानिवद्भावाद्व्यवधानमेव ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावः'चङ्परनिर्ह्रासे न स्थानिव'दिति॥एवमप्यग्लोपिनां नेति प्रतिषेधः प्राप्नोति ॥ वृद्धौ कृतायां लोपस्तन्नाऽग्लोप्यङ्गं भवति ॥ इदमिह संप्रधार्यं–वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ? ॥ परत्वाद्वृद्धिः ॥ नित्यो लोपः। कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि ॥ अनित्यो लोपः,–अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याऽकृतायां। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति ।

प्र.] 'सत्यपि संभवे बाधनं भवती'ति न्यायाद्भिन्नदेशोऽप्यवाद उत्सर्गं बाधते। यदि तर्ह्युत्तरार्थमुपधाग्रहणं तत्रैव वक्तव्यम्–'आल्लोपः पिबतेरीच्चाभ्यासस्ये'ति। नैतदस्ति। अन्तरङ्गमपि युक्मनवकाशत्वादाल्लोपो बाधेत, उपधाग्रहणे त्वन्तरङ्गत्वाद्युकि कृते आकारस्योपधाया लोप इति न कश्चिद्दोषः। अथेहेति । न्यायप्रयोगविरोधात्प्रश्नः । स एव प्रष्टा न्यायाश्रयेणाह—मा भवानाटिटदित्येवमिति । इतरो वक्ष्यमाणलिङ्गावष्टम्भेन पृच्छति–ह्रस्वत्वं कस्मान्न भवतीति । एवं तर्हीति । ज्ञापकात् पूर्वं ह्रस्वः पश्चाद्द्विर्वचनमिति क्रमः। कृतायामपीति । स्थानिवद्भावात् । एवं तर्हीति ।

उ.]षष्ठ्यलोन्त्यपरिभाषाऽबाधायेति भावः। ननु भिन्नदेशत्वे बाध्यबाधकभावो न स्यादत आह—सत्यपीति । उदाहरणाऽन्तरेभ्यो विशेषमाह—न्यायेति । 'अटिट'दिति प्रयोगे दृश्यते, न्यायेन त्वाटिटदिति प्राप्नोतीति विरोध इत्यर्थः । ननु कृतायां वृद्धौ णिरूपत्वाऽभावाल्लोपो न स्यादत आह—स्थानिवद्भावादिति । पूर्वविप्रतिषे-

१ 'नित्यत्वाद्द्विर्वचनं' पा० । २ क्वाचित्कोऽपिः । ३ इदं क्वचिन्न । ४ एवः क्वचिन्न । ५ 'उपधाया ह्रस्व' पा० ।

उभयोरनित्ययोः परत्वाद्वृद्धिः,वृद्धौ कृतायां लोपः, तत्राऽग्लोप्यङ्गं भवति ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-'वृद्धेर्लोपो बलीया'निति,-यदयमग्लोपिनां नेति निषेधं शास्ति॥ नैतदस्ति ज्ञापकम्[1] । अस्त्यन्यदेतस्य[2] वचने प्रयोजनम् ॥ किम् ? ॥ यत्र वृद्धावपि कृतायामगेव लुप्यते-अत्यरराजत् ॥ यत्तर्हि प्रत्याहारग्रहणं करोति । इतरथा ह्यलोपिनां नेति ब्रूयात् । एवं वा[3] वृद्धेर्लोपो बलीयानिति ॥ अथ वाऽऽरभ्यते पूर्वविप्रतिषेधो 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्य पूर्वविप्रतिषिद्ध'मिति । तस्मादुपसङ्ख्यानं कर्तव्यमिति ॥

## नाग्लोपिशास्वृदिताम् ॥ ७।४।२ ॥

॥*॥ अग्लोपिप्रतिषेधानर्थक्यं च स्थानिवद्भावात् ॥*॥ अग्लोपिप्रतिषेधश्चाऽनर्थकः ॥ किं कारणम् ?॥ 'स्थानिवद्भावात्' । स्थानिवद्भावादत्र ह्रस्वत्वं

प्र.]सर्वत्राऽको वृद्धौ कृतायामैकारौकारयोर्लोपो न त्वकः।अत्यरराजदिति। राजानमतिक्रान्तवानिति 'प्रातिपदिकाद्धात्वर्थे' इति णिचि कृते'ऽत उपधाया' इति वृद्धौ कृतायामगेव लुप्यते । यत्तर्हीति । प्रत्याहारग्रहणाल्लिङ्गात्पूर्वविप्रतिषेधेन लोपो भवति ।

ननु प्रत्याहारग्रहणं स्वामिनमाख्यत्-असस्वामत्। गोमिनमाख्यत्-अजुगोमदित्यादौ वृद्धिप्रसङ्गाऽभावाल्लोपे ह्रस्वनिषेधार्थं स्यादिति कथं ज्ञापकमिति चिन्त्यमेतत् । अत्राहुः-अनभिधानाण्णिजत्र नास्तीति भाष्यकारस्याऽभिप्रायः । एवं तु ज्ञापकेन लोपस्य बलीयस्त्वे यदुक्तं 'हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थ'मिति तद्विरुध्यते, असत्यपि अत्वनिपातने वृद्धिं बाधित्वेकारस्य लोपे सति सन्वद्भावस्याऽप्रसङ्गादनाश्रित्य ज्ञापकत्वं निपातनमुक्तम् । ज्ञापकाश्रयणं तु ज्यायः, पटुमाख्यत्-अपपटदित्यादावकृतायां वृद्धौ लोपे सति सन्वद्भावस्य प्रसङ्गाऽभावार्थम् । अथवेति । हलिकल्योरत्वनिपातनमेव ज्ञापकं 'लोपात्पूर्वं वृद्धिर्भवती'ति । णिलोपस्तु वाचनिकेन पूर्वविप्रतिषेधेन वृद्धेः पूर्वं भवति । एवं पटुमाख्यत्-अपीटदिति सन्वद्भावप्रसङ्गात्प्रत्याहारग्रहणमेव ज्ञापकमाश्रयणीयं, तेन वृद्धेः प्राग्लोपो विधेयः ।

नाऽग्लो। अग्लोपीति। मालामाख्यदममालदित्यादौ टिलोपस्य स्थानिवत्त्वाद-

उ.]धेनेति। लोपसामान्यं वृद्धेः पूर्वप्रतिषेधेनेत्यनेन ज्ञाप्यते। अतएव 'स्त्रीपुंसाभ्यां' 'कस्ये'त्यादि सूत्रस्थभाष्यं सङ्गच्छते।णिजत्र नास्तीति । लुब्ध्येवैषामनभिधानमित्यन्ये। विरोधं परिहरति-अनाश्रित्येति।ज्यायइति। वस्तुतस्तु सूत्रभाष्यसंमतपक्षभेदेन विकल्पे एव तात्पर्यम् । तत्र लक्ष्यानुरोधाद्व्यवस्थेति तत्त्वम् । अथवेत्यादिना न पूर्वोक्तस्य त्यागः, किन्तु प्रकृतविषये समाध्यन्तरमित्येव । पूर्वोक्तार्थस्त्ववश्याश्रयणीय इत्याह-एवमिति। भाष्ये-तस्मादुपसङ्ख्यानमिति । यत्तु 'ण्याकृतिर्निर्देष्टव्ये'ति, तन्न, जातेः पौर्वापर्याभावेन 'चङ्परे' इति विशेषणेनात्र व्यक्तिपक्षस्यैवाश्रयणात् । किञ्च तदाश्रयणे विषयसप्तम्या एव आर्द्धधातुके इति सूत्रे आकरे

१ 'प्रयोजनं' पा० । २ 'ह्यन्यदे' पा० । ३ 'एवं तर्हि' पा० ।

न भविष्यति । यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः ॥ क्व[1] च स्थानिवद्भावो नास्ति ? ॥ यो हलचोरादेशः—अत्यरराजत् ॥ किं पुनः कारणं हलचोरादेशो न स्थानिवदिति ?॥ उच्यते। अजादेशः स्थानिवदित्युच्यते, न चाऽयमच एवादेशः ॥ किं तर्हि ? ॥ अचश्चाऽन्यस्य च ॥ 'अग्लोपिनां ने'—त्यपि तर्हि प्रतिषेधो न प्राप्नोति ॥ किं कारणम् ? ॥ 'अग्लोपिनां ने'त्युच्यते न चाऽत्राऽगेव लुप्यते ॥ किं तर्हि ? ॥ अक्चाऽन्यश्च ॥ योऽत्राऽग्लुप्यते, तदाश्रयः प्रतिषेधो भविष्यति ॥ यथैवं[2] तर्हि योऽत्राऽग्लुप्यते तदाश्रयः प्रतिषेधो भवत्येवं योऽत्राऽज्लुप्यते तदाश्रयः स्थानिवद्भावो भविष्यति ॥ एवं तर्हि सिद्धे सति यदग्लोपिनां नेति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः—'इत उत्तरं स्थानिवद्भावो न भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?॥ 'पूर्वत्रासिद्धे न स्थानिव'दित्युक्तन्तन्न वक्तव्यं भवति ॥ यद्येतज्ज्ञाप्यते आदी-

प्र.]नुपधात्वात्प्राप्तिरेव ह्रस्वस्य नास्तीति प्रतिषेधोऽनर्थकः। ननु प्रतिषिध्यते तत्र स्थानिवत्त्वं किलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति। नैतदस्ति। यदर्थः स प्रतिषेधः तस्य 'णेर्णिच्युपसङ्ख्यान'मित्यनेन साधितत्वान्न वक्तव्यः। हलचोरादेश इति । यथा 'सुधातुरकङ्चे'त्यादेशे समुदाये ऽवयवस्यानादेशत्वादणो रपरत्वं न भवति—सौधातकिरिति, तथा समुदाये स्थानिन्यवयवस्याऽस्थानित्वादजादेशत्वाऽभावान्नास्ति स्थानिवद्भावः । किं पुनरिति । अवयवात्मकत्वात्समुदायस्य तस्मिन् स्थानिन्यवयवानामपि स्थानित्वादजादेशत्वान्न्याय्य एव स्थानिवद्भावः । तथा च 'खट्वर्श्य' इति ऋस्थानिकत्वाश्रयमणो रपरत्वं भवतीति भावः । इतरः पूर्वोक्तेनैवाभिप्रायेणाह-अजादेश इति । इतरस्त्वनुमीयमानोऽवश्याश्रयितव्यः स्थान्यादेशभाव इति मत्वाह-अग्लोपिनामिति । इत उत्तरमिति । पञ्चपाद्यामित्यर्थः । पूर्वत्रासिद्ध इति । 'तस्य दोषः संयोगादिलोपलत्वणत्वे'ष्विति वक्तव्यमेव । यद्वा 'ज्ञापकज्ञापिता

उ.]उक्तया वृद्ध्यादीनामन्तरङ्गत्वं प्रागुक्तम्, ओणेर्ऋदित्करणस्य ज्ञापकत्वं च भज्येतेत्याहुः । [ णौ चङ्युपधाया ह्रस्वः ]

नाग्लोपि शा । अनुपधात्वादिति । ह्रस्वभाविन उपधात्वाऽभावादित्यर्थः । यदर्थ इति । ण्यन्तप्रकृतिकण्यन्तार्थः । फलान्तरन्तु नास्त्येव, तस्य तथाप्रयोगाऽनभिधानात् । अवयवस्यानादेशत्वादिति । समुदाये गुणभूतत्वादिति भावः । भाष्ये— किं पुनरित्यादि स्थानिवदितीत्यन्ता शङ्का, उच्यत इत्याद्युत्तरम् । अवयवानामपि स्थानित्वादिति । गुणानामपि प्रधानकार्याऽविरोधेन कार्यप्रवृत्त्यङ्गीकारादिति भावः । अत्र दृष्टान्तमाह—तथाचेति । अनुमीयमान इति । समुदायद्वाराऽवयवानामित्यर्थः । ननु इत उत्तरं स्थानिवत्त्वाऽभावे ज्ञापितेऽपि ह्रस्वे कथं स्थानिवत्त्वाऽभावोऽत आह—पञ्चपाद्यामित्यर्थ इति । अर्थान्तरज्ञापना-

१ 'क्व स्थानि' पा० । २ 'यथैवं योऽत्राग्लु' पा० ।

धयतेः-आदीधकः । आवेवयतेः आवेवकः-'यीवर्णयोर्दीधीवेव्यो'रिति लोपो न प्राप्नोति । इह च यत्प्रलुनीह्यत्रेति 'तिङि चोदात्तवती'त्येष स्वरो न प्राप्नोति ॥ नैष दोषः । यत्तावदुच्यते-''आदीधयतेः आदीधकः । आवेवयतेः-आवेवकः । यीवर्णयोरिति लोपो न प्राप्नोती''ति ॥ यीवर्णयोरित्यत्र-वर्णग्रहणसामर्थ्याद्भविष्यति । यदप्युच्यते-'यत्प्रलुनीह्यत्रे तिङि चोदात्तव-

प्र.]विधयोऽनित्या' इति संयोगादिलोपलत्वणत्वेषु स्थानिवद्भावो भवत्येव। 'अचः परस्मि'न्नित्यत्र विचारितं 'हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेश' इत्यादि, तत्र निर्णीतं 'हलचोरादेशो न स्थानिव'दिति, इह तु प्रतिषेधवचनमर्थान्तरज्ञापनयोक्तमिति ग्रन्थविरोधः,तस्मान्न्यायाश्रयेण 'हलचोरादेशो न स्थानिव'दित्ययं पक्षो ग्राह्यः । इह त्वभ्युपेत्य स्थानिवत्त्वं ज्ञापकत्वमाश्रितम् । शिष्यबुद्धिव्युत्पादनाथाऽस्थितोऽपि पक्षः क्व चिदुपन्यस्यत इत्येवं विरोधः परिहार्यः । अग्लोपिग्रहणसामर्थ्याच्च समुदायलोपेऽप्यग्लोप आश्रीयते, केवलाऽग्लोपे प्रतिषेधस्यानर्थक्यात्। खट्वर्श्य इत्यत्र त्वेकः पूर्वपरयोरित्यवयवावेव शब्देन चोदिताविति रपरत्वं प्रवर्तते। तदुक्तं-यो ह्युभयोः षष्ठीनिर्दिष्टयोः स्थाने भवति लभतेऽसावन्यतरतो व्यपदेशमिति ।

**आदीधक इति।** दीधी, णिच् , 'दीधीवेवीटा'मिति (गुणवृद्धि)प्रतिषेधः । ततो ण्वुलि लोपे कृते तस्य स्थानिवद्भावाऽभावाद्यीवर्णयोरिति लोपो न प्राप्नोति । यद्यप्यन्तरङ्गत्वाल्लोपः सिध्यति तथापि वर्णग्रहणस्याऽनन्यार्थस्य प्रयोजनाख्यानायोपक्षेपः। **यत्प्रलुनीह्यत्रेति** । 'तिङ्ङतिङ' इति निघातो 'निपातैर्यद्यदी'ति निषिद्धः । हेरपित्त्वादाद्युदात्तत्वान्न विकरणस्वरो लसार्वधातुकस्वरं बाधत इति श्नास्वराऽभावः । तत्र यणादेशे कृते उदात्तत्वाऽभावात्स्थानिवत्त्वाऽभावाच्च निघातो न प्राप्नोति । **वर्णग्रहणसामर्थ्यादिति** । वर्णग्रहणाद्भूतपूर्वगतिराश्रीयते । अन्तरङ्गत्वात्तु लोपे सिद्धे वर्ण-

उ.]येति । तद्विरुद्धर्थान्तरेत्यर्थः। **इह त्वभ्युपेत्येति**। एवञ्चेदं भाष्यं प्रौढ्येति भावः। अस्थितपक्षाश्रयणे फलमाह—**शिष्यबुद्धीति** । 'अग्लोपिनां नेत्यपि तर्हि प्राप्नोती'त्यारभ्य एकदेश्युक्तिरिदं भाष्यमिति तत्त्वम् । प्रकृतेऽनग्लोपेऽप्यग्लोपित्वाश्रयणे बीजमाह-**अग्लोपिग्रहणसामर्थ्यादिति । आनर्थक्यादिति** । मालामाख्यदममालदित्यादेरनभिधानमिति भावः । णेर्णिचि लिष्यत एव ह्रस्व इति बोध्यम् । 'खट्वर्श्य' इत्यादौ रपरत्वोपपत्तिमाह—**खट्वर्श्य इत्यत्र त्विति । स्थानिवद्भावाभावादिति** । इत उत्तरत्र स्थानिवत्त्वाऽभावज्ञापनादित्यर्थः । **तथापीति** । एतदतिरिक्तप्रयोजनाऽभावबोधनायेति भावः । ननु हेः पित्त्वादनुदात्तत्वमत आह-**हेरिति** । सति शिष्टत्वात्सार्वधातुकस्वरं बाधित्वा विकरणस्वरः स्यादिति कथं हेरुदात्तत्वमत आह—**न विकरणेति** । 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य' इत्युक्तेरिति भावः । भाष्ये-**वर्णग्रहणसामर्थ्यादिति** । अयं भावः-'यीवर्णयो'रि-

१ इतिः क्वचिन्न । २ 'ह्यत्रेति' पा० । ३ 'श्नस्वरा' पा० ।

तीत्येष स्वरो न प्राप्नोती'ति ॥ बहिरङ्गो यणादेशोऽन्तरङ्गः स्वरः । 'असिद्धं बहिरङ्गमन्तरङ्गे' । [ नाग्लोपिशास्वृदिताम् । ]

**भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ७।४।३ ॥**

॥*॥ काण्यादीनां वा ॥*॥ काण्यादीनां वेति वक्तव्यम्[1] ॥ के पुनः काण्यादयः ? ॥ काणिराणिश्राणिभाणिहेठिलोपयः[5] । अचकाणत् अचीकणत् । अरराणत् अरीरणत् । अशश्राणत् । अशिश्रणत्[3] । अबभाणत् अबीभणत् । अजिहेठत् अजीहिठत् । अलुलोपत् अलूलुपत् ॥ [ भ्राजभासभाष ] ॥

**दयतेर्दिगि लिटि ॥ ७।४।९ ॥**

इह[4] अवदिग्ये अवदिग्याते अवदिग्यिरे । दिग्यादेशे कृते द्विर्वचनं प्राप्नोति ।

---

प्र.]ग्रहणं शक्यमकर्तुम्। तत्तु केचिज्ज्ञापकं वर्णयन्ति–उत्तरत्र स्थानिवत्त्वाऽभावस्य, अग्लोपिग्रहणं तु सति प्रयोजने न ज्ञापकमस्याऽर्थस्य । **अन्तरङ्गस्वर इति** । यद्यप्युभयं पदद्वयाश्रयं तथापि पूर्वमुपसर्गेण सम्बन्धः पश्चादधिकरणवाचिनाऽत्र-शब्देनेति यणादेशो बहिरङ्गः । [ **णौ चङ्युपधाया ह्रस्वः** ] ॥

**भ्राज । काण्यादीनां वेति** । आदिःशब्दः प्रकारे । येषां ह्रस्वविकल्पो दृश्यते ते काण्यादयः–काणिराणिश्राणिभाणिहेठिलोपिप्रभृतयः । [ **भ्राजभासभाष** ] ।

**दय । दिग्यादेशे कृत इति** । यद्यपि नाऽप्राप्ते द्विर्वचने दिग्यादेश आरभ्यते तथापि बाध्यबाधकभावे द्वैतं,–लक्षणं वा लक्षणेन बाध्यते, लक्ष्यं वा । तत्र यदा द्विर्वचनशास्त्रं दिग्यादेशशास्त्रेण बाध्यते तदा दिग्यादेशे कृते नास्ति द्विर्वचनप्रसङ्गः ।

---

उ.]त्यत्र परसमाहारद्वन्द्वगर्भेतरेतरयोगः। यकारे इकारे वर्णे च परत इत्यर्थः। तत्र सन्निहितत्वाद्वर्णशब्देनेवर्ण एव । एतत्सामर्थ्याल्लुप्तेऽपि तस्मिन् भूतपूर्वगत्या लोपः । अतएवाऽचः परस्मिन्नित्यत्रादीध्ये इति भाष्यप्रयोगः सङ्गच्छते । वस्तुतस्त्वन्तरङ्गत्वेन णिलोपात्पूर्वं 'यीवर्णयो'रिति लोपे नेदमस्य फलं, तदाह—**अन्तरङ्गत्वात्त्वित्यादिना** । इत उत्तरं स्थानिवत्त्वाभावज्ञापनपरं पूर्वभाष्यं तु एकदेश्युक्तिरित्युक्तमेव, कैयटेन ध्वनितञ्च। एतेन वर्णग्रहणसामर्थ्याच्छ्रूयमाणेवर्ण एव लोपः । तेन 'आदीध्यक' इत्येवेति हरदत्तोक्तमपास्तं, भाष्यविरोधात् । तस्मात्सिद्धान्ते न्यायप्राप्तार्थानुवादकमेव वर्णग्रहणमिति तत्त्वम् । **पूर्वमुपसर्गेणेति** । तदर्थेनेत्यर्थः । विशिष्टक्रियावचनस्य पदस्य पदान्तरेण संबन्धादिति भावः। एवञ्चान्तरङ्गसंबन्धार्थकोपसर्गनिमित्तकं कार्यमन्तरङ्गमिति तात्पर्यम् । [ **नाग्लोपिशास्वृदिताम्** ] ॥

**भ्राजभासभाष** । काण्यादीनां सन्निवेशेन क्वाऽप्यपाठादाह—**प्रकारे इति** । प्रकारः सादृश्यं । केन रूपेणेत्यत आह–**येषामिति** । 'प्रभृतय' इत्यनेन भाष्योक्तानामुपलक्षणत्वं ध्वनयति । अत्र मानं चिन्त्यम् ।

---

१ केचित्तु वक्तव्यमित्यन्तं वार्तिकमित्याहुः । २ 'चेति' पा० । ३ 'अशिश्राणत्' । ४ 'इह च' पा० । ५ 'काणिश्राणिराणि' पा० ।

[॥*॥ तत्र[1] साभ्यासस्य ] ॥*॥ **तत्र साभ्यासस्येति वक्तव्यम् । ननु च द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यति ॥ न सिध्यति ॥ किं कारणम् ?** ॥*॥ दिग्यादेशस्य परत्वात्साभ्यासस्यादेशवचनम् ॥*॥ **दिग्यादेशः क्रियतां द्विर्वचनमिति । परत्वाद्दिग्यादेशेन भवितव्यं, तत्र 'साभ्यासस्ये'ति वक्तव्यम् ॥ एवं तर्हि दिग्यादेशो द्विर्वचनं बाधिष्यते ॥ पुनः प्रसङ्गविज्ञानाद्द्विर्वचनं प्राप्नोति** ॥*॥ पुनः प्र[2]सङ्गविज्ञानादिति चेदमादिभिस्तुल्यम् ॥*॥ **पुनः-प्रसङ्गे[2]विज्ञानादिति चेदमादिभिस्तुल्यमेतद्भवति । तद्यथा अमादिषु कृतेषु पुनःप्रसङ्गाच्छिशीलुङ्नुमो न भवन्त्येवं दिग्यादेशे कृते पुनःप्रसङ्गाद्द्विर्वचनं न भविष्यति ॥ अथ वा विप्र[3]तिषेधे पुनःप्रसङ्ग इत्युच्यते ।**

प्र.] यदा तु लक्ष्यं बाध्यते तदा तस्य द्विर्वचनं दिगिना बाध्यते, दिगेस्तु तत्प्राप्नोति, शास्त्रस्याऽबाधितत्वात् । ततश्च यथा 'चख्या'वित्यादौ ख्याञादेशे कृते द्विर्वचनं भवत्येवं दिग्यादेशे कृते प्राप्नोति । **साभ्यासस्येति ।** तेन कृते द्विर्वचने दिग्यादेशो न च पुनर्द्विवचनं भवति, सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्साभ्यासग्रहणसामर्थ्याच्च । **ननु चेति ।** पूर्वविप्रतिषेधाल्लक्ष्यसिद्धये इष्टक्रमाश्रयणाद्वेति भावः । **न सिध्यतीति ।** 'विप्रतिषेधे परं कार्य'मित्यस्मिन् व्यवस्थाहेतौ सत्येव क्रमो दुर्लभः । तत्र द्विर्वचनस्याऽवकाशः—पपाचेति । कृ[4]ते द्विर्वचने दयतिसद्भावाद्दिग्यादेशस्य । अकृते तु द्विर्वचने उभयप्रसङ्गे परत्वाद्दिग्यादेशः । **एवं तर्हीति ।** नाऽप्राप्ते द्विर्वचने दिग्यादेशस्यारम्भात् । इतरस्तद्बुद्धिपरीक्षार्थं विप्रतिषेधाश्रयेण सकृद्गतावित्येवं दिग्यादेशो द्विर्वचनस्य त्वया बाधक उक्त इत्यारोप्य कथयति—**पुनः प्रसङ्गविज्ञानादिति ।** इतरोऽप्यभ्युपगम्य तावद्विप्रतिषेधं सकृद्गतावित्याश्रित्याह—**पुनः प्रसङ्गादिति चेदिति ।** यथा यूयं ब्राह्मणकुलानि युवां त्वमित्यमादेशे कृते शिशीलुको न भवन्ति एवं दिग्यादेशे कृते द्विर्वचनाऽभावः। इदानीं न्याय्यं परिहारमाह—**अथवेति ।** क चित्पाठो "**नैष युक्तः परिहारो विप्रतिषेधे पुनःप्रसङ्ग इति**" । योऽयं मदु-

उ.] **दयतेर्दिगि । लक्ष्यमिति ।** विधेयं कार्यमित्यर्थः । **नास्ति द्विर्वचनेति ।** शास्त्रस्य बाधितत्वेन पुनः प्रवृत्त्ययोगादिति भावः । **तस्य द्विर्वचनमिति ।** दयेरित्यर्थः । लक्ष्यभेदाल्लक्षणभेद इति भावः । तत्र दृष्टान्तमाह—**ततश्च यथेति । सकृत्प्रवृत्त्येति ।** आदेशकृतलक्ष्यभेदानाश्रयणादिति भावः । तत्र मानमाह—**साभ्यासग्रहणेति । चो हेतौ ।** ननु परत्वाद्दिग्यादेशे कथिते पुनरेवं तर्हीत्यादीना तत्कथनं पुनरुक्तमत आह—**नाप्राप्ते इति ।** कृते द्विर्वचने आदेशस्यावकाश इति त्वयुक्तं, यस्मिन्नवश्यं प्राप्ते यदारभ्यते तत्तस्य बाधकमित्येव सिद्धान्तात् । तदप्राप्तिविषये चारितार्थ्याऽभाव एव चाऽवनवकाशत्वमिति बोध्यम् । **'तर्हि पुनः प्रसङ्गे'** न्याय-

१ इदं क्वचिन्न । 'तत्रे'ति न वार्त्तिकस्थमित्यन्ये । २ 'पुनः प्रसङ्ग इति' 'पुनः प्रसङ्गादिति' च पा० । ३ 'विप्रतिषेधेन' । ४ 'दिग्यादेशस्य कृते द्वि' पा० ।

**विप्रतिषेधश्च द्वयोः सावकाशयोः । इह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते ॥ यदि तर्ह्यनवकाशा विधयो बाधका भवन्ति–बभूव,–भूभावो[1] द्विर्वचनं बाधेत ॥ सावकाशो भूभावः ॥ कोऽवकाशः ?॥ भविता भवितुम् ॥ इह तर्हि 'चक्षिङः ख्याञ्' 'वा लिटी'ति ख्याञ्द्विर्वचनं बाधेत ॥ इह चापि बभूवेति, यदि तावत्स्थाने द्विर्वचनं, भूभावः सर्वादेशः प्राप्नोति, अथ द्विःप्रयोगो द्विर्वचनं, परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति ॥ नैष दोषः, आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु[2] । तत्रार्धधातुकसामान्ये भूभावे कृते यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ॥**

---

**प्र.]**क्तार्थस्य 'दिग्यादेशो द्विर्वचनं बाधिष्यत' इत्यस्य त्वया परिहारोऽभिहितः।'पुनःप्रसङ्गविज्ञानाद्द्विर्वचनं प्राप्नोती'ति स न युक्तः इत्यर्थः । **अनवकाशो दिग्यादेश इति** । पूर्वं सामान्यविशेषभावमनाश्रित्योभयोः सावकाशत्वमुक्तम् । इदानीं तु सामान्यविशेषाश्रयेण नाप्राप्ते द्विर्वचने आरभ्यमाणस्य दिग्यादेशस्यापवादत्वमुच्यते । **यदि तर्हीति** । नन्ववश्यमनवकाशेन बाधकेन भाव्यम्, अन्यथा न कश्चिद्बाधकः स्यात् । एवं तर्ह्यनवकाशाऽभिमता अनवकाशा इत्यर्थो विवक्षितः । नैवाऽयमनवकाशः, कृतेऽपि द्विर्वचने प्रवृत्त्यविघातात् । अथ पुनरेवमप्यनवकाशत्वं मन्यसे तदा लक्ष्यदोषप्रसङ्गः । **बभूवेति** । 'अस्तेर्भू'रिति भूभावः । **सावकाश इति** । यत्र द्विर्वचनाऽभावः । **इहापि तर्हीति** । आचख्याविल्यत्र कृतेऽपि द्विर्वचने ख्याञः प्रवर्तनादनवकाशत्वाऽभावः । यदा तु येन नाप्राप्तिन्यायेनानवकाशत्वमभ्युपगम्यते तदा ख्याञि कृते द्विर्वचनाऽप्रसङ्गः । **सर्वादेश इति** । स्थानिवद्भावादस्तिग्रहणेन ग्रहणात्कार्यकृतत्वाच्च नर्द्विर्वचनाऽभावादिष्टरूपासिद्धिः । **पूर्वस्य श्रवणमिति** । अयं दोषो नोत्सर्गापवाबादपक्षे उपात्तो भूभावस्याऽवकाशदर्शनेनोत्सर्गापवादभावनिराकरणात् । द्वयोस्तु सावकाशयोः परत्वाद्द्विर्वचने कृते बभूवेति न सिध्यतीति प्रतिपाद्यते ।

---

**उ.]**ग्रिमग्रन्थाऽसङ्गतिमाशङ्क्याह–**इतर इति**।**पूर्वं सामान्येति**। 'असंभवे एव स बाधप्रयोजक' इति वार्तिकमते बाधकत्वप्रयोजकतया तमनाश्रित्येत्यर्थः। **इदानीं त्विति** । 'सत्यपि संभवे बाधनं भवती'ति भाष्यमते इत्यर्थः । **कृतेऽपि द्विर्वचने इति** । इदं चिन्त्यमुक्तरीत्या । तद्ध्वनयन्नाह—**अथ पुनरेवमिति** । ख्याञादेशेऽपि सावकाशत्वाऽऽभासं दर्शयति–**आचख्याविल्यत्रेति** । वास्तवमर्थमाह–**यदात्विति**। अयमेव सिद्धान्त इति बोध्यम् । भूभावस्य सावकाशत्वाद्यदि परत्वाद्द्विर्वचनं तदाप्यनिष्टमिति । भाष्ये–**यदीति** । तदाशयमाह—**स्थानिवद्भावादिति** । तदेव दर्शयति–**अयं दोष इति** । भाष्ये–**परस्य भूभावे कृते इति** । 'नानर्थके' इति परिभाषायामनभ्यासविकारे इत्युक्त्याऽभ्यासस्यानर्थकत्वेऽपि उत्तरखण्डस्याऽनर्थकत्वे मानाऽभाव इति भावः । प्रत्ययाऽव्यवहितप्राग्वर्तिनः सर्वत्राऽर्थवत्त्वदर्शनेन तत्त्यागे

---

१ 'भूरादेशः' पा० । २ इदं क्वचिन्न ।

## ऋतश्च संयोगादेर्गुणः ॥ ७।४।१० ॥

॥*॥ संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् ॥*॥ **संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यम्** ॥ **किमर्थम्** ? ॥ **'कृञर्थम्'** । **इहापि यथा स्यात्–संचस्करतुः संचस्करुः** ॥ **यदि संयोगोपधग्रहणं क्रियते नाऽर्थः संयोगादिग्रहणेन, इहापि सस्वरुतुः सस्वरुः–संयोगोपधस्येत्येव सिद्धम्** ॥ **भवेत्सिद्धं सस्वरतुः सस्वरुरिति, इदं तु न सिध्यति–संचस्करतुः संचस्करुरिति** ॥ **किं कारणम्** ? ॥ **'सुटो बहिरङ्गलक्षणत्वात्'** । **बहिरङ्गः सुडन्तरङ्गो गुणः** । **'असिद्धं बहिरङ्गमन्तरङ्गे'** । **संयोगादिग्रहणे तु क्रियमाणे संयोगोपध-**

---

**प्र.]तत्रार्धधातुकसामान्य इति**। द्विर्वचननिमित्तस्य लिटोऽनुपजातत्वादसति विप्रतिषेधे पूर्वं भूभावः, पश्चाल्लिटि परतो द्विर्वचनमित्यदोषः। **यो यतः प्राप्नोतीति**। विषयसप्तमीफलं ज्ञापितं ख्याञ्विधावपि विषयसप्तम्याश्रीयते इति 'येन नाप्राप्त' इत्यस्य न्यायस्यानवतारात् कृते ख्याञि द्विर्वचनं भवत्येव। दिग्यादेशे तु लिटीति परसप्तम्याश्रयणान्नाऽप्राप्ते द्विर्वचने दिगिरारभ्यमाणस्तद्बाधते। [ **दयतेर्दिगिलिटि** ] ॥

**ऋतश्च । संयोगादेरिति** । इहाऽङ्गाधिकारादङ्गं संयोगाद्याश्रीयते न च 'स्कृ'-इत्येतदङ्गं संयोगादि भवतीति भावः । उपधाग्रहणं संयोगस्य देशविशेषोपलक्षणम्,-अल्मात्रस्योपधासंज्ञाविधानात्, संयोगस्योपधात्वाऽसंभवात् । अथ वा संयोगाऽवयवे संयोगशब्दो वर्तते, तस्योपधात्वमस्त्येव । **बहिरङ्गः सुडिति** । 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण । साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि, न चाऽसिद्धस्य विशेषणेन सम्बन्धो भवति' । 'सुट्कात्पूर्व' इत्यत्र तूक्तं—'पूर्वं धातुरुपसर्गेण युज्यते' इति । एवं च सुटोऽन्तरङ्गत्वात्सिद्धो गुण इति नार्थ उपसङ्ख्या-

---

**उ.]**मानाऽभाव इति तात्पर्यम् । **फलमिति** । तेन 'भव्य'मित्यादौ ण्यन्न भवति । **परसप्तम्याश्रयणादिति** । लक्ष्यानुरोधेन क्वचित्परसप्तमी क्वचिद्विषयसप्तमीत्यर्थः । द्विर्वचने तु परसप्तम्येवेति भावः । [ **दयतेर्दिगि लिटि** ] ।

**ऋतश्च सं** । ननु 'चस्कृ' इत्यत्र 'स्कृ' इत्यस्य संयोगादित्वाल्लिद्धत्वात्किं संयोगोपधग्रहणेनेत्यत आह—**इहेति** । नन्वन्मात्रस्योपधात्वेन संयोग उपधा यस्येति सामानाधिकरण्यमनुपपन्नमत आह–**उपधाग्रहणमिति** । अत्र पक्षे उपधाशब्दो गौणः, उत्तरत्र संयोगशब्द इति विशेषः । **साधनेन**—तत्प्रयुक्तकार्येण लिडादिना । एवञ्च तावत्येव निमित्तसद्भावाद्गुणप्राप्तिरन्तरङ्गा । पश्चादुपनतोपसर्गसापेक्षः सुड्बहिरङ्ग इत्यर्थः । **साधनं**–तत्प्रयुक्तकार्यं,**क्रियां निर्वर्तयति**–बोधयति। पदस्यैवार्थबोधकत्वादित्यर्थः।**नचाऽसिद्धस्य**–शब्दादनुपस्थितस्य। **उपसर्गेणेति**।तद्द्योत्यार्थेनेत्यर्थः। एवं हि तत्र भाष्यं–पूर्वंधातुरुपसर्गेणेति न सारं । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण । सत्यमेवमेतत् । यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्त-

---

१ इदं क्वाचित्कम् । २ 'दिग्यारभ्यमाणः' पा० ।

ग्रहणमनन्यार्थं विज्ञायते ॥*॥ ऋतो लिटि गुणाञ्ञ्णिति[1]वृद्धिर्विप्रतिषेधेन ॥*॥ ऋतो लिटि गुणाञ्ञ्णि[ती[2]]ति वृद्धिर्भवति पूर्वविप्रतिषेधेन। ऋतो लिटि गुणस्याऽवकाशः–सस्वरतुः सस्वरुः। ञ्णिति वृद्धरवकाशः–स्वारकः ध्वारकः। इहोभयं प्राप्नोति–सस्वार दध्वार। ञ्णिति वृद्धिर्भवति पूर्वविप्रतिषेधेन॥ ॥*॥पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् ॥*॥ अथ वा पुनः प्रसङ्गाद्गुणे कृते रपरत्वे चाऽत उपधाया इति वृद्धिर्भविष्यति॥ नैष युक्तः परिहारः। पुनः प्रसङ्गो नाम स भवति यत्र तेनैव कृते प्राप्नोति तेनैव चाऽकृते। अत्र खलु गुणे कृते रपरत्वे चाऽत उपधाया इति वृद्धिः प्राप्नोति, अकृते चाऽचोञ्णितीति। तस्मात्सुष्ठूच्यते 'ऋतो लिटि गुणाञ्ञ्णिति वृद्धिः[3] पूर्वविप्रतिषेधेनेति[4]॥

## शृदृप्रां ह्रस्वो वा ॥ ७।४।१२ ॥

किमर्थं 'ह्रस्वो वे'त्युच्यते, न 'गुणो वे'त्युच्येत, तत्रायमप्यर्थो गुण-

प्र.]नेन। संस्कृषीष्ट संस्क्रियत इत्यत्र त्विङ्गुणयोः प्रतिविधेयम्। अनन्यार्थमिति। कृञर्थमेवेत्यर्थः। तत्र वचनादसिद्धत्वं बाध्यते। यथाऽन्यत्रोक्तम्–'आश्रयात्सिद्धत्वं यथा रोरुत्व'इति। पुनः प्रसङ्गविज्ञानाद्वेति। अस्तु परविप्रतिषेधेन गुणस्तस्मिन्कृते वृद्धिर्भविष्यति। अनाश्रितलक्षणभेदं च वृद्धिमात्रमेकत्वेनाश्रित्यैतदुक्तम्। पुनःप्रसङ्गो नामेति। वाचोयुक्तिरेवेयं न सङ्गच्छते लक्षणद्वयस्य परस्परप्रतिषेधादप्रतिप्रत्तौ प्राप्तायां 'विप्रतिषेधे परं कार्य'मित्यनेन परस्मिन् कार्ये विहिते निमित्तसंभवात् पूर्वस्य लक्षणस्य पुनः प्राप्तिः 'पुनःप्रसङ्ग' उच्यते न त्वपूर्वलक्षणप्राप्तिः पुनः-प्रसङ्गः। तस्मादिति। ननु यदि नाम पुनःप्रसङ्गवाचोयुक्तिर्न घटते किमेतावता-गुणरपरत्वयोः कृतयोरुपधावृद्धिर्न प्राप्नोति?, सत्यां च प्राप्तौ किं पूर्वविप्रतिषेधाश्रयेणेत्यत्र चिन्त्यमेतत्। [ ऋतश्च संयोगादेर्गुणः ]।

शृदृ। न गुणो वेत्युच्येतेति। गुण एव पूर्वसूत्रेण नित्यं प्राप्तो विकल्पनीयः,तत्र गुणपक्षे विशशरतुरित्यादि भविष्यति। तदभावपक्षे तु यणादेशेन विशश्रतुरित्यादीति भावः। तत्रायमपीति। न केवलं गुणविधानप्रकरणमनुसृतं भवति

उ.]मभ्यन्तरं कृत्वा धातुः साधनेन युज्यते'। एवञ्च सुडन्वतोऽन्तरङ्गतरक इति संयोगादित्वादेव गुणसिद्धेरिति भावः। प्रतिविधेयमिति। तच्च 'सुड्वा'दिति सूत्रे उक्तम्। चिन्त्यमेतदिति। न च 'जाग्र' इति सूत्रे गुणे कृते उपधावृद्धिर्नेति णल्ग्रहणेन ज्ञापनाददोषः, तस्य जागृमात्रविषयत्वात्। अतएव कृधात्वादौ भावकर्मणोः परत्वाद्गुणे उपदेशग्रहणाच्चिण्वद्भावे कारिष्यत इत्यादौ वृद्धिरुदाहृता भाष्यकारेण। अचोञ्णितीति सूत्रेऽपि स्पष्टमेवोक्तं भाष्ये। तस्मान्नैष युक्तः परिहार इत्यादि भाष्यमेकदेश्युक्तिरिति तात्पर्यम्। पुनःप्रसङ्गविज्ञानादित्यस्यायमर्थः–पुनर्गुणप्रवृत्त्युत्तरं वृद्धेः

१ 'णिद्वृद्धिः' पा०। २ इदं क्वचिन्न। ३ 'णिद्वृद्धिः'। ४ 'विप्रतिषेधेन' पा०।

ग्रहणं न कर्तव्यं भवति प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'ऋतश्च संयोगादेर्गुण' इति ॥*॥ ऋतो ह्रस्वत्वमित्त्वप्रतिषेधार्थम् ॥*॥ ऋतो ह्रस्वत्वमुच्यते। [ किं प्रयोजनम् ? ] ॥ 'इत्त्वप्रतिषेधार्थम्'। इत्त्वं मा भूदिति। 'गुणो वे'तीत्युच्यमाने गुणेन मुक्ते इत्त्वं प्रसज्येत। 'ह्रस्वो वे'ति पुनरुच्यमाने ह्रस्वेन मुक्ते यथाप्राप्तो गुणो भविष्यति ॥ [ शॄदॄप्रां ह्रस्वो वा ] ॥

केऽणः ॥ ७।४।१३ ॥

॥*॥ केऽणो ह्रस्वत्वे तद्धितग्रहणं कृन्निवृत्त्यर्थम् ॥*॥ केऽणो ह्रस्वत्वे तद्धितग्रहणं कर्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'कृन्निवृत्त्यर्थम्'। कृति मा भूत् राका धाकेति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥*॥ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥*॥ [ केऽणः ] ॥

उपसर्गाद्ध्रस्व ऊहतेः ॥ ७।४।२३ ॥

इह कस्मान्न भवति उपोह्यते प्रोह्यते?॥ एकादेशे कृते व्यपवर्गाऽभावात् ॥

---

प्र.]यावल्लाघवमपीत्यर्थः। इत्त्वं प्रसज्येतेति। 'वार्णादाङ्गं बलीय' इति वर्णाश्रयमन्तरङ्गमपि यणं बाधित्वेत्त्वं स्यात्, ह्रस्वविधाने तु यणादेशः सिध्यति। विशश्रवान् विदद्वान् विपप्रवानिति क्वसौ च सिध्यति। गुणविकल्पे त्वेतद्रूपाऽसिद्धिः। क्वसोः कित्त्वेन च प्रतिषेधविषयस्यापि गुणस्य प्रतिषेधः प्रदेशान्तरे भाष्यकृता प्रदर्शितः। उत्तरार्थं च ह्रस्वग्रहणं कर्तव्यमिति लाघवमपि, नास्ति ह्रस्वविधावपि उत्तरत्र ह्रस्वविधानादेकप्रकरणता भवतीति नास्ति पूर्वोक्तो विशेषः। [ शॄदॄप्रां ] ॥

उपसर्गा। प्रोह्यत इति। अकृते एकादेशे ह्रस्वभावाऽभावयोर्विशेषाऽभावादन्तरङ्गत्वाच्च प्रागेकादेशेन भाव्यम्। 'वार्णादाङ्ग'मित्येतत्तु समानाश्रयाङ्ग(वार्ण)-विषयं, तस्मादेकादेशे कृतेऽन्तादिवद्भावेन ह्रस्वप्रसङ्गश्चोद्यते। एकादेशे कृत इति। उपसर्गात्परस्योहतेर्ह्रस्वो विधीयमान एकादेशे कृते भेदाऽभावाद्भेदनिबन्धनपौर्वापर्यानुपपत्त्योभयत आश्रयेऽन्तादिवद्भावाऽभावाच्च ह्रस्वत्वाऽभावः। आ ऊह्यत इति। धातूपसर्गयोरसंहिता नास्ति। तदुक्तम्—"संहितैकपदे नित्या नित्या धातूपसर्गयो"रित्यादि। एवं च लौकिके प्रयोगे विग्रहाऽभावान्नित्येनैकादेशेन भाव्यम्।

---

उ.]शास्त्रान्तरेण प्रसङ्गस्य विज्ञानादिति।एतदजानत एकदेशिनोऽग्रिमग्रन्थइतिबोध्यम्।

शॄदॄप्राम्। अपिशब्दार्थमाह—न केवलमिति। ह्रस्वविधाने त्विति। इत्त्वस्य निमित्ताऽभावादित्यर्थः। क्वसोः कित्त्वेनेति। यद्यपि गुणे सत्यपीष्टं न सिध्यति तथापि तदप्राप्तावपि इष्टाऽसिद्धिरित्यर्थः। [ शॄदॄप्रां ह्रस्वो वा ] ॥

उपसर्गाद्ध्रस्व। समानाश्रयेति। अनित्यत्वात्तदनाश्रित्यैकदेश्युक्तिरियमिति तत्त्वम्। यद्यपि वास्तवपौर्वापर्यं नास्ति तथापि अन्तादिवच्चेति शास्त्रबोधितमार्थसमाजग्रस्तमस्त्येवेत्यत आह—उभयत इति। आ उह्यत इति ह्रस्वपाठनिराकरणा-

---

१ 'ऋतः' पा०। २ तीत्युच्य' पा०। ३ 'ह्रस्वो वेत्युच्य' पा०। ४ह्रस्वाभा'।

एवमपि आ ऊह्यते ओह्यते समोह्यते इत्यत्र प्राप्नोति ॥*॥अणं इति वर्तते ॥*॥

**एतेर्लिङि ॥ ७।४।२४ ॥**

॥ * ॥ एतेर्लिङ्युपसर्गात् ॥ * ॥ **एतेर्लिङ्युपसर्गादिति वक्तव्यम् । इह मा भूत् ईयात्² ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । 'उपसर्गा'दिति वर्तते ॥ एवं तर्ह्याचार्योऽन्वाचष्टे 'उपसर्गादित्यनुवर्तत' इति । नैतदन्वाख्येयमधिकारा अनुवर्तन्त इति । एष एव न्यायो यदुताऽधिकारा अनुवर्तेरन् ॥**

**रीङृतः ॥ ७।३।२७ ॥**

**दीर्घोच्चारणं किमर्थं न 'रिङ्त' इत्येवोच्येत ? ॥ का रूपसिद्धिः—मात्रीयति पित्रीयति ? ॥ 'अकृत्सार्वधातुकयो'रिति दीर्घत्वं भविष्यति ॥ एवं तर्हि सिद्धे**

---

प्र.]एवं च आ उह्यत इति ये ह्रस्वं पठन्ति ते न सम्यङ् न्यायविदः। लौकिकप्रयोगसंपादनाय हि ह्रस्वो विधीयते । तस्मादलौकिकेन प्रक्रियावाक्येनाऽकृतह्रस्वेनाऽऽङः प्रश्लेषप्रदर्शनमात्रं क्रियते, अथ त्वलौकिके प्रक्रियावाक्ये ह्रस्वत्वप्रतिपत्तिरुच्यते तथापि न काचित्क्षतिस्तत्रैकादेशस्यादिवद्भावादूहिग्रहणेन ग्रहणात्समः परस्य ह्रस्व-(त्व)प्रसङ्गः । **अण इति वर्तत इति** ।एवं च रूपाश्रयोऽयं विधिरिति ताद्रूप्यानतिदेशादण्त्वाऽभावाद्ध्रस्वाऽभावः [ **उपसर्गाद्ध्रस्व ऊहतेः** ] ॥

**एतेः । ईयादिति ।** आशिषि लिङ् । अकृत्सार्वधातुकयोर्दीर्घः । **नैतदन्वाख्येयमिति ।** वार्तिककारेणैतदन्वाख्येयं,सर्वाधिकाराणामन्वाख्यानप्रसङ्गात् । वृत्तिकारास्त्वधिकाराणां प्रवृत्तिनिवृत्ती व्याचक्षते । [ **एतेर्लिङि** ] ।

**रीङृतः । दीर्घत्वं भविष्यतीति ।** ननु नाऽप्राप्ते दीर्घे रीङारभ्यमाणस्तस्य बाधकः स्यात् । नैतदस्ति । ऋवर्णस्य बाध्यतां, रीङस्तु कथं बाध्यते ? । न हि तस्य दीर्घे प्राप्ते स आरभ्यते ततश्च द्रव्ये पदार्थे रिङि कृते दीर्घः प्रवर्तत एव । [**रीङृतः**] ।

---

उ.]याह -**धातूपसर्गयोरिति। लौकिकप्रयोगसंपादनायेति** । न हि ह्रस्वप्रवृत्तिमात्रेण लौकिकप्रयोगसंपत्तिरिति भावः । **तस्मादलौकिकेनेति** । अन्तरङ्गत्वेनैकादेशस्यैव युक्तत्वेन तत्र ह्रस्वो न युक्त इतिभावः। न्यायत एव ह्रस्वस्याऽयुक्तत्वमुच्यते, दोषस्तु नास्त्येवेत्याह—**अथत्विति**।चिन्त्यमिदम् । लक्ष्ये लक्षणस्येतिन्यायेन पुनर्ह्रस्वाऽप्राप्तेः । उक्तयुक्त्या ह्रस्वस्याऽप्रवृत्तेश्च । एवञ्चाऽण्ग्रहणानुवृत्तिरप्येकदेशिन एव । **अण्त्वाभावादिति** । अण् च सर्वत्र पूर्वेणैव अणुदित्सूत्रं वर्जयित्वेति सिद्धान्तः ॥

**एतेर्लिङि । आशिषि लिङिति ।** विधिलिङि दीर्घाऽभावादाशीर्लिङ्येव ह्रस्वविषय इति भावः । तदाह—**अकृदिति । वार्तिककारेणेति ।** उक्ताऽनुक्तदुरुक्तचिन्तैव हि तत्कार्यम् । [ **एतेर्लिङि** ] ॥

**रीङृतः । द्रव्ये पदार्थ इति** । तत्पक्षे रिविषयदीर्घशास्त्रस्याऽचरितार्थत्वादिति भावः । वस्तुतो जातिपक्षेऽपि तज्जात्याश्रयसकलव्यक्तिविषयत्वाज्जात्याश्रयण-

---

१ इदं वार्त्तिकमिति गौडाः । भाष्यमित्यन्ये । २ 'इयात्' पा० ।

सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्ये'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ॥ [ रीङृतः ]

## यङि च ॥ ७।४।३० ॥

॥*॥ यङ्प्रकरणे हन्तेर्हिंसायामीट् ॥*॥ यङ्प्रकरणे हन्तेर्हिंसायामीड्वक्त[1]व्यः । जेघ्नीयते । यदीट, अभ्यासरूपं न सिध्यति ॥ एवं तर्हि ॥*॥ यङ्प्रकरणे हन्तेर्हिंसायामीक् ॥ * ॥ एवमप्युपधालोपो न प्राप्नोति ॥ एवं तर्हि ॥*॥ यङ्प्रकरणे हन्तेर्हिंसायां घ्नी ॥*॥ [ यङि च ] ॥

## न च्छन्दस्यपुत्रस्य ॥ ७।४।३५ ॥

अत्यल्पमिदमुच्यते–'अपुत्रस्ये'ति ॥*॥ अपु[2]त्रादीनामिति वक्तव्यम् ॥*॥ इहापि यथा स्यात् जनीयन्तो न्वग्रवः । पुत्रीयन्तः सुदानवः ॥*॥ छन्दसि

---

प्र.] यङिच । यङ्प्रकरण इति । हिंसायास्त्वन्यत्र जङ्घन्यत इत्येव भवति । अभ्यासरूपं न सिध्यतीति । उपधाया लोपस्य स्थानिवत्त्वाद्धनिति द्विर्वचनं प्राप्नोति । एवं तर्हीति । ईको धातुभक्तत्वाद्धिर्वचननिमित्तत्वाऽभावात् स्थानिवत्त्वाऽभावात् । एवमपीति । अजादौ प्रत्यये विधानात् । एवं तर्हीति । प्रक्रियालाघवाय घकाराद्यादेशविधानात्, घ्नीभावविधावभ्यासाच्चेति कुत्वे गौरवप्रसङ्गात् । व्यक्तिपदार्थाश्रयणे च घ्नीभावे कृते द्विर्वचनं प्रवर्तते । आकृतिपक्षे तु दिग्यादेशेनेव घ्नीभावेन द्विर्वचनबाधाऽप्रसङ्गात् ॥ [ यङि च ]

न च्छन्द । जनीयन्त इति । जनमिच्छन्तीति क्यच् । लटः शत्रादेशः । जस् ।

---

उ.] सामर्थ्यादेव प्रवृत्तिः सुलभेति 'द्रव्यपक्षे' इति चिन्त्यमेव । किं चाऽनवकाशत्वादत्र बाधकत्वं स्वस्य पूर्वं प्रवृत्तिरूपम् । तत्र कृते चोत्सर्गो भवत्येव, सति संभवे उत्सर्गे कृतेऽपवादप्रवृत्तियोग्यतायामेवाऽपवादत्वमिति 'गुणो यङ्लुको'रित्यत्र निरूपयिष्यते । वस्तुतः पिबेरदन्तत्वाद्गुणप्रतिषेधप्रत्याख्यानसंभवेन परिभाषायाः प्रयोजनान्तराऽभावाच्च दीर्घोच्चारणं स्पष्टार्थमेवेति बोध्यम् । [ रीङृतः ] ॥

यङि च । जङ्घन्यत इति । कुटिलं गच्छतीत्यर्थः । ननूपधालोपेऽनच्कत्वादभ्यास एव दुर्लभोऽत आह—उपधालोपस्येति । ईटः प्रत्ययभक्तत्वेन द्वित्वनिमित्ताऽज्निमित्तत्वादुपधालोपस्येत्यर्थः । नन्वीक्यपि स्थानिवत्त्वेन हन एव द्वित्वेऽभ्यासरूपाऽसिद्धिस्तदवस्थैवेत्यत आह—ईक इति । अभ्यासाच्चेति । उपलक्षणमेतत्, अन्तरङ्गत्वाद्द्वित्वात्प्राग् 'हो हन्ते'रित्यस्य न्याय्यत्वात् । व्यक्तीति । घ्नीभावविषयद्वित्वशास्त्रस्याऽचारितार्थ्येनेति भावः । 'घ्नीभावे कृते' इत्यस्य 'परत्वा'दित्यादिः । वस्तुतोऽत्र 'यङी'ति विषयसप्तमीति 'चख्या' वित्यादाविव द्वित्वमिति बोध्यम् । [ यङि च ] ॥

---

१ भाष्यकारस्य वार्त्तिककृतो वा न्यासद्वयमेतत् । 'यङ्प्रकरणे' इति च क्वाचित्कम् ।

प्रतिषेधे दीर्घप्रतिषेधः ॥*॥ छन्दसि प्रतिषेधे दीर्घत्वस्य प्रतिषेधो वक्तव्यः । संस्वेदयुः मित्रयुः ॥*॥ न वाऽश्वाघस्याद्वचनमवधारणार्थम् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ [अश्वाघस्याद्वचनमवधारणार्थम्' [1] ]॥ अश्वाघस्याद्वचनमवधारणार्थं भविष्यति—'अश्वाघयोरेव च्छन्दसि दीर्घो भवति [2] नान्यस्ये'ति ॥[ न छन्दस्यपुत्रस्य ]

## शाच्छोरन्यतरस्याम् ॥ ७।४।४१ ॥

॥*॥ श्यतेरित्त्वं व्रते नित्यम् [3] ॥*॥ श्यतेरित्त्वं व्रते नित्यमिति वक्तव्यम् । संशितव्रतः ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥

॥*॥ देवत्रातो [3] गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥*॥

---

प्र.] उगिदचामिति नुम् । छन्दसीति । आनन्तर्यादीत्वस्यैव प्रतिषेधः प्राप्नोति ततश्चापवादेऽपनीते उत्सर्गो दीर्घः प्राप्नोतीति तस्यापि प्रतिषेधो विधेयः । संस्वेदयुरिति । 'क्याच्छन्दसी'त्युप्रत्ययः । न वेति । अश्वाघयोरनेनेत्वे प्रतिषिद्धेऽकृत्सार्वधातुकयोरित्याकारे सिद्धे पुनराद्वचनं नियमार्थमित्यन्येषामाकारो न भवति । [न छन्दस्य]॥

शाच्छो । श्यतेरिति । व्रत इति विषयो निर्दिश्यते न तूत्तरपदं, तेन संशितो ब्राह्मण इत्यत्रापि नित्यमित्त्वं भवति । यद्येवमित्त्वेन व्रतस्य द्योतितत्वात्संशितव्रतइति व्रतशब्दस्य प्रयोगो न प्राप्नोति । नैष दोषः । अन्यत्रापीत्त्वविधानात्संशितशब्दः सामान्यशब्द इति विशेषप्रतिपादनायाऽविरुद्धो व्रतशब्दप्रयोगः। व्रते तु नित्यमित्त्वं विधीयते । न वक्तव्यमिति । साधारणेन न्यायेन सिद्धत्वात् । अतएव तुल्यधर्मणः शब्दानुपन्यस्यति—देवत्रातइति। 'नुदविदोन्दत्रे'ति नत्वं संज्ञायां न भवति । देवग्रहणं संज्ञाविषयोपलक्षणार्थं, तेन 'भवत्रात' इत्यादावपि संज्ञात्वान्नत्वाऽभावः। यदा तु क्रियाशब्दस्त्राणं त्रातं [4] इति, तदा नत्वविकल्पः । गलइति । 'अचि विभाषे'ति लत्वं प्राण्यङ्गे नित्यं भवति, विषे तु 'गर'इति लत्वाऽभावः। क्रियाशब्दे तूभयं भवति 'गरो' 'गल'इति। ग्राह इति। 'विभाषा ग्रह'इति णप्रत्ययो जलचरे नित्यं भवति, ज्योतिषि पचाद्यजेव 'ग्रह'इति। इतियोगइति । 'लक्षणहेत्वोः क्रियाया'इति शतृशानज्विधि'र्हन्तीति पलायते' 'वर्षतीति धावती'त्यादावितिप्रयोगे न भवति ।

---

उ.] न छन्दस्य । जनमिच्छन्तीति । जनीमिच्छन्तीति व्याख्यानं तु भाष्यविरुद्धम् । दीर्घ इति । 'अकृत्सार्वे'त्यनेन । [ न छन्दस्यपुत्रस्य ] ॥

शाच्छो । श्लोके शंसितव्रतनिर्देशाद्व्रतमुत्तरपदमिति भ्रमं निवर्तयति—विषय इत्यादि । शंसितो ब्राह्मण इति । नियमविशेषे यत्नवानुच्यते । विशेषप्रतिपादनायेति । प्रकरणादिना विशेषप्रतीतौ तु क्वचिदप्रयोगोऽपि । न्यायेन—व्यवस्थितविभाषारूपेण। संज्ञायामिति। 'क्तिच्क्तौ च संज्ञाया'मिति क्तः। ज्योतिषि-

---

१ इदं क्वचिन्न। २ 'भविष्यति' । ३ श्लोकवार्त्तिकम् । ४ 'त्रातमिति' पा०।

## दो दद्घोः ॥ ७।४।४६ ॥

॥*॥ अवदत्तं विदत्तं च प्रदत्तं चाऽऽदिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥*॥

**किं पुनरयं तकारान्त आहो स्विद्दकारान्त[1] उत धकारान्तोऽथ वा थकारान्तः ? ॥ कश्चात्र विशेषः ?** ॥*॥ तान्ते दोषो दीर्घत्वं स्यात्[2] ॥*॥ **यदि तकारान्तो 'दस्ती'ति दीर्घत्वं प्राप्नोति** ॥*॥ दान्ते दोषो निष्ठानत्वम्[2] ॥*॥ **अथ दकारान्तो 'रदाभ्यां निष्ठा तो न' इति नत्वं प्राप्नोति ।** ॥*॥ धान्ते[2] दोषो धत्वप्राप्तिः ॥*॥ **अथ धान्तो 'झषस्तथोर्धोऽध' इति धत्वं प्राप्नोति** ॥*॥ थान्तेऽदोषस्तस्मात्थान्तः ॥*॥ **अथ थकारान्तो न दोषो भवति ॥** [ दो दद्घोः ] ।

---

प्र.] **मिथ इति।** एकस्मिन्विषये न विकल्प्यन्ते, किं तु विषयभेदेन । एतच्चाकृतिपक्षे उपपद्यते । तत्र हि सर्वं लक्ष्यमैकध्यमापाद्य उभयमुपदिश्यते, ततश्चोभयं भवतीत्येतावतैव लक्षणस्य व्यापारः । असंकीर्णत्वं तु प्रयोगवशात् प्रतीयते । **गवाक्षइति ।** वातायने 'अवङ्स्फोटायनस्ये'ति नित्यमवङ् भवति, प्राण्यङ्गे तु गोरक्षि गोक्षीति भवति। अन्यत्र तु विकल्पेन। एतच्चोदाहरणं, न व्यवस्थितविभाषाणां परिगणनम्, अन्यासामपि संभवात् ॥ [ **शाच्छोरन्यतरस्याम्** । ]

**दो दत्घोः। अवदत्तमिति।** आदिकर्मग्रहणं प्रदत्तशब्दस्यैव संभवाद्विशेषणम्, अवदत्तादिसिद्ध्यर्थत्वाद्वचनस्य, अवत्तादयोऽपि[3] भवन्ति । तथा चाऽच उपसर्गादित्यस्याऽवकाशः–प्रत्तमवत्तमिति वक्ष्यते। तस्मा'न्निदत्तमिति चेष्यते'इति चशब्देनाऽवत्तादयोऽपीष्यन्ते इति सूच्यते । **किं पुनरिति।** यद्यपि दकारः श्रूयते तथापि संहितायां तकारादीनामप्येतस्य रूपस्य संभवात्प्रश्नः । **तान्ते दोष इति ।** यदा'द'-इत्येतस्य यस्तकारान्त आदेशस्तत्र दीर्घ इति सूत्रार्थस्तदाऽयं दोषः। यदा तु तकारादौ दादेशे दीर्घस्तदा न दोषः । **तस्मात्थान्त इति।** संनिपातपरिभाषाश्रये तु दान्तधान्तयोर्न दोषः ॥ [ दो दत्घोः ] ।

---

उ.] रविगुर्वादिरूपे । क्रियाशब्दे तूभयं बोध्यम् । **ऐकध्यम्**–एकरूपत्वम् । बुद्ध्या युगपदभिसमीक्ष्येत्यर्थः । व्यक्तिपक्षे तु प्रतिलक्ष्यं लक्षणभेदात्सर्वत्रैव भावाऽभावौ प्राप्नुत इति जातिपक्षाश्रयः । व्यक्तिपक्षेऽपि लक्ष्याऽनुरोधात्तद्व्यक्तिविषयकलक्षणानुपप्लव इति वक्तुं शक्यमिति बोध्यम् । जातिपक्षेऽपि लक्ष्याऽनुसार एवावश्यक इति बोध्यम् । **अन्यत्र**–गवाङ्गं गोङ्गमित्यादौ । **अन्यासामपीति ।** 'अजेर्वी'ति सूत्रे भाष्ये तस्य व्यवस्थितविभाषात्वकथनात्।[**शाच्छोरन्यतरस्याम्** ]।

**दो दत्घोः । अवदत्तादिसिद्ध्यर्थत्वादिति ।** 'अच उपसर्गा'दिति तत्वे प्राप्ते एतत्सिद्धिबोधनार्थमेवेदं न तु तन्निवृत्त्यर्थमिति भावः । अतएव वचने चकारबाहुल्यं, तैश्च तस्यापि सङ्ग्रह इत्याहुः । **सन्निपातेति ।** न च वत्वघत्वयोरसिद्धत्वादस्या

---

१ 'तान्तो' पा० । २ श्लोकवार्त्तिकमेतत् । ३ "अवदत्तादयो" पा० ।

## अच उपसर्गात्तः ॥ ७।४।४७ ॥

॥*॥ अच उपसर्गात्तत्वे आकारग्रहणम् ॥*॥ अच उपसर्गात्तत्त्वे आकारग्रहणं कर्तव्यम् ॥ न कर्तव्यम् ॥ अलोऽन्त्यस्य[1] विधयो भवन्तीत्याकारस्य भविष्यति ॥ न सिध्यति ॥ किं कारणम् ? ॥*॥ आदेर्हि परस्य ॥*॥ अत्र हि 'तस्मादित्युत्तरस्यादेः परस्ये'ति दकारस्य प्राप्नोति ॥ नैष दोषः ॥*॥ अवर्णप्रकरणात्सिद्धम् ॥*॥ [ अवर्णप्रकरणात्सिद्धमेतत् ] ॥ अस्येति वर्तते ॥ क्व प्रकृतम् ? ॥ 'अस्य च्वा'विति ॥

यद्यवर्णग्रहणमनुवर्तते दद्भावे दोषो भवति ॥ एवं तर्ह्येवं वक्ष्यामि- 'दोऽद्धो'रिति[2] । दो य आकारस्तस्याऽद्भवति । ततः 'अच उपसर्गात्तः' । 'अस्ये'त्येव ॥ एवमपि सूत्रभेदः कृतो भवति ॥ नाऽसौ[3] सूत्रभेदः । सूत्रभेदं तमुपाचरन्ति[4] यत्र तदेवाऽन्यत्सूत्रं क्रियते भूयो वा, यद्धि[5] तदेवोपसंहृत्य क्रियते नासौ सूत्रभेदः । अथ वा द्वितकारको निर्देशः क्रियते सोऽनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति ॥ इहापि तर्हि प्राप्नोति-अद्भिः,अद्भ्य इति ॥ 'अच' इति वर्तते । तच्चाऽवश्यमज्ग्रहणमनुवर्त्यं-लवाभ्यामित्येवमर्थम् ॥ अथ वा

प्र.] अच उ। यदीति । दाशब्दाकारस्य दद्भावे दत्तमिति संयोगादि श्रूयेत। नासौ सूत्रभेद इति । 'दोषाये'ति शेषः । तदेव सूत्रं लघु क्रियमाणं प्रत्युत गुणं संपादयति। अथ वेति । लघुकरणेऽपि यदि न्यासान्तरत्वात्स्पष्ट एव सूत्रभेद इति मतं तदैवमुत्तरम्-अलोन्त्यस्य द्वावपवादौ आदेः परस्यानेकाल्शित्सर्वस्येति, तयोर्विप्रतिषेधे परं प्रवर्तते । अच इति वर्तत इति। तेनाऽप्शब्दस्य योऽच् तस्मात्परस्य पकारस्य द्वितकार आदेशः,तत्रान्त्यस्य झलां जशोऽन्त इति जश्त्वं,पूर्वस्य झलां झश्

उ.]अप्रवृत्तिः। असिद्धत्वविषयेऽप्यस्याः प्रवृत्तेः 'कृन्मेजन्त'सूत्रे भाष्ये ध्वनितत्वात् । किंच पूर्वत्र कर्तव्येऽसिद्धत्वेऽपि कृते तस्मिन्नस्याऽसिद्धत्वे मानाऽभावः । किं च आतिदेशिकनिमित्तविघाताऽभावमादायाऽस्या अप्रवृत्तौ 'गौरी'त्यादौ संबुद्धिलोपेऽपि स्थानिवद्भावेन ह्रस्वनिमित्तविघाताऽभावात्तत्र सन्निपातपरिभाषाया अतिव्याप्तिपर'कृन्मेजन्त'सूत्रस्थभाष्याऽसङ्गतिः । न च सन्निपातस्याऽशास्त्रीयत्वान्न तत्र स्थानिवत्त्वमिति चेत्, असिद्धत्वेऽपि तुल्यं । किंच तस्य स्थानिवत्त्वे आर्थसमाजग्रस्तः सन्निपातः । अन्यथा 'हे त्रपो' इत्यत्र 'न लुमते'ति निषेधाऽनित्यत्वेऽपि गुणो दुर्लभ एव स्यात् । भाष्यकृतस्त्वयं भावः-'जग्ध'मित्यादौ धत्वसिद्धये तादिकित्सन्निपातनिमित्तकस्य तद्विघातकविधिप्रवर्तकत्वाय तद्विषये तदनित्यत्वमावश्यकमिति । एतत्सूत्रस्थस्थकारनिर्देश एव तज्ज्ञापक इति चेति दिक् ॥

अच उप । नन्वसावपि सूत्रभेद एवेत्यत आह—दोषायेति । ननु त्रितकारनिर्देशे त्रयाणामप्युभयत्र सम्बन्धः स्यादितीष्टविभागाऽलाभोऽत आह-

१ 'त्यन्त्यस्य' । २ 'दोदद्धोः' । ३ 'नैवासौ' । ४ 'कमुपा'। ५ 'यदि' पा०।

त्रितकारको निर्देशः करिष्यते—इहाऽर्थौ द्वावुत्तरार्थश्चैकः ॥*॥ द्यतेरित्त्वादचस्तः ॥*॥ द्यतेरित्त्वादचस्त इत्येतद्भवति विप्रतिषेधेन । द्यतेरित्त्वस्याऽवकाशः निर्दितं निर्दितवान् । अचस्त इत्यस्याऽवकाशः—प्रत्तम् अवत्तम् । इहोभयं प्राप्नोति—नीत्तम् वीत्तम् । 'अचस्त' इत्येतद्भवति विप्रतिषेधेन॥ [अच उप]।

## अपो भि ॥ ७।४।४८ ॥

॥*॥ अपो भि मासश्छन्दसि[1] ॥*॥ अपो भीत्यत्र मासश्छन्दस्युपसङ्ख्यानं कर्तव्यम् । माद्भिरिष्ट्वा इन्द्रो वृत्रहा ॥ अत्यल्पमिदमुच्यते ॥*॥ स्वव-स्स्वतवसोर्मास उषसश्च त इष्यते ॥*॥ स्ववद्भिः, स्वतवद्भिः, समुषद्भिरजायथाः । माद्भिरिष्ट्वा इन्द्रो वृत्रहा ॥ [ अपो भि ]

## सनि मीमाघुरभलभशकपतपदामच इस् ॥ ७।४।५४ ॥

॥*॥ इस्त्वं सनि राधो हिंसायाम् ॥*॥ इस्त्वं सनि राधो हिंसायामिति वक्तव्यम् । प्रतिरित्सति ॥ हिंसायामिति किमर्थम् ? ॥ आरिरात्सति ॥

---

प्र.]झशीति । लवाभ्यामिति । 'लूञ्' ऋदोर'बित्यप् । अस्यापि भकारादौ तः प्राप्नोति । अज्ग्रहणानुवृत्तौ त्वप्शब्दस्य योऽच् तस्मात्परो भकारादौ न कश्चिदस्तीति तत्वाऽभावः । अथ वेति । तत्र तकारद्वयात्मक आदेशः पृथग्विभक्तिक इहार्थो, यस्तु साचकस्सकारः तस्याऽचः स्वरितत्वप्रतिज्ञानादुत्तरत्रानुवृत्तिः । लवाभ्यामित्यादौ तु[4] तत्वं न भवति, पकारलोपादप्शब्दाऽभावात् । न च भूतपूर्वगत्याश्रयो न्याय्यः, अद्भिरित्यादौ सांप्रतिकाऽप्शब्दसंभवे गौणस्याऽग्रहणात् ।अत एव समकक्षत्वाऽभावात्प्रत्ययाऽप्रत्ययोः प्रत्यये संप्रत्यय इति नावतिष्ठते । 'अद्भिः संस्कृत'मिति लिङ्गाद्वा । नहि प्रत्ययस्यैव ग्रहणे'ऽद्भि'रिति निर्देशोपपत्तिः । द्यतेरित्त्वादिति । 'पुरस्तादपवादा' इति न्यायादित्त्वं दद्भावस्यैव बाधकं, न तत्वस्य । ततश्चेत्वतत्वयोर्दद्भावापवादयोर्विप्रतिषेधे परं तत्वं प्रवर्तते । [ अच उपसर्गात्तः ] ॥

अपो । माद्भिरिति । 'पद्दन्नोमा'सिति मासशब्दस्य मासादेशस्य छन्दस्येव विधानान्मासश्छन्दसीति छन्दोग्रहणं न कर्तव्यं, तत्क्रियते[3] भाषायामपि क्व चित्पदादयः प्रयुज्यन्त इति ज्ञापनायेत्याहुः । [ अपो भि ]॥

---

उ.] तत्रेति । पृथग्विभक्तिक इति । 'त' इत्यपेक्षयेत्यर्थः । संयोगान्तलोपस्तु न, अद्वत् । नन्वेवमुत्तरत्राऽज्ग्रहणाननुवृत्तौ 'लवाभ्या'मिति दोषः स्यादत आह—लवभ्यामित्यादौ चेति । नावतिष्ठत इति । तस्याः सिद्धान्तिना क्वाऽप्यानाश्रयणाच्चेत्यपि बोध्यम् । ननु द्यतेरित्त्वं दद्भावस्येव तत्वस्याप्यपवाद इति कथं विप्रतिषेधोऽत आह—पुरस्तादिति । [ अच उपसर्गात्तः ] ॥

अपो भि । छन्दस्येवेति । वृत्तिकृतोक्तां छन्दसीत्यनुवृत्तिमभ्युपेत्येदम् ॥

---

१ 'माश्छन्दसि' पा० । २ इदं क्वचिन्न । ३ 'क्रियमाणं' पा० । ४ 'च' पा० ।

## आप्ज्ञप्यृधामीत् ॥ ७।४।५५ ॥

॥*॥ज्ञपेरीत्त्वमनन्त्यस्य ॥*॥ ज्ञपेरीत्त्वमनन्त्यस्येति वक्तव्यम्। ज्ञीप्सति ॥ तत्तर्हि वक्तव्यम्[1]? ॥ न वक्तव्यम्। लोपोऽन्त्यस्य बाधको भविष्यति ॥ अनवकाशा हि विधयो बाधका भवन्ति सावकाशश्च णिलोपः॥ कोऽवकाशः?॥ कारणा हारणा ॥ एवमपीत्त्वमन्त्यस्य लोपस्य बाधकं स्यात् ॥ अनवकाशा हि विधयो बाधका भवन्ति ॥ ईत्त्वमपि सावकाशम् ॥ कोऽवकाशः? ॥ अनन्त्यः ॥ कथं पुनः सत्यन्त्येऽनन्त्यस्येत्त्वं स्यात्? ॥ भवेद्योऽचाऽङ्गं विशेषयेत्तस्याऽनन्त्यस्य न स्याद्वयं तु खल्वङ्गेनाऽचं विशेषयिष्यामः–'अङ्गस्याऽचो यत्र तत्रस्थस्ये'ति ॥ एवमप्युभयोः सावकाशयोः परत्वादीत्त्वं प्राप्नोति तस्मादनन्त्यस्येति वक्तव्यम् ॥ [ आप्ज्ञप्यृधामीत् ]।

## अत्र लोपोऽभ्यासस्य ॥ ७।४।५८ ॥

॥*॥ अभ्यासस्याऽनचि ॥*॥ अभ्यासस्येति यदुच्यते तदनचि द्रष्टव्यम्। पतापतः चराचरः। चलाचलः वदावदः। [ अत्र लोपोऽभ्यासस्य ]।

---

प्र.] आप्ज्ञ। ज्ञपेरिति। इहाऽज्ग्रहणमनुवर्तते, तेन ज्ञपौ विशेष्यमाणेऽजन्तस्य ज्ञपेरीत्त्वं विधीयमानमलोन्त्यस्येत्यन्त्यस्य प्राप्नोतीति भावः। लोपोऽन्त्यस्येति। ज्ञपिनाऽज्विशेष्यते यथाऽऽप्यृधिभ्याम्। एवं चैकप्रस्थानो[2] विशेषणविशेष्यभावो भवतीति[3]।तत्राऽनन्त्यस्याचः सावकाशमीत्त्वं पूर्वविप्रतिषेधेन णिलोपो बाधते।इतरस्त्वगृहीताभिप्राय आह–अनवकाशा इति। ईत्त्वमेव त्वनवकाशत्वाद्बाधकं प्राप्नोति। एवमपीति। नन्वस्तु परत्वादीत्त्वं, तस्य स्थानिवद्भावाण्णिलोपो भविष्यति, ईत्त्ववचनं त्वनन्त्यस्य श्रवणार्थं स्यात्। नैतदस्ति। 'सकृद्गतौ विप्रतिषेधे यद्बाधित'मिति लोपाऽप्रसङ्गात् ॥ [ आप्ज्ञप्यृधामीत् ] ॥

अत्र लोपो। चराचर इति। 'चरिचलिपतिवदीनामच्याक्चाभ्यासस्ये'ति द्विर्वचनमगागमश्चेति हलादिशेषोऽत्र न भवति। नन्वागागमविधानसामर्थ्याद्धलादिशेषो न भविष्यति। नहि हलादिशेषे आगमस्यादेशस्य वा विशेषोऽस्तीत्यादेश एव आकारो विधेयः स्यात्। नैतदस्ति। सत्यपि हलादि शेषे विगृहीतश्रवणार्थमाग्विधानं स्यादित्यनचीत्युच्यते। [ अत्र लोपोऽभ्यासस्य ]।

---

उ.] आप्ज्ञप्यृ। नन्वच इत्यनुवर्तनादनन्त्यस्यैव भविष्यतीत्यत आह—इहेति। ननु येननेतिन्यायेन अन्तस्य ईत्वं लोपस्य बाधकं स्यादत आह–ज्ञपिनेति। यथाऽऽप्रिति। तयोरजन्तत्वाऽसंभवादिति भावः। पूर्वविप्रतिषेधेनेति। 'ण्यल्लोपा'वित्यनेन। तत्र दीर्घग्रहणेनाऽस्यापि ग्रहादिति भावः। ईत्त्वमेवेति[4]। न तु लोपस्य बाधकत्वं युक्तमित्यर्थः। भाष्ये–एवमपीत्त्वमित्यस्य–एवमीत्त्वमेवेत्यर्थः। अपि-

---

१ इदं क्वचिन्न। २ 'वैकप्रस्था'। ३ इतिः क्वचिन्न। ४ 'मित्त्वमेवे' पा०।

## हलादिः शेषः ॥ ७।४।६० ॥

**किमयं षष्ठीसमासः हलामादिर्हलादिः, हलादिः शिष्यत इति । आहो-स्वित्कर्मधारयः—हल् आदिर्हलादिः, हलादिः शिष्यत इति?॥ कश्चात्र विशेषः?॥** ॥*॥ हलादिःशेषे षष्ठीसमास इति चेदजादिषु शेषप्रसङ्गः ॥*॥ **हलादिःशेषे षष्ठीसमास इति चेदजादिषु शेषः प्राप्नोति । आनक्ष आनक्षतुः आनक्षुः । अस्तु तर्हि कर्मधारयः** ॥*॥ कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तद-भावेऽन्त्यलोपवचनम् ॥ * ॥ **कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे—आद्यस्य हलोऽभावे—ऽन्त्यलोपो वक्तव्यः। आटतुःआटुः।** ॥*॥तस्मादना-दिलोपः॥*॥**तस्मादनादिर्हलुप्यत इति वक्तव्यम्** ॥*॥ उक्तं वा ॥*॥ [उक्तंवा]। **किमुक्तम् ? ॥ 'प्रतिविधास्यते हलादिशेष' इति ॥ अयमिदानीं स प्रतिवि-**

---

प्र.] **हलादिःशेषः । हलामादिरिति** विग्रहप्रदर्शनं विस्पष्टप्रतिपत्त्यर्थम् । **अजादिष्विति** । अजादिष्वभ्यासेषु हलन्तरापेक्षयाऽऽदित्वे हल आश्रीयमाणे शेषः प्राप्नोति । **आनक्षेति** । 'अक्षू व्याप्तौ सङ्घाते चे'त्यस्माल्लिट् । अत्र ककारस्य शेषः प्राप्नोति। कर्मधारये त्वभ्यासापेक्षमादित्वं हलो विज्ञायत इति शेषो न भवति । **आदि-शेषनिमित्तत्वादिति** । शेषशब्दोऽन्यनिवृत्तियुक्तमवस्थानमाहेति यत्रैवाऽभ्यासे प-पाचेत्यादावादेर्हलोऽवस्थानं तत्रैवाऽन्यस्य निवृत्तिः स्यान्नाऽन्यत्र । अवस्थानं हि शब्दार्थत्वात्प्रधानम्।न च प्रधानाऽभावे आनुषङ्गिककार्यप्रवृत्तिः, आनक्षेत्यत्रापि कका-रषकारयोरस्यामवस्थायां निवृत्त्यप्रसङ्गः। षष्ठीसमासेऽप्याटतुः आटुरित्यत्र टकार-स्यादिवद्भावेन शेषप्रसङ्गः। स च प्रागुक्त एव। तत्र यद्याकृतिपक्ष आश्रीयते तदाभ्या-साकृतौ वर्तमानो हलादिः सर्वस्यामभ्यासव्यक्तावनादेर्निवृत्तिं करोतीति दोषाऽभावः। व्यक्तिपक्षे तु यस्यामेवाऽभ्यासव्य ो हल आदेरवस्थानं तत्रैवाऽनादेर्निवृत्तिर्नान्यत्रेति

---

उ.]शब्दस्यैवकारार्थस्य स्थानव्यत्ययात् । [ **आप्ज्ञप्यृधामीत्** ] ॥

**अत्र लोपो । विगृहीतेति** । सवर्णदीर्घबाधनद्वारेत्यर्थः । तत्प्रवृत्तिकाल एव वैयर्थ्योपस्थितेरिति भावः । [ **अत्र लोपोऽभ्यासस्य** ] ॥

**हलादिः शेषः**। भाष्ये—**हलामादिरिति** । नच 'न निर्धारणे' इति निषेधात्स दुर्लभः । त्रितयसन्निधान एव निर्धारणषष्ठीतत्समासनिषेधयोरङ्गीकारेणाऽदोषात् । एवञ्च प्रकृते शेषे पञ्चमेवेति समासो भवत्येवेति भावात् कथमादिशेषनिमित्तत्व-मनादिलोपस्येत्यत आह—**शेषशब्द इति । आनुषङ्गिकेति** । सामर्थ्यसिद्धे-त्यर्थः। अवस्थितस्यावस्थानविधानं हि सामर्थ्यादन्यनिवृत्तिं फलतीति यत्रैव तत्त्रैव तत्फलितमपि स्यादित्यर्थः । **अस्यामवस्थायामिति । कर्मधारयाश्रयणेत्यर्थः । आदिवद्भाव इति** । 'आद्यन्तव'दित्यनेन । **प्रागुक्त एवेति** । प्रागुक्तोदाहरणन्याये-

---

१ 'भावे लोप' । २ 'शेषेनिमित्त' पा० । ३ 'नाद्यलोपः' । ४ 'नाद्योः' पा० ।

धानकालः ॥ इदं प्रतिविधीयते, इदं प्रकृतम् अत्र लोपोभ्यासस्येति । ततो वक्ष्यामि 'ह्रस्वः' । ह्रस्वो भवत्यादेशः । 'अभ्यासस्य लोप' इत्यनुवर्तते । [ अभ्यासस्य च लोपो भवति ] । तत्र ह्रस्वभाविनां ह्रस्वो, लोपभाविनां लोपो भविष्यति । ततो 'हलादिः शेषश्चे'ति ॥ अथ वैवं वक्ष्यामि—'ह्रस्वोऽहल्' । [ 'ह्रस्वः' ] ह्रस्वो भवत्यभ्यासस्येति । ततो'ऽहल' । अहल् च भवत्यभ्यासः । तत 'आदिः शेषः' । आदिःशेषश्च भवत्यभ्यासस्येति । अथ वा योगविभागः करिष्यते । 'ह्रस्वः' । ह्रस्वादेशो भवत्यभ्यासस्य । ततो 'हल्' । हल् च लुप्यतेऽभ्यासस्य । तत 'आदिः शेषः' । आदिःशेषश्च भवत्यभ्यासस्य ॥

## शर्पूर्वाः खयः ॥ ७।४।६१ ॥

॥*॥ शर्पूर्वशेषे खर्पूर्वग्रहणम् ॥*॥ शर्पूर्वशेषे खर्पूर्वग्रहण कर्तव्यम् । खर्पूर्वाः खयः शिष्यन्ते खरो लुप्यन्त इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ उचिच्छिषति । व्युचिच्छिषति । तुकः श्रवणं मा भूदिति ॥ तत्तर्हि वक्त-

प्र.] दोषप्रसङ्गः।ह्रस्वभाविनामिति। ह्रस्वश्रुत्याऽच्परिभाषोपस्थानादजन्तस्याऽभ्यासस्य ह्रस्वो विधीयमानोऽलोऽन्त्यस्येति वचनादच एव दीर्घस्य, ह्रस्वस्य च लोपबाधनार्थो विज्ञायते इति हल्विषय एवादिशेषनिरपेक्षो लोपोऽवतिष्ठते । तत आदेरपि हलो लोपे प्राप्ते तद्बाधनार्थं 'हलादिः शेष' इति सूत्रम् । एतदेव ज्ञापकं लोपविधावलोऽन्त्यपरिभाषा नोपतिष्ठत इत्यानक्षेत्यादावनन्त्यस्यापि हलो लोपो भवतीति न कश्चिद्दोषः । अहल्चेति । अविद्यमानहल्कोऽभ्यासो भवतीत्यर्थः । [ हलादिः शेषः ] ।

शर्पू । उचिच्छिषतीति । 'उछी विवासे' 'छेचे'त्यन्तरङ्गत्वात्तुक् । सन इट् । 'पूर्वत्रासिद्ध'मिति चुत्वस्याऽसिद्धत्वात्–छिशब्दो द्विरुच्यते,तकारस्य शेषे प्राप्ते छशेषार्थं वार्तिकम् । ननु च 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इति चुत्वे कृते छिब्दस्य द्विर्वचने चकारशेषेणैव रूपं सिध्यति । न चेदमस्ति–'निमित्ताऽभावान्नैमित्तिकस्याप्य-

उ.]नोक्त एवेत्यर्थः। के ह्रस्वभाविनस्तत्राह—ह्रस्वश्रुत्येति। 'ह्रस्व' इति सूत्रे 'लोप' इत्यनुवर्तनादभ्यासस्य ह्रस्वो लोपश्च विधीयते। तत्र लोपस्य हल्विषये चरितार्थस्य ह्रस्वेन स्वीयाऽज्विषये बाध इति भावः । अजन्ताभ्यासस्येति । 'अभ्यासावयवस्याऽच' इति वक्तुं युक्तम् । अन्यथा 'क्षी'इत्यादावेव स्यान्नतु 'ययाचे' इत्यादावित्याहुः । आदिशेषनिरपेक्ष इति । तेनाऽऽटतुरित्यादि सिद्धम् । [हलादिः शेषः]॥

शर्पूर्वाः खयः । नचेदमस्तीति । प्रवृत्तस्य निवर्तयितुमशक्यत्वादिति भावः । प्रदर्शयिष्यते इति । 'वृत्तिकारादिभि'रिति शेषः । इदं वार्तिकमपि तदनित्यत्वे ज्ञापकमिति तत्त्वम् । अतधातोःकेनिष्पन्नाऽत्कशब्दादाख्यानणिचि चङि 'त्क'शब्दस्य द्वित्वे आकत्कदिति रूपार्थं वार्तिकमावश्यकमित्यन्ये, तन्न; एतत्प्रत्या-

१ इदं क्वाचित्कम् । २ 'हलादिशेष' पा० । ३ 'आदिशेष' पा० । ४ ह्रस्वो भवत्यादेशो' पा० । ५ इदं क्वाचित्कम् । ६ 'भावे नैमि' पा० ।

व्यम् ? ॥ न वक्तव्यं, चर्त्वे कृते तुग्न भविष्यति ॥ असिद्धं चर्त्वं तस्याऽसिद्धत्वात्तुक्प्राप्नोति॥सिद्धकाण्डे पठितम्—॥ 'अभ्यासजश्त्वचर्त्वमेत्वतुकोः'॥ इति॥

एवमप्यन्तरङ्गत्वात्प्राप्नोति ॥ तस्मात्खपूर्वग्रहणं कर्तव्यम् ॥ न कर्तव्यम् । एत्वतुग्ग्रहणं न करिष्यते 'अभ्यासजश्त्वचर्त्वं सिद्ध'मित्येव ॥*॥आदिशेषप्रसङ्गस्तु ॥*॥ आदिशेषस्तु प्राप्नोति । तिष्ठासति ॥ ननु चाऽनादिशेष आदिशेषं बाधिष्यते ॥ कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ? ॥ असति खल्वपि संभवे बाधनं भवतीति, अस्ति च संभवो यदुभयं स्यात् [इति]॥

यद्यादिशेषोऽपि भवति शर्पूर्वचनमिदानीं किमर्थं स्यात्?॥*॥शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपप्रतिषेधार्थम् ॥*॥ शर्पूर्ववचनं किमर्थमिति चेत्खयां [ लोपप्रतिषेधार्थं, खयां ] लोपो मा भूदिति ॥*॥ व्यपकर्षविज्ञानात्सिद्धम्॥*॥ व्यपकर्षविज्ञानात्सिद्धमेतत् ॥ किमिदं व्यपकर्षविज्ञानादिति ? ॥ अपवाद-

---

प्र.] भाव' इति येन चुत्वं निवर्तेत । एवं तर्हि 'पूर्वत्रासिद्धीयमद्विर्वचन' इत्येतदनित्यम्, 'उभौ साभ्यासस्ये'ति वचनात् । अन्यथा कृतणत्वस्य द्विर्वचने प्राणिणदित्यादि सिध्यतीति किं सूत्रेण ?। तथा चौजढदित्यसिद्धत्वस्योदाहरणं प्रदर्शयिष्यते । इतरो व्यवस्थितस्य समुदायस्य प्रविभज्याऽन्वाख्यानेऽन्तरङ्गत्वं तुकोऽनपेक्ष्याऽकृत एव तुकि द्विर्वचनं मत्वाह—चर्त्वे कृत इति । 'अभ्यासे चर्चे'ति चर्त्वे छस्य कृते तुगभावाद्रूपं सिध्यति । असिद्धमिति । तुकि कर्तव्ये । एवमप्यन्तरङ्गत्वादिति । शब्दनित्यत्वेऽप्युपायानामवश्याश्रयणीयोऽन्तरङ्गबहिरङ्गभावः । एत्वतुग्ग्रहणमिति । तदकरणे हलादिशेषेऽपि कर्त्तव्ये चुत्वलक्षणस्य चर्त्वस्याऽसिद्धत्वाभावात्तकारस्य चकारे कृते हलादिशेषेण निवर्तिते छकारे रूपं सिध्यति। आदिशेषप्रसङ्गस्त्विति । विषयभेदाद्विरोधाऽभावाच्च बाध्यबाधकभावाऽयोगः । शर्पूर्ववचनमिति । अपवादा वाक्या-

---

उ.] ख्यानपरभाष्यविरोधेनैषामनभिधानात् । 'द्विर्वचने' इत्यस्य च द्वित्वे कर्तव्ये कृते चेत्यर्थः । अतएव वाक् वाक् इति भाष्योदाहृतं सङ्गच्छते । अन्यथा चर्त्वस्याऽसिद्धत्वाद्गस्यैव द्वित्वेऽन्त्यस्य 'वावसाने' इति चर्त्वे गस्यैव श्रवणं स्यात् । किंच कृतेऽपि कस्य द्वित्वे चर्त्वस्याऽसिद्धत्वाद्गकारे झशि पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाऽभावे गस्यैव श्रवणं स्यात् । नन्वन्तरङ्गस्तुक्कथमभ्यासचर्त्वं प्रतीक्षेतेत्यत आह—इतर इति । शब्दनित्यत्वेऽपीति । अन्वाख्येयस्य शब्दस्य नित्यत्वेऽपीत्यर्थः । वाक्यपदरूपश्च स नित्यः। उपायानां—तदन्वाख्यायकानां शास्त्रीयाणाम् । अवश्याश्रयणीय इति । अन्यथा न्याय्यमन्वाख्यानं न स्यादिति भावः ।

चुत्वलक्षणस्येति । तच्छब्दस्य द्वित्वेऽभ्यासखण्डे तकारस्थानिकचुत्वेत्यर्थः । 'पूर्वत्राऽसिद्धीयमद्वित्वे' इत्यनेनाऽपि सिद्धेर्व्यर्थमेवैतदिति बोध्यम् । ननु येन नाप्राप्तिन्यायेनाऽस्य हलादिःशेषबाधकत्वात्कथमादिशेषप्रसङ्गोऽत आह— विषयभेदादिति । ननु खयः शेषविधानार्थत्वात्कथमानर्थक्यं शङ्कितमत आह—

विज्ञानात् । अपवादत्वादत्राऽनादिशेष आदिशेषं बाधिष्यते॥ ननु चोक्तं–'कथमन्यस्योच्यमानमन्यस्य बाधकं स्या'दिति॥ इदं तावदयं प्रष्टव्यः–यदि तन्नोच्येत किमिह स्यात् ? ॥ हलादिशेषः ॥ हलादिशेषश्चेन्नाऽप्राप्ते हलादिशेष इदमुच्यते तद्बाधकं भविष्यति ॥ यदप्युच्यते–'असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्या'दिति । सत्यपि संभवे बाधनं भवति, तद्यथा 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याये'ति, सत्यपि संभवे दधिदानस्य तक्रदानं बाधकं भवति । एवमिहापि सत्यपि संभवे अनादिशेष आदिशेषं बाधिष्यते ॥ [ शर्पूर्वाः खयः ] ॥

**दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्याऽऽपनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरिवृजन्मर्मृज्यागनीगन्तीति च ॥ ७।४।६५ ॥**

दाधर्त्तीति किं निपात्यते ? ॥*॥ धारयतेः श्लावभ्यासस्य दीर्घत्वं णिलुक ॥*॥ [ धारयतेः श्लावभ्यासस्य दीर्घत्वं णिलुक निपात्यते ] ॥ अनिपात्यं, तूतुजानवदभ्यासदीर्घत्वं पर्णशुषिवण्णिलुग्भविष्यति ॥*॥ धृङो

प्र.] र्थद्वयं साधयन्ति, अपवादं च विदधत्युत्सर्गञ्च निवर्तयन्ति । तत्रोत्सर्गाभ्युपगम एकार्थवद्वितीयार्थस्य त्यागादानर्थक्यप्रसङ्ग एवेत्यर्थः। 'हलादिः शेष' इत्यनेन खयां निवृत्तौ प्राप्तायामवस्थानविधानादानर्थक्यं नास्ति। **व्यपकर्षविज्ञानादिति**। व्यपकर्षणम्–उत्सर्गस्य निवर्तनं, तस्य विज्ञानं तस्मात्॥ अपवादविधानादित्यर्थः । एकाभ्यासविषयत्वादविरोधेऽप्युत्सर्गापवादभावः । [ **शर्पूर्वाः खयः** ] ।

**दाधर्ति** । **श्लाविति** । 'बहुल छन्दसी'ति शपः श्लुः । **तूतुजानवदिति** । 'तुजादीनां दीर्घोभ्यासस्ये'ति दीर्घत्वमित्यर्थः। **पर्णशुषिवदिति**। यथा पर्णानि शोषयन्ति पर्णशुषो वाता इत्यादौ क्विपि 'बहुलमन्यत्रापि संज्ञाछन्दसो'रिति णिलुक् भवत्येवं दाधर्तीत्यादौ भविष्यतीत्यर्थः । **धृङ इति** । धृङ् अवस्थान इत्यस्य शे प्राप्ते

उ.] **अपवादवाक्यार्थद्वयमिति** । अपवादत्वमेवाऽस्याऽसिद्धमित्युत्तरवादिन आशयमाह–**हलादिः शेष इत्यनेनेति** । ननु विषयभेदे कथमपवादत्वमत आह— **एकाभ्यासेति** । अवयवद्वारा तस्यैव कार्थित्वमिति भावः । विषयभेदेऽपि बाधकत्वदर्शनादस्योपयोगश्चिन्त्यः । 'इदं तावदयं प्रष्टव्य' इत्यादिना विषयभेदेनैव बाधकत्वस्य भाष्ये उक्तेरित्यलम् । [ **शर्पूर्वाः खयः** ] ॥

**दाधर्तिदर्ध** । धृञो ण्यन्तस्य जुहोत्यादिष्वपाठदाह—**बहुलमिति** । 'तुजादीनां दीर्घोऽभ्यासस्येति तूजानव'दिति क्वाचित्कोऽपपाठः । **णिलुगिति** । अतएव गुणाऽभावः। प्रकृते च वृद्ध्यभावः । भाष्ये–**धृङो वेति** । ण्यन्तार्थस्य केव-

१ इतिः क्वाचित्कः। २ भाष्यमिदमित्यन्ये, वार्त्तिकमित्यपरे । ३ 'भ्यासस्य' पा० ।

वा श्लावभ्यासस्य दीर्घत्वं परस्मैपदं च ॥*॥ [ धृङो वा श्लावभ्यासस्यदीर्घत्वं परस्मैपदञ्च निपात्यते । ]॥ अनिपात्यं, तूतुजानवदभ्यासस्य दीर्घत्वं युध्यतिवत्परस्मैपदं(च) भविष्यति॥ दर्धर्तीति किं निपात्यते ? ॥*॥ धारयतेः श्लावभ्यासस्य रुग्णिलुक्च ॥*॥ [ धारयतेः श्लावभ्यासस्य रुक् णिलुक्च निपात्यते । ] ॥ अनिपात्यम् । देवा अदुहवद्धुद्वर्णशुषिवण्णिलुक्च भविष्यति ॥ ॥*॥ धृङो वाऽभ्यासस्य रुक्परस्मैपदञ्च ॥*॥ [ धृङो वाऽभ्यासस्य रुक्परस्मैपदञ्च निपात्यते । ] । अनिपात्यम्, देवा अदुहवद्धुङ्युध्यतिवत्परस्मैपदञ्च भविष्यति ॥ दर्धर्षीति किं निपात्यते ?॥*॥ धारयतेः श्लावभ्यासस्य रुग्णिलुक्च ॥*॥ [ धारयतेः श्लावभ्यासस्य रुग्णिलुक्च निपात्यते ] ॥ अनिपात्यम्, देवा अदुहवद्धुद्वर्णशुषिवण्णिलुक्च भविष्यति ॥*॥ धृङो वाऽभ्यासस्य रुक् परस्मैपदं च ॥*॥ [ धृङो वाऽभ्यासस्य रुक्परस्मैपदञ्च निपात्यते ]॥ अनिपात्यम् । देवा अद्रुहवद्रुङ्युध्यतिवत्परस्मैपदं च भविष्यति ॥

बोभूत्विति किं निपात्यते ? ॥*॥ भवतेर्यङ्लुगन्तस्याऽगुणत्वम् ॥*॥ [ भवतेर्यङ्लुगन्तस्याऽगुणत्वं ] निपात्यते ॥ नैतदस्ति प्रयोजनं, सिद्धमत्राऽगुणत्वं 'भूसुवोस्तिङी'ति ॥ एवं तर्हि नियमार्थं भविष्यति–'अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रे'ति ॥ क्व मा भूत् ? ॥ बोभवतीति ।

तेतिक्ते इति किं निपात्यते ? ॥*॥ तिजेर्यङ्लुगन्तस्यात्मनेपदं ॥*॥ [ तिजेर्यङ्लुगन्तस्यात्मनेपदं ] निपात्यते॥ नैतदस्ति प्रयोजनं, सिद्धमत्रात्मनेपदमनुदात्तङित आत्मनेपदमिति ॥ एतन्नियमार्थं तर्हि भविष्यति 'अत्रव यङ्-

प्र.]व्यत्ययेन शप् । युध्यतिवदिति। 'व्यत्ययो बहुल'मित्यनेनेत्यर्थः । रुडिति । 'शीङो रुट् बहुलं छन्दसी'त्यनेन। बोभवतीति। लिङर्थे लेट् । 'लेटोऽडाटा'वित्यट् । सिद्धमत्रेति । प्रत्ययलक्षणेन यद्यप्यनुदात्तङित इति ङित्त्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तं तथापि लोलूयत इत्यादौ यद्यङन्तादात्मनेपदं तत्प्रत्ययलक्षणं भवत्येव । एतन्नि-

उ.] लार्थस्य च प्रयोगेषु प्रतीतेरिति भावः । व्यत्ययेनेति । अस्य तुदादित्वादिति भावः । शस्यैव व्यत्ययेन श्लुरित्यन्ये । कैयटमते श्लुरपि छान्दसत्वात्कल्प्यः । 'देवा अदुहव'दिति भाष्ये पाठः । 'अदुद्रुवद्द'दित्यपाठः द्रुधातोश्चङि रूपस्य सत्त्वात् । अत्रैव यङ्लुगन्तस्येति भ्वन्तस्याङ्गस्य गुणो नेत्यर्थ इति भावः । प्रत्ययलक्षणेनेति । 'न लुमते'ति तु न, आत्मनेपदस्याऽङ्गकार्यत्वाऽभावात् । तथापि 'लोलूयते' इति प्रत्ययलक्षणसूत्रं विध्यर्थमिति वार्तिककृन्मते इदं । नियमार्थत्वपक्षे तु प्रत्ययाऽसाधारणरूपाऽनाश्रयणात् प्रत्ययलक्षणेनात्मनेपदप्राप्तिरेवेति

१ 'वाऽभ्यासस्य' पा० । २ अयं पाठो लुप्तः । ३ इदं क्वाचित्कम् । ४ 'रुट्णिलुक्' 'लुक्च' पा० । ५ 'रुक्परस्मैपदञ्च' 'रुद्ध' पा० । ६ 'बोभवीतीति' । पा० । ७ 'नियमार्थं भवि' 'नियमार्थं तर्हि भवि' पा० ।

लुगन्तस्यात्मनेपदं भवति नान्यत्रे'ति॥ क्व मा भूत्?॥बेभिदीति चेच्छिदीति॥

द्युतिस्वाप्योः संप्रसारणम् ॥ ७।४।६७ ॥

किमर्थं स्वपेरभ्यासस्य संप्रसारणमुच्यते यदा सर्वेष्वभ्यासस्थानेषु स्वपेः संप्रसारणमुक्तम् ? ॥*॥ स्वापिग्रहणं [1]व्यपेतार्थम् ॥*॥ स्वापिग्रहणं क्रियते ॥ [ किं प्रयोजनं ? ] ॥ 'व्यपेतार्थम्' । व्यपेतार्थोऽयमारम्भः । सुष्वापयिषतीति ॥ अस्ति प्रयोजनमेतत् ? ॥ किं तर्हीति ॥*॥ तत्र क्यजन्ते[2]ऽतिप्रसङ्गः ॥*॥ तत्र क्यजन्ते[2]ऽतिप्रसङ्गो भवति । इहापि—प्राप्नोति स्वापकमिच्छति स्वापकीयति । स्वापकीयतेः सन् सिष्वापकीयिषतीति ॥*॥सिद्धं तु णिग्रहणा[3]त् ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ [ 'णिग्रहणात्[3][4] ॥ ] णिग्रहणं[3] कर्तव्यम् । [ तत्तर्हि णिज्ग्रहणं[4] कर्त्तव्यम् ?॥ ]॥ न कर्तव्यम् । निर्देशादेव हि व्यक्तं ण्यन्त-

प्र.] यमार्थमिति । एवं चाऽदादिषु चर्करीतं परस्मैपदमिति लिङ्गसिद्धानुवादः परस्मैपदग्रहणं । कर्तर्येव चेदमात्मनेपदं नियम्यत इति भावकर्मणोर्यङ्लुगन्तादात्मनेपदं भवत्येव । [ दाधर्तिदर्धर्त्तिदर्धर्षि ] ।

द्युति । किमर्थमिति । स्वपिरेव सौत्रत्वान्निर्देशस्य दीर्घं कृत्वा निर्दिष्ट इति पूर्वः पक्षः । तत्र च लिटि किति 'वचिस्वपी'ति संप्रसारणविधानात्कृतसंप्रसारणस्य द्विर्वचने सत्यभ्यासस्य संप्रसारणं श्रूयते । अकिति लिट्यभ्यासस्येति संप्रसारणं । सनो 'रुदविदे'ति कित्त्वविधानाद्वचिस्वपीति संप्रसारणं। 'स्वपिस्यमिव्येञां यङी'ति यङि च। ङि 'स्वापेश्चङी'ति । व्यपेतार्थमिति । स्वपेः सनादिषु परतो विहितं संप्रसारणं णिचा व्यवधाने न प्राप्नोतीति स्वापेर्ण्यन्तस्याऽभ्यासस्य संप्रसारणं विधीयते। सुष्वापयिषतीति। स्वापयितुमिच्छतीति सन् । इङुणायादेशाःणौ कृतस्य स्थानिवत्त्वात्स्वपेर्ण्यन्तस्यद्विर्वचनमभ्याससंप्रसारणं, 'स्तौतिण्यो'रिति षत्वम्। इतरस्तु ण्यन्तस्य ग्रहणमबुद्ध्वा येन केन चित्प्रत्ययेन व्यवहितस्य स्वपेरभ्याससंप्रसारणमनेनोक्तमिति मत्वाह—अस्ति प्रयोजनमिति । स्वपितीति स्वापकः। तमिच्छतीति क्यच् । निर्देशा-

उ.] विध्यर्थमेवेदम् । लिङ्गसिद्धानुवाद इति । अनुदात्तङिदादिभ्यो यङ्लुकोऽनभिधाने इदम् । तत्सत्त्वे तु वचनमेवेदं बोध्यम् । परेतु तत्सत्त्वेपि 'श्तिपाशपे'त्यस्याऽभावादनुवाद एवाऽयमित्याहुः । कर्त्तर्येवेति । तुल्यजातीयविषयत्वान्नियमस्येत्यर्थः । अतएव प्रत्ययलक्षणसूत्रस्थनियमपक्षेण न फलभेदः । यदि यङ्लुगन्ताद्भावकर्मणोरभिधानमस्ति तदेदम् । [ दाधर्त्तिदर्धर्त्ति ] ॥

द्युतिस्वाप्योः । ननु 'स्वापी'पि ण्यन्तग्रहणात्तस्य च लक्षणान्तरेणाऽसिद्ध्या प्रश्नोऽयुक्तोऽत आह—स्वपिरेवेति । वार्तिके 'व्यपेत'शब्देन व्यवहितमुच्यते । वस्तुतो निमित्तत्वप्रयोजकधर्मेभ्यश्च्युतं व्यपेतं। तत्त्वं चात्र सनो व्यवहितत्वादकित्त्वाच्च बोध्यम् । स्वपेर्ण्यन्तस्येति । अन्यथा ह्रस्वमेवोच्चारयेदिति

१ 'व्यवेतार्थं' पा० । 'कृदन्ते' पा० । ३ 'णिज्ग्रह' पा० । ४ इदं लुप्तं स्यात् ।

स्य ग्रहणमिति ॥ नात्र निर्देशः प्रमाणं शक्यं[1] कर्तुम् । यथा हि निर्देशस्त-थेहापि प्रसज्येत—स्वापं करोति स्वापयति । स्वापयतेः सन्—सिष्वापयिषती-[2]ति । तस्माण्णिग्रहणं कर्तव्यम् । [ द्युतिस्वाप्योः सम्प्रसारणम् ] ॥

## निजां त्रयाणां गुणः श्लौ ॥ ७।४।७५ ॥

॥*॥ त्रिग्रहणानर्थक्यं गणान्तत्वात् ॥*॥ त्रिग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ 'गणान्तत्वात्' । त्रय एव निजादयः ॥*॥ उत्तरार्थं तु ॥*॥ उत्तरार्थं तर्हि त्रिग्रहणं कर्तव्यम्—भृञामित्—त्रयाणां[3] यथा स्यात्—इह मा भूत्—जहाति ॥ [ निजां त्रयाणां गुणः श्लौ ] ॥

## अर्तिपिपर्त्योश्च ॥ ७।४।७७ ॥

अर्तिग्रहणं किमर्थं न 'बहुलं छन्दसी'त्येव सिद्धं, न ह्यन्तरेण छन्दोऽर्तेः श्लुर्लभ्यः ? ॥ एवं तर्हि सिद्धे सति यदर्तिग्रहणं करोति तज्ज्ञापयत्याचार्यो

---

प्र.]देवेति । ण्यन्त एव स्वपिः सूत्रे निर्दिष्ट इत्यर्थः।स्वापं करोतीति।स्वपेर्घञन्तात्तत्करोतीति णिच् । तस्माण्णिग्रहणमिति। 'स्वपेर्णे'रिति वक्तव्यम् । तेन स्वपेर्यो णिर्विधीयते तदन्तस्य ग्रहणाद्घञन्ताण्णेर्ग्रहणाऽभावः।[द्युतिस्वाप्योःसम्प्रसारणम्]।

निजां । त्रिग्रहणमिति । वृत्करणपरिच्छिन्नास्त्रय एव णिजादय इत्यर्थः। एकारे विधातव्ये गुणग्रहणमिक्परिभाषोपस्थानार्थं, तेन हलादिशेषे कृते गुणो भवति,अन्यथा तदपवादो हलः स्थान एकारः स्यात्। अथाऽभ्यासविकारेऽपवादा नोत्सर्गान्बाधन्त इत्याश्रीयते तदा विस्पष्टार्थं गुणग्रहणम् । [ निजां त्रयाणां गुणः श्लौ ] ॥

अर्ति । अर्तिग्रहणमिति । ऋ सृ गताविति जुहोत्यादौ पठ्यते, गा स्तुतौ च । छन्दसीति छन्दोग्रह 'पूर्वेषामपि घृप्रभृतीनां शेष इति छान्दस एवाऽर्तिः श्लु-

---

उ.] भावः । णौ कृतस्येति । वृद्धिरूपस्येत्यर्थः । 'णावच आदेशः स्थानिव'दिति वचनादिति भावः । अस्य प्राप्तिमात्रेणोल्लेखो न त्वत्र फलमस्ति किञ्चित् । 'तस्माण्णिग्रहणं कर्तव्य'मित्यस्य स्वपेर्ण्यन्तस्य ग्रहणमिति व्याख्येयमित्यर्थः। द्युतेस्त्वण्यन्तस्यैव । एवञ्च वृत्त्याद्युक्तमदिद्युतदिति चिन्त्यमेव, भाष्याऽनुक्तत्वात् । अभ्यासाऽङ्गनिमित्तप्रत्यययोरैक्य एवैतत्प्रवृत्तेश्च । अतएव 'दुद्योतकीयिषती'त्यादौ दोष इति बोध्यम् । [ द्युतिस्वाप्योः सम्प्रसाणम् ] ॥

निजां त्रयाणां । तेनेति । गुणोत्तरं वा 'हलादिः शेष' इत्यपि बोध्यम् । विस्पष्टार्थमिति । लिङ्गसिद्धपरिभाषाश्रयणगौरवपरिहारायेत्यर्थः । तदाश्रयणे च हलादिः शेषोत्तरमवशिष्टस्यैकार इति बोध्यम् । भाष्ये—उत्तरार्थमिति । कपिञ्जलाधिकरणन्यायस्त्वत्र शास्त्रे नाश्रीयत इति भावः । [ निजां त्रयाणाम् ] ॥

अर्तिपि । गणान्तस्थं छन्दसीति घृप्रभृतीनां सर्वेषां शेष इति पूर्वपक्षः । इत एव ज्ञापकान्न सर्वशेष इत्युत्तरम् । [ अर्त्तिपिपर्त्योश्च ] ॥

---

१ 'शक्यः' पा०। २ 'सिस्वाप' पा०। ३ 'स्या'दित्यन्तः पाठः क्वाचित्कः ।

'भाषायामर्तेः श्लुर्भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ इयर्तीत्येतत्सिद्धं भवति ॥ [ अर्त्तिपिपर्त्योश्च ] ॥

## गुणो यङ्लुकोः ॥ ७।४।८२ ॥

॥*॥ ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वम् ॥*॥ ऐचोर्यङि दीर्घत्वं प्राप्नोति डोढौक्यते तोत्रौक्यत इति ॥ ननु च ह्रस्वत्वे कृते [गुणो भविष्यति] दीर्घत्वं न भविष्यति ॥ न सिध्यति ॥ किं कारणम् ? ॥ 'ह्रस्वाद्धि परं दीर्घत्वम्' । ह्रस्वत्वं क्रियतां दीर्घत्वमिति किमत्र कर्तव्यम् ? ॥ परत्वाद्दीर्घत्वेन भवितव्यम् ॥* न वाऽभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात् ॥*॥ न वैष दोषः ॥ किं कारणम् ? ॥ 'अभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात्' । 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त' इत्येषा परिभाषा कर्तव्या ॥ कान्येतस्याः परिभाषायाः प्रयोजनानि ? ॥*॥ प्रयोजनं सन्वद्भावस्य दीर्घत्वम् ॥*॥ [ सन्वद्भावस्य दीर्घत्वं प्रयोजनम् ] ॥ अचीकरत् अजीहरत् । सन्वद्भावमपवादत्वाद्दीर्घत्वं न बाधते ॥ * ॥ मान्प्रभृतीनां दीर्घत्वमित्त्वस्य ॥ * ॥ मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्त्वन्न बाधते ॥*॥गणेरीत्वं हलादिशेषस्य॥*॥ गणेरीत्वमपवादत्वाद्धलादिशेषं न बाधते ॥

इदमयुक्तं वर्तते ॥ किमत्राऽयुक्तम् ? ॥ "ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्व"मित्युक्त्वा तत उच्यते–"न वाभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वा"दिति । तस्याश्च परिभाषायाः प्रयोजनानि नामोच्यन्ते–"प्रयोजनं सन्वद्भावस्य दीर्घत्वं, मान्प्रभृतीनान्दीर्घत्वमित्त्वस्य,गणेरीत्वं हलादिशेषस्ये"ति च ।

---

प्र.]विषयः । इयर्तीति । तिप् शप् ।शपः श्लुः। द्विर्वचनम् ।उरदित्यत्वम्। इत्वम् । अभ्यासस्यासवर्ण इति इयङ् । गुणरपरत्वे । [ अर्त्तिपिपर्त्योश्च ] ।

गुणो । ऐचोरिति । ह्रस्वस्याऽवकाशः–ययावित्यादि । दीर्घोऽकित इत्यस्यावकाशः–कृतेऽकृते वा ह्रस्वत्वे–पापच्यत इति । डोढौक्यत इत्यादौ तु परत्वादौकारस्य दीर्घ औकार एव प्राप्नोति। ऐकारस्योदाहरणं–पेपैण्यते इति। ह्रस्वत्वे कृत इति। वक्ष्यमाणोऽभिप्रायः । गुणश्च दीर्घस्याऽपवाद इति दीर्घाऽभावः । इदमयुक्तमिति ।

---

उ.] गुणो यङ्लुकोः । औकार एवेति । ततश्चेगन्तत्वाऽभावाद्गुणस्याऽप्राप्तिः । पेपैण्यत इति । 'पैणृ गतौ'त्यादिधातुः । अस्य स्थाने 'प्रैणृ' इत्यन्ये पठन्ति । तन्मते 'पेप्रैण्यते' इति रूपं । 'वेवेथ्यते' इति पाठे 'विथृ वेथृ याचने' इति धातुः । 'ऐचो'रित्युपलक्षणमिति भावः । 'वेवैत' इति पाठे धातुश्चिन्तनीयः । कैयटप्रामाण्याद्वैप् धातुं कल्पयन्ति, यङ्लुकि च रूपं वदन्ति । ननु कृतेऽपि ह्रस्वत्वे दीर्घः स्यात्परत्वान्न तु गुण इत्यत आह—गुणस्त्विति । दीर्घे नाप्राप्ते गुणारंभादिति

---

१ अयं पाठः क्वचिन्न । २ 'दीर्घत्व'मिति क्वचिन्न । ३ 'दीर्घत्वे' पा० । ४ 'दीर्घत्व' पा० । ५ 'दीर्घत्व'मिति क्वाचित्कम् ।

न[1] खलु सन्वद्भावमपवादत्वाद्दीर्घत्वं बाधते ॥ किं तर्हि ? ॥ परत्वात् । न खल्वपि मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्त्वं बाधते ॥ किं तर्हि ?॥ अन्तरङ्गत्वात् । न खल्वपि गणेरीत्वमपवादत्वाद्धलादिशेषं बाधते ॥ किं तर्हि ?॥ अनवकाशत्वात् ॥ एवं तर्हीयं परिभाषा कर्तव्या–'अभ्यासविकारेषु बाधका न बाधन्त'इति[2] ॥ सा तर्ह्येषा परिभाषा कर्तव्या ? ॥ न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयमकित इति प्रतिषेधं शास्ति ॥

---

प्र.]परत्वाद्दीर्घप्रसङ्गमुक्त्वोत्सर्गापवादयोर्बाध्यबाधकत्वाऽभावःप्रतिपाद्यत इत्ययुक्तं,प्रयोजनमपि किं चिन्न वचनानुरूपमिति पौर्वापर्यविरोधादयुक्तम् ।न च सन्वद्भावमिति। सन्वद्भावस्यावकाशः–अचिक्षणदिति।दीर्घस्यावकाशः–अदीदपदिति।इहोभयं प्राप्नोति–अचीकरदिति । तत्र परत्वाद्दीर्घः प्राप्नोति । न खल्वपीति । सन्प्रत्ययोऽभ्यासदीर्घत्वं च संनियोगेन विधीयत इत्यन्तरङ्गं दीर्घत्वम्, इत्त्वं तु बहिरङ्गं, सनि परतोऽङ्गाधिकारेऽभ्यासस्याऽकारान्तस्य विधानात् । न खल्वपीति। आदेः शेषो विधीयतेऽन्त्यस्य त्वीत्वमिति नास्त्युत्सर्गापवादभावो हलादिशेषे । अभ्यासस्येत्यवयवषष्ठी, 'ई च गण' इत्यत्राऽभ्यासस्येति स्थानषष्ठीति भिन्नविषयावीत्वहलादिशेषौ । अनवकाशत्वात्तु बाधकमीत्वं हलादिशेषस्य । 'निरवकाशा हि विधयः सावकाशान्विधीन् बाधन्त' इति न्यायात् । यदा तु येन नाप्राप्त इति न्यायस्तदाऽस्त्येवोत्सर्गापवादभावः। अभ्यासविकारेषु बाधका इति । बाधकत्वमनपेक्षित[3]निमित्तविशेषमाश्रयणीयमित्य-

---

उ.]भावः।प्रतिपाद्यत इतीति ।अस्याऽयुक्तत्वं हेतोर्वैयधिकरण्यात् । उक्तं प्रयोजनमपीति । तदपि वैयधिकरण्यादयुक्तमित्यर्थः । पौर्वापर्यविरोधादिति । पूर्वापरविरोधादित्यर्थः । अचिक्षणदिति । अत्राऽभ्यासस्य लघुत्वाऽभावाद्दीर्घाऽप्राप्तिः । अदीदपदिति । अत्र 'सन्यत' इत्यादिना सनि कस्य चित्कार्यस्याऽविधानात्सन्वत्त्वाऽप्राप्तिः । दीर्घस्तु सन्वद्भावविषये उच्यते, न तु तेनेति भावः । सन्प्रत्ययोभ्यासेति । ननु सन्प्रत्ययकालेऽभ्यासाऽभावेन कथं दीर्घस्याऽन्तरङ्गत्वमिति चेन्न, अभ्यासस्यावश्यकत्वेन तावत्पर्यन्तं दीर्घस्याऽवस्थानेपि इत्वपर्यन्तमवस्थितौ कारणाऽभावेन तदपेक्षयाऽन्तरङ्गत्वादिति भावः । नन्वनवकाशत्वमेवाऽपवादत्वमित्ययुक्तमेतद आह—आदेः शेष इति । नास्तीति । विषयभेदादिति भावः । विषयभेदेऽप्यनवकाशत्वमात्रं बाधनिमित्तमस्तीति तात्पर्यम् । तदाह—निरवकाशा हीति । उत्सर्गे कृते चरितार्थस्यैवाऽपवादत्वं, गणेरीत्वं तु नाऽभ्यासलोपे कृते प्राप्नोति, 'अलोन्त्यस्ये'त्येकवाक्यतया वाक्यार्थेन णस्यैव तत्प्राप्तेः । एवञ्चाऽनवकाशत्वं स्पष्टमेवेति भावः । शेषपदलभ्यनिवृत्तिबाधकत्वे भाष्यतात्पर्याद्यदा त्वित्यादिः कैयटश्चिन्त्यः । अनपेक्षितेति । अनपेक्षितो निमित्तविशेषो येननाप्राप्तत्वपरत्वादिकं येन तदित्यर्थः । [ गुणो यङ्लुकोः ] ॥

---

१ 'न च' पा० । २ इतिः क्वचिन्न । ३ 'अनपेक्ष्य निमित्तविशेषं' पा० ।

## दीर्घोऽकितः ॥ ७।४।८३ ॥

**अकित इति किमर्थम् ? ॥ यंयम्यते रंरम्यते ॥ अकित इति शक्यमकर्तुम् ॥ कस्मान्न भवति–यंयम्यते रंरम्यत इति ? ॥ नुकि कृतेऽनजन्तत्वात् ॥ अत उत्तरं पठति** ॥*॥अकिद्वचनमन्यत्र किदन्तस्याऽलोऽन्त्यनिवृत्त्यर्थम् ॥*॥ **अकिद्वचनं क्रियते ज्ञापकार्थम् ॥ किं ज्ञाप्यम् ? ॥ एतज्ज्ञापयत्याचार्योऽ-'न्यत्र किदन्तस्याऽभ्यासस्यालोऽन्त्यविधिर्न भवती'ति॥किमेतस्य ज्ञापने प्रयोजनम् ?** ॥*॥ प्रयोजनं ह्रस्वत्वात्वेत्त्वगुणेषु ॥*॥ **[ ह्रस्वत्वाऽत्वेत्त्वगुणेषु प्रयोजनम् ] ॥** ह्रस्वत्वम्–**अवचच्छतुः अवचच्छुः** । अत्वं–**चच्छृदतुःचच्छृदुः ॥** इत्वं–**चिच्छादयिषति चिच्छर्दयिषति** । गुणः–**चेच्छिद्यते चोच्छुप्यते । तुकि कृतेऽनन्त्यत्वादेते विधयो न प्राप्नुवन्ति** ॥ * ॥ विप्रतिषेधात्सिद्धम् ॥*॥ **नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाऽप्येतानि सिद्धानि । तुक् क्रियतामेते विधय इति, किमत्र कर्तव्यं, परत्वादेते विधय इति** ॥*॥ तद-

---

प्र.]र्थः।**यदयमिति**।यथाचाऽकित इति ज्ञापकं तथोत्तरत्र वक्ष्यते।[गुणो यङ्लुकोः]।

**दीर्घो । नुकि कृत इति**। दीर्घश्रुत्याऽच्परिभाषोपस्थानादचाऽभ्यासस्य विशेषणादजन्तस्याऽभ्यासस्य दीर्घो विधीयते । स चालोऽन्त्यस्येति वचनादन्त्यस्याऽचो भवति । **अकिद्वचनमिति** । यद्यचाऽभ्यासो विशेष्यते अकित इति प्रतिषेधोऽनर्थकः स्यात्, तस्मादभ्यासेनाऽज्विशेष्यते ततोऽभ्यासस्येति विशेषणषष्ठीत्यलोऽन्त्यस्येति नोपतिष्ठत इत्येतज्ज्ञाप्यत इत्यर्थः। **अवचच्छतुरिति**। 'छो छेदने'। आत्वं। लिट्। छाशब्दस्य द्विर्वचनम्। अन्तरङ्गत्वात्तुकि कृतेऽनन्त्यस्याप्यचो ह्रस्वत्वम् । **चच्छृदतुरिति** । 'उच्छृदिर् दीप्तिदेवनयोः' । छृदो द्विर्वचनं । छे चेति तुकि कृते उरदित्यत्वम्,अभ्यासेन ऋवर्णस्य विशेषणात्। **चिच्छादयिषतीति**।'छद संवरणे'। **परत्वादेते विधय इति** । न ह्येतेषूदाहरणेषु तुगन्तरङ्गः, प्रत्ययविशेषनिमित्तत्वादभ्या-

---

उ.] दीर्घोऽकितः । ननु कृतेऽपि नुकि अन्तस्य दीर्घः स्यादत आह–**दीर्घश्रुत्येति** । अस्याऽलोन्त्यनिवृत्तौ ज्ञापकत्वमुपपादयति—**यद्यचेति** । **अन्तरङ्गत्वादिति** । वर्णाश्रयत्वेनेति भावः । न च तुकि कृतेऽपि हलादिः शेषेण तन्निवृत्तौ ह्रस्वः सुलभः । अभ्याससंज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा सन्निहितानां हलामेव तेन निवृत्तेः, अत एव 'नुगत' इत्यादि चरितार्थमिति तात्पर्यम् । नन्वन्तरङ्गस्य तुको बहिरङ्गह्रस्वादीनाञ्च विप्रतिषेधोऽयुक्तोऽत आह–**नह्येतेष्विति । प्रत्ययविशेषनिमित्तत्वादिति** । तुग्विधावभ्यासस्यानाश्रयणेऽपि प्रकृतलक्ष्येऽभ्याससापेक्षत्वं तुकः । अत एव 'दध्यानये'त्यादौ यणः संयोगान्तलोपं प्रत्यसिद्धत्वं वार्तिककारेणाश्रितमिति भावः । तुकोऽन्तरङ्गत्वेन 'विप्रतिषेधात्सिद्ध'मित्ययुक्तम्, ह्रस्वादीना-

---

१ "अकित इति शक्यमकर्तुं नुकि कृतेऽनजन्तत्वात्" इतिवार्त्तिकमिति परे ।
२ 'ज्ञाप्यते' पा० । ३ 'लोऽन्त्यस्य विधि' पा० । ४ अयं पाठो लुप्त इति मन्ये ।

न्ताऽग्रहणाद्वा ॥*॥ **अथ वा नैवं विज्ञायते—अभ्यासस्याऽजन्तस्य ऋकारान्तस्याऽकारान्तस्येगन्तस्येति ॥ कथं तर्हि ? ॥ अभ्यासे योऽच्, अभ्यासे य ऋकारः, अभ्यासे योऽकारः, अभ्यासे य इगिति । एवं च कृत्वा दीर्घत्वं प्राप्नोति ॥ एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति ॥ किम् ? ॥ 'अपवादो नुग्दीर्घत्वस्ये'ति ॥ एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'भवत्येषा परिभाषा—अभ्यासविकारेषु बाधका न बाधन्त' इति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥** 'ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्व''मित्युक्तं **स न दोषो भवति ॥** [ दीर्घोऽकितः ] ॥

## नुगतोऽनुनासिकान्तस्य ॥ ७।४।८५ ॥

॥*॥ नुकि यंयम्यते रंरम्यत इति रूपाऽसिद्धिः ॥*॥ **नुकि सति यंयम्यते**

---

प्र.]सस्य,अभ्यासाश्रयत्वात्तुग्घ्रस्वादीनाम् । **तदन्ताग्रहणाद्वेति** । ज्ञापकमन्तरेणापि विशेषणविशेष्यभावे कामचारात्कृतेऽपि तुक्येते विधयःसिध्यन्ति । **एवं च कृत्वेति** । ततश्चाऽकित इति वचनं दीर्घनिषेधाय, न तु ज्ञापनाय । **अपवादो नुगिति** । नाऽप्राप्ते दीर्घे नुक आरम्भात् । **एवं तर्हीति** । 'ओहाक् त्यागे'इत्यस्य निषेधायाऽकित इति न भवति, धातुर्ह्ययं किन्न त्वभ्यासः । ककारो हि 'हश्च व्रीहिकाल्यो'रित्यत्र हाङ्हाकोः सामान्यग्रहणार्थः । [ **दीर्घोऽकितः** ]

**नुग** । तपरकरणं भूतपूर्वस्याऽपि दीर्घस्य निवृत्त्यर्थं, तेन बाभाम्यत इति नुग्न भवति । **नुकि यंयम्यत इति** । अज्झल्परत्वादनुस्वारो न प्राप्नोति । **एवम-**

---

उ.]माङ्गत्वेन बहिरङ्गत्वादित्याशयेन 'तदन्ताग्रहणाद्वे'ति वार्तिकं। तद्व्याचष्टे—भाष्ये—**अथवेति** । अतएव 'चिच्छासति' 'चाच्छायते' इत्यादावन्तरङ्गत्वात्तुक्यभ्यासह्रस्वत्वेत्वदीर्घत्वसिद्धिः। ननु ज्ञापकेनाप्यस्यैवाऽर्थस्योक्तत्वात्पुनरुक्तमेतदत आह—**ज्ञापकमन्तरेणेति** । न्यायसिद्धेऽर्थे लिङ्गमनावश्यकमित्यर्थः । **नाप्राप्ते इति** । अपवादप्रवृत्तौ नोत्सर्गप्रवृत्तिस्तद्विषये इति भावः । नन्वेवं धातोः कित्करणं व्यर्थमत आह—**ककार इति** । अन्यथा तदनुबन्धकपरिभाषया ओहाङो न स्यादिति भावः । अत्र सूत्रेऽनुबन्धानुच्चारणादेतत्परिभाषाया विषयाऽभावेन 'वनो रचे'त्यत्रेव सामान्यग्रहणं ककारं विनाऽपि सूपपादमिति चिन्त्यम् । तस्मात् 'गः स्थकन्' 'प्रुस्त्वः' इति पूर्वोत्तरसाहचर्येण 'हश्चे'ति सूत्रेऽप्यद्यनुबन्धकस्यैव ग्रहणं स्यादिति हाकः कित्त्वमिति कैयटाशयः । ज्ञापकपरभाष्यप्रामाण्याद्धाधातोर्यङ्लुकावेव न स्तः । अन्यथा कित्त्वस्य चारितार्थ्येऽपि द्विःप्रयोगत्वाद्विर्वचनस्याभ्यासस्य कित्त्वमेवेति अकिद्ग्रहणचारितार्थ्यं **स्पष्टमेवेत्यपरे । अन्ये तु** न विद्यते किद्यस्मिन्निति बहुव्रीह्याश्रयणात्तत्र चाऽनन्तरस्येति न्यायेन प्रतिपदोक्तपरिभाषया चाऽभ्यासनिमित्तकित एव ग्रहणमिति न दोषः । अतएव 'चाच्छायत' इत्यादौ माधवाद्युदाहृतो दीर्घः सङ्गच्छते इत्याहुः । [ **दीर्घोऽकितः** ] ॥

**रंरम्यत इति रूपं न सिध्यति** ॥*॥ अनुस्वारागमवचनात्तु[1] सिद्धम् ॥*॥ **[ अनुस्वारागमवचनात्सिद्धमेतत्[2] ] । अनुस्वारागमो वक्तव्यः । एवमपीदमेव रूपं स्यात्– यँयँम्यते[3], इदं न स्यात् यंयम्यते[4]** ॥*॥ पदान्तवच्च[5] ॥ * ॥ **पदान्तवच्चेति वक्तव्यम् । वा पदान्तस्येति** ॥ [नुगतोऽनुनासिकान्तस्य] ।

## रीगृदुपधस्य च ॥ ७।४।९० ॥

॥*॥ रीगृत्वतः संयोगार्थम् ॥*॥ **'रीगृत्वत' इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'संयोगार्थम्' । संयोगान्ताः प्रयोजयन्ति । वरीवृश्च्यते परीपृच्छ्यते बरीभृज्यते** ॥ [ रीगृदुपधस्य च ] ॥

## रुग्रिकौ च लुकि ॥ ७।४।९१ ॥

॥*॥ मर्मृज्यते[6] मर्मृज्यमानास इति चोपसङ्ख्यानम् ॥*॥ **मर्मृज्यते मर्मृज्यमानास इति चोपसङ्ख्यानं कर्तव्यम् । मर्मृज्यते मर्मृज्यमानासः** ॥

## ऋतश्च ॥ ७।४।९२ ॥

**किमिदमृकारग्रहणमङ्गविशेषणमृकारान्तस्याङ्गस्येति, आहो स्विदभ्यासविशेषणमृकारान्तस्याभ्यासस्येति ? ॥ 'अङ्गविशेषण'मित्याह[7] ॥ कथं ज्ञायते ?॥ यदयं तपरकरणं करोति ॥ कथं कृत्वा ज्ञापकं ?॥ नहि कश्चिदभ्यासे दीर्घोऽस्ति यदर्थं तपरकरणं क्रियते ॥ अथाऽङ्गविशेषणे ऋकारग्रहणे सति तपरकरणे किं प्रयोजनम् ? ॥ इह मा भूत्–चाकर्ति चाकीर्तः चाकिरति** ॥

॥*॥ किरतिं चर्करीताऽन्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन सङ्ग्रहः ॥*॥

---

प्र.]पीति । नित्यं परसवर्णः प्राप्नोति, विकल्पेन चेष्यते । **पदान्तवच्चेति** । तेन 'वा पदान्तस्येति' परसवर्णविकल्पः । **[ नुगतोऽनुनासिकासिकान्तस्य ]** ।

**रुग्रिकौ । मर्मृज्यत इति** । 'रुग्रिकौ च लुकी'ति रुग्विधीयमानो न प्राप्नोतीति वचनम् । **[ रुग्रिकौ च लुकि ]** ।

**ऋतश्च । अङ्गविशेषणमिति** । यद्यप्यभ्यासविशेषणे भूतपूर्वदीर्घनिवृत्त्यर्थं तपरकरणं तथापि मुख्यकल्पनासंभवे गौणी कल्पना किमित्याश्रीयत इति मत्वा भाष्यकारेणाऽङ्गविशेषणमृत इत्याश्रितम् । पचतीति. लट उपलक्षणं, तेन च लटि चाकर्तीत्यादि रूपाणि किरतिं यो नयेदित्यर्थः । **प्राप्तिज्ञमिति** । तपरकरणा-

---

उ.] **नुगतो । नित्यं परसवर्ण इति** । 'अनुस्वारस्य ययी'त्यनेन । भाष्ये पूर्वत्र परसवर्णघटित उत्तरत्रानुस्वारघटितः पाठः । **[ नुगतोऽनासिकान्तस्य ]** ॥

**रीगृ । रीगृत्वत इति** । अपूर्वमेवेदं न तु ऋदुपधस्येत्यस्य स्थाने, उत्तरार्थं तस्यावश्यकत्वात् । **[रीगृत्वतः ]** ॥

---

१ तुः क्वचिन्न । २ इदं क्वाचिन्न । ३ 'यंयम्यते' पा० । ४ 'इदन्तु न सिध्यति' पा० । ५ 'यय्यँम्य' पा० । ६ इदं क्वचिल्लुप्तम् । ७ 'रणमङ्गविशे' पा० ।

## सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ७।४।९६ ॥

इह कस्मान्न भवति—अजजागरत् ? ॥ लघुनि चङ्पर इत्युच्यते व्यवहितं चाऽत्र लघु चङ्परम् ॥ इहापि तर्हि न प्राप्नोति—अचीकरत् अजीहरत् ॥ वचनाद्भविष्यति ॥ इहापि वचनात्प्राप्नोति—अजजागरत् ॥ येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् ॥ केन च नाऽव्यवधानम् ? ॥ वर्णेन। एतेन पुनः सङ्घातेन व्यवधानं भवति न भवति च ॥ एवमपि अचिक्षणत्—अत्र न प्राप्नोति॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामित्त्वमिति यदयमत्स्मृदृत्वरप्रथम्रदस्तृस्पशामितीत्त्वबाधनार्थमत्त्वंशास्ति।

॥*॥ सन्वद्भावदीर्घत्वे णेर्णिच्युपसङ्ख्यानम् [णिचा व्यवहितत्वात्] ॥*॥ सन्वद्भावदीर्घत्वे णेर्णिच्युपसङ्ख्यानं कर्तव्यम्। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ॥ किं पुनः कारणं न सिध्यति ?॥ 'णिचा व्यवहितत्वात्' ॥ लोपे कृते नाऽस्ति व्यवधानम् ॥ स्थानिवद्भावाद्व्यवधानमेव ॥ प्रतिषिध्यतेऽत्र

---

प्र.]दङ्गविशेषणमृत इति, तेन रुगादीनां विषयविभागेन या प्राप्तिस्तां जानातीत्यर्थः। प्रारब्ध इति। सङ्ग्रहणं सङ्ग्रहः[3]—साधुशब्दराशिः, स तेन प्रारब्ध इति योग्यतातिशयोद्भावनेन स्तूयते। [ ऋतश्च ] ॥

सन्वल्ल। चङ्पर इति बहुव्रीहिणाऽन्यपदार्थो णिराश्रीयते, तेनाचकमतेति केवले चङि सन्वद्भावो न भवति। नहि णिव्यतिरेकेणाऽन्यश्चङ् परः संभवति, तेन चङ्परे णौ यल्लघु तस्मिन् परतोऽभ्यासस्य सन्वत्कार्यं भवति। इह कस्मादिति। न क्व चिदभ्यासो लघोरनन्तरः संभवतीति सत्सप्तमीविज्ञानादत्रापि प्रसङ्ग इति भावः। इतरः परसप्तम्याश्रये येन नाव्यवधानमित्याश्रीयते इति मत्वाह—लघुनीति। एवंजातीयकानामिति। संयोगव्यवहितानामित्यर्थः। णिचा व्यवहितत्वादिति। चङ्परे णौ यल्लघु तस्मिन् परतोऽभ्यासस्य सन्वद्भावः। यस्मिंश्चाऽत्र णौ लघु-

---

उ.] ऋतश्च। नयेदिति। प्रापयेदित्यर्थः। [ ऋतश्च ] ॥

सन्वल्लघुनि। अग्रिमभाष्योत्थानाय सोपपत्तिकं सूत्रार्थं दर्शयति—चङ्पर इतीति। परशब्दसामर्थ्याच्चङ्परो यस्मादिति बहुव्रीहिः। कर्मधारये हि 'चङी'त्येव वदेदिति भावः। भाष्यस्थचङ्परपदेष्वप्येवमेव। अन्यपदार्थश्च सामर्थ्याण्णिरेव। तदाह—णिरिति। लघ्वक्षरे त्वन्यपदार्थे बहुव्रीह्याश्रयणं, परशब्दश्च व्यर्थः स्यादिति भावः। एवञ्च 'चङ्परे लघुनी'ति वैयधिकरण्येन सम्बन्ध इत्याह—तेनेति। सन्वदिति। 'सन्यत' इत्यादियोगत्रयेण विहितमित्यर्थः। नन्वजजागरदित्यादावभ्यासस्य लघ्वक्षरपरत्वाऽभावात्कथमतिप्रसङ्गोऽत आह—न क्वचिदिति। सत्सप्तमीति। सामर्थ्यात्तस्मिन्निति परिभाषया अप्रवृत्तेरिति भावः। 'अपीपच'दित्यादावपि पका-

---

१ 'वर्णेनैकेन' पा०। २ अयमंशो लुप्तः स्यात्। ३ संग्रहः—व्याडिग्रन्थः।

**स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति ॥ एवमप्यनग्लोप इति प्रतिषेधः प्राप्नोति ॥ वृद्धौ कृतायां लोपस्तत्राऽग्लोप्यङ्गं भवति ॥ एवं तर्हीदमिह संप्रधार्यं–वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ?॥ परत्वाद्वृद्धिः ॥ नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि ॥ लोपोऽप्यनित्यः । अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याऽकृतायाम्[1] । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति ।' उभयोरनित्ययोः परत्वाद्वृद्धिर्वृद्धौ कृतायां लोपस्तत्राऽग्लोप्यङ्गं भवति ॥*॥ मीमादीनां तु लोपप्रसङ्गः ॥*॥ मीमादीनां तु लोपः प्राप्नोति । अमीमपत् ॥*॥ सिद्धं तु रूपातिदेशात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ [ 'रूपातिदेशात्' ] ॥ रूपातिदेशोऽयं–'सनि यादृशमभ्यासरूपं तत्सन्वद्भावेनाऽतिदिश्यते, न च मीमादीनां सन्यभ्यासरूपमस्ति ॥*॥ अग्ला-**

प्र.]र्नासौ चङ्परः, यस्तु चङ्परो न तस्मिन् परतो लघु । **दीर्घविधिं प्रतीति** । ननु दीर्घे कर्तव्ये भवति स्थानिवत्त्वनिषेधः, सन्वद्भावे तु प्राप्नोति स्थानिवद्भावः । एवं तर्हि दीर्घभावित्वादिकारोऽप्युपचाराद्दीर्घशब्देनोच्यत इति भाष्यकारस्याभिप्रायः । किन्तु मुख्ये दीर्घे संभवति गौणग्रहणमयुक्तमिति चिन्त्यमेतत् । **वृद्धौ कृतायां लोप इति** । एतण्णौ चङीति सूत्रेभाष्येण विरुध्यते, तत्र लगिति प्रत्याहारग्रहणसामर्थ्यात्कृतायां वृद्धौ लोप इति प्रतिपादितम् । **मीमादीनां त्विति** । सनि यद्दृष्टमभ्यासकार्यं तदतिदिश्यते, मीमादीनां च सन्यभ्यासस्य लोपो दृष्ट इति सन्वद्भावात्प्राप्नोति । **सिद्धं त्विति** । नेह कार्यमतिदिश्यते अपि तु रूपं, लोपश्चाऽभावः, रूपं लोपो न भवतीति नाऽतिदिश्यते । किं चात्र लोपोभ्यासस्येति ।

उ.] रेण व्यवधानमिति तात्पर्यम् । भाष्ये **व्यवहितं चात्र लघु चङ्पर इति** । चङ्परे णौ यल्लघु तदभ्यासस्य व्यवहितमित्यर्थः । **चङ्परमिति** पाठेऽपि चङ्पदेन तत्परणिर्लक्ष्यत इति न दोषः। **अत्स्मृदृत्वरेति** । अत्र चङ्परे णाविति वर्तते, तद्दीत्वबाधनार्थम्, अन्यथा 'अचिक्षण'दित्यादाविव तत्रापि सन्वत्त्वाभावादित्वाऽप्राप्तौ तद्वैयर्थ्यं **स्पष्टमेवेति** बोध्यम् । नन्वव्यवहितणिचमादाय दीर्घोऽस्त्वत आह–**चङ्परे इति । सन्वद्भावे त्विति** । एवं चेत्त्वं न स्यादिति भावः । सन्वद्भावदीर्घत्वे इति विषयनिर्देशमध्ये दीर्घत्वरूपविषयनिर्देशप्रत्याख्यानपरतया भाष्यस्य युक्तत्वेन कैयटोक्तं चिन्त्यमेव चिन्त्यम् । **एतच्चेति** । ण्यन्ताण्णिविषय एव तत्र तदाश्रितं, ण्यल्लोपाविति पूर्वविप्रतिषेधसत्त्वाच, णिविषये वृद्धौ कृतायां लोप इत्याश्रयितुमशक्यमित्यपि बोध्यं । तस्मादुपसङ्ख्यानमेवाश्रयणीम् । **तत्राऽग्लोप्यङ्गमिति** । तत्रैवात्राप्येकदेशिनो वाक्यं, तस्य तत्रत्यदूषणमपि सूचितमनेनेति बोध्यम् । **सनि यद्दृष्टमिति** । कार्यातिदेशाश्रयेण पूर्वः पक्ष इति भावः । **सन्वद्भावादिति** । सन्वद्भावाल्लोपः प्राप्नोतीत्यर्थः । कार्यातिदेशेऽपि स्वयं परिहरति–**किंचेति । तदभावेत्विति** ।

१ 'त्यकृतायामन्यस्य' पा० । २ इदं व्याख्याभाष्यं लुप्तमित्यन्ये ।

न्यत्वाद्वा सिद्धम् ॥*॥ अथ वा **ण्यन्तमेतदङ्गमन्यत् ॥ लोपे कृते नाऽङ्गान्यत्वम् ॥ स्थानिवद्भावादङ्गमन्यत् ॥ कथमजिज्ञपत् ? ॥ अत्र सन्यपि ण्यन्तस्यैवोपादानमाप्ज्ञप्यृधामीदिति । अत्राऽङ्गान्यत्वाऽभावादभ्यासलोपः स्यात्। तस्मात्पूर्व एव परिहारः'–'सिद्धं तु रूपातिदेशा''दिति ॥**

॥*॥ **इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमाध्यायस्य**

प्र.]अत्रग्रहणं विषयावधारणार्थं, तेनेसादिविषय एवाभ्यासस्य लोपो भवतीति, तदभावे तु सन्वद्भावान्न भवति । **अङ्गान्यत्वादिति** । मीमादीनामङ्गानामभ्यासलोपो विहितः । अयं त्वभ्यासो ण्यन्तानामिति न लुप्यते । **अन्ये तु** व्याचक्षते–चङ्परे **णौ यदङ्गं** तदभ्यासस्य सन्वद्भावो विधीयते, णौ मीमादीन्येवाऽङ्गानि, युक्तस्तद्भक्तत्वात्तद्ग्रहणेन ग्रहणात् । तस्मादङ्गाऽन्यत्वादित्यस्याऽयमर्थः,–येषामङ्गानामच इसादिर्विधीयते तदभ्यासस्याऽत्रग्रहणाद्विषयाधारणाल्लोपो नान्येषामिति, इसादिरहितानाममीमपदित्यादौ च धातोः सन्वद्भाव(भ्यास)दिसाद्यभावादभ्यासलोपाऽभावः । अथ वा सकारादौ सन्यभ्यासलोपो विहितो न सन्मात्रे, सामान्यातिदेशे विशेषानतिदेशाल्लोपाऽभावः ॥ * * * * * * *

॥ * ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते **महाभाष्यप्रदीपे सप्तमाध्यायस्य**

उ.] धातोः सन्वद्भावाऽभावादिस्भावस्य सन्वद्भावेनाऽभावे त्वित्यर्थः । अन्ये तु सादौ सनि तद्विधानात्सामान्यातिदेशे विशेषानतिदेशेनोभयोरपि सन्वद्भावेनाऽभाव इत्याहुः । **मीमादीनामिति** । चङ्निरूपिताङ्गाऽभ्यासस्य ह्यनेन सन्वद्भावः। न च तदङ्गसंबन्ध्यभ्यासस्य लोपोऽत्रलोप इत्यनेनेति नानेन तदतिदेश इति भावः ।

**अन्ये त्विति**। 'चङ्परे णौ यल्लघु' इत्यर्थेऽपि 'अङ्गस्याभ्यास' इत्यत्राङ्गं किं निरूपितं ग्राह्यम् ? चङ्निरूपितं णिनिरूपितं वा?। तत्रोपस्थितत्वात्प्राधान्याच्च णिनिरूपितमेव गृह्यत इति तात्पर्यान्न पूर्वभाष्यविरोधोऽत्रेति बोध्यम् । एवञ्चोक्तव्याख्याऽसङ्गतैवेत्याशयेनाह–**तस्मादिति** । **नान्येषामित्यस्य** व्याख्या–**इसादिरहितानामिति** । इसाद्यभावे हेतुः–**धातोः सन्वद्भावाभावादिति** । मीमादीनां धातूनामच इसादयो विधीयन्ते, न च धातुकार्यं प्रति सन्वद्भावोऽस्ति, अभ्यासकार्यविषयत्वात्तस्येत्यर्थः । **एतत्**–**ण्यन्तमङ्गम्** , अभ्यासलोपविषयादिसादिविशिष्टादङ्गा**दन्यदिति** भाष्याक्षरार्थः । **सकारादाविति** । 'सः सी'त्यनुवर्तनादिति भाव । यद्यपि शाब्दं प्राधान्यं णेस्तथापि ण्यन्तप्रकृतिकतिङर्थद्योतकतया चङोऽप्यार्थं प्राधान्यमेवेति तन्निरूपिताङ्गसम्बन्ध्यभ्यासस्यैव सन्वत्त्वमिति पूर्वोक्तार्थमेवाभिप्रेत्य शङ्कते भाष्ये–**लोपे कृत इति**। सिद्धान्त्येकदेशी आह—**स्थानिवद्भावादिति** । चोदक आह—**कथमजिज्ञपदिति**। अत्र ण्यन्ताङ्गाभ्यासस्यैव 'आप्ज्ञपीतीत्त्वविषयसनन्तसम्बन्धिनो लोप इति भावः। सिद्धान्त्येकदेश्याह–**तस्मादिति**॥

१ 'मेतदङ्गान्यत्' पा० । 'कैय्यट' पा० । ३ 'सप्तमस्य' पा० ।

स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति ॥ एवमप्यनग्लोप इति प्रतिषेधः प्राप्नोति ॥ वृद्धौ कृतायां लोपस्तत्राऽग्लोप्यङ्गं भवति ॥ एवं तर्हीदमिह संप्रधार्यं–वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ?॥ परत्वाद्वृद्धिः ॥ नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि ॥ लोपोऽप्यनित्यः । अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याऽकृतायाम्[1] । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति ।' उभयोरनित्ययोः परत्वाद्वृद्धिर्वृद्धौ कृतायां लोपस्तत्राऽग्लोप्यङ्गं भवति ॥*॥ मीमादीनां तु लोपप्रसङ्गः ॥*॥ मीमादीनां तु लोपः प्राप्नोति । अमीमपत् ॥*॥ सिद्धं तु रूपातिदेशात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ [ 'रूपातिदेशात्'[2] ] ॥ रूपातिदेशोऽयं–'सनि यादृशमभ्यासरूपं तत्सन्वद्भावेनाऽतिदिश्यते, न च मीमादीनां सन्यभ्यासरूपमस्ति ॥*॥ अङ्गा-

प्र.]नासौ चङ्परः, यस्तु चङ्परो न तस्मिन् परतो लघु । दीर्घविधिं प्रतीति । ननु दीर्घे कर्तव्ये भवति स्थानिवत्त्वनिषेधः, सन्वद्भावे तु प्राप्नोति स्थानिवद्भावः । एवं तर्हि दीर्घभावित्वादिकारोऽप्युपचाराद्दीर्घशब्देनोच्यत इति भाष्यकारस्याभिप्रायः । किन्तु मुख्ये दीर्घे संभवति गौणग्रहणमयुक्तमिति चिन्त्यमेतत् । वृद्धौ कृतायां लोप इति । एतण्णौ चङीति सूत्रेभाष्येण विरुध्यते, तत्र लगिति प्रत्याहारग्रहणसामर्थ्यात्कृतायां वृद्धौ लोप इति प्रतिपादितम् । मीमादीनां त्विति । सनि यद्दृष्टमभ्यासकार्यं तदतिदिश्यते, मीमादीनां च सन्यभ्यासस्य लोपो दृष्ट इति सन्वद्भावात्प्राप्नोति । सिद्धं त्विति । नेह कार्यमतिदिश्यते अपि तु रूपं, लोपश्चाऽभावः, रूपं लोपो न भवतीति नाऽतिदिश्यते । किं चात्र लोपोभ्यासस्येति ।

उ.] रेण व्यवधानमिति तात्पर्यम् । भाष्ये व्यवहितं चात्र लघु चङ्पर इति । चङ्परे णौ यल्लघु तदभ्यासस्य व्यवहितमित्यर्थः । चङ्परमिति पाठेऽपि चङ्पदेन तत्परणिर्लक्ष्यत इति न दोषः । अत्स्मृदृत्वरेति । अत्र चङ्परे णाविति वर्तते, तद्धीत्वबाधनार्थम्, अन्यथा 'अचिक्षण'दित्यादाविव तत्रापि सन्वत्त्वाभावादित्वाऽप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम् । नन्वव्यवहितणिचमादाय दीर्घोऽस्त्वत आह–चङ्परे इति । सन्वद्भावे त्विति । एवं चेत्त्वं न स्यादिति भावः । सन्वद्भावदीर्घत्वे इति विषयनिर्देशमध्ये दीर्घत्वरूपविषयनिर्देशप्रत्याख्यानपरतया भाष्यस्य युक्तत्वेन कैयटोक्तं चिन्त्यमेव चिन्त्यम् । एतच्चेति । ण्यन्ताण्णिविषय एव तत्र तदाश्रितं, ण्यल्लोपाविति पूर्वविप्रतिषेधसत्त्वाच्च, णिविषये वृद्धौ कृतायां लोप इत्याश्रयितुमशक्यमित्यपि बोध्यं । तस्मादुपसङ्ख्यानमेवाश्रयणीम् । तत्राऽग्लोप्यङ्गमिति । तत्रैवात्राप्येकदेशिनो वाक्यं, तस्य तत्रत्यदूषणमपि सूचितमनेनेति बोध्यम् । सनि यद्दृष्टमिति । कार्यातिदेशाश्रयेण पूर्वः पक्ष इति भावः । सन्वद्भावादिति । सन्वद्भावाल्लोपः प्राप्नोतीत्यर्थः । कार्यातिदेशेऽपि स्वयं परिहरति–किंचेति । तदभावेत्विति ।

१ 'त्यकृतायामन्यस्य' पा० । २ इदं व्याख्याभाष्यं लुप्तमित्यन्ये ।

न्यत्वाद्वा सिद्धम् ॥*॥ **अथ वा ण्यन्तमेतदङ्गमन्यत्** ॥ **लोपे कृते नाऽङ्गान्यत्वम्** ॥ **स्थानिवद्भावादङ्गमन्यत्** ॥ **कथमजिज्ञपत्** ? ॥ **अत्र सन्यपि ण्यन्तस्यैवोपादानमाज्ञप्यधामीदिति । अत्राऽङ्गान्यत्वाऽभावादभ्यासलोपः स्यात्। तस्मात्पूर्व एव परिहारः**'–'सिद्धं तु रूपातिदेशा''**दिति** ॥

॥*॥ **इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण**महाभाष्ये सप्तमाध्यायस्य

प्र.]अत्रग्रहणं विषयावधारणार्थं, तेनेसादिविषय एवाभ्यासस्य लोपो भवतीति, तदभावे तु सन्वद्भावान्न भवति । **अङ्गान्यत्वादिति** । मीमादीनामङ्गानामभ्यासलोपो विहितः । अयं त्वभ्यासो ण्यन्तानामिति न लुप्यते । **अन्ये तु** व्याचक्षते–चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वद्भावो विधीयते, णौ मीमादीन्येवाऽङ्गानि, युक्स्तद्भक्तत्वात्तद्ग्रहणेन ग्रहणात् । तस्मादङ्गाऽन्यत्वादित्यस्याऽयमर्थः,–येषामङ्गानामच इसादिर्विधीयते तदभ्यासस्याऽत्रग्रहणाद्विषयाधारणाल्लोपो नान्येषामिति, इसादिरहितानाममीमपदित्यादौ च धातोः सन्वद्भावादिसाद्यभावादभ्यासलोपाऽभावः । अथ वा सकारादौ सन्यभ्यासलोपो विहितो न सन्मात्रे, सामान्यातिदेशे विशेषानतिदेशाल्लोपाऽभावः ॥ * * * * * * *

॥ * ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते **महाभाष्यप्रदीपे सप्तमाध्यायस्य**

उ.] धातोः सन्वद्भावाऽभावादिस्भावस्य सन्वद्भावेनाऽभावे त्वित्यर्थः । अन्ये तु सादौ सनि तद्विधानात्सामान्यातिदेशे विशेषानतिदेशेनोभयोरपि सन्वद्भावेनाऽभाव इत्याहुः । **मीमादीनामिति** । चङ्निरूपिताङ्गाऽभ्यासस्य ह्यनेन सन्वद्भावः। न च तदङ्गसंबन्ध्यभ्यासस्य लोपोऽत्रलोप इत्यनेनेति नानेन तदतिदेश इति भावः ।

**अन्ये त्विति**। 'चङ्परे णौ यल्लघु' इत्यर्थेऽपि 'अङ्गस्याभ्यास' इत्यत्राङ्गं किं निरूपितं ग्राह्यम् ? चङ्निरूपितं णिनिरूपितं वा ?। तत्रोपस्थितत्वात्प्राधान्याच्च णिनिरूपितमेव गृह्यत इति तात्पर्यान्न पूर्वभाष्यविरोधोऽत्रेति बोध्यम् । एवञ्चोक्तव्याख्याऽसङ्गतैवेत्याशयेनाह–**तस्मादिति** । **नान्येषामित्यस्य** व्याख्या–**इसादिरहितानामिति** । इसाद्यभावे हेतुः–**धातोः सन्वद्भावाभावादिति** । मीमादीनां धातूनामच इसादयो विधीयन्ते, न च धातुकार्यं प्रति सन्वद्भावोऽस्ति, अभ्यासकार्यविषयत्वात्तस्येत्यर्थः । **एतत्**–ण्यन्तमङ्गम् , अभ्यासलोपविषयादिसादिविशिष्टादङ्गा**दन्यदिति** भाष्याक्षरार्थः । **सकारादाविति** । 'सः सी'त्यनुवर्तनादिति भाव । यद्यपि शाब्दं प्राधान्यं णेस्तथापि ण्यन्तप्रकृतिकतिङर्थद्योतकतया चङोऽप्यार्थं प्राधान्यमेवेति तन्निरूपिताङ्गसम्बन्ध्यभ्यासस्यैव सन्वत्त्वमिति पूर्वोक्तार्थमेवाभिप्रेत्य शङ्कते भाष्ये–**लोपे कृत इति**। सिद्धान्त्येकदेशी आह—**स्थानिवद्भावादिति** । चोदक आह—**कथमजिज्ञपदिति**। अत्र ण्यन्ताङ्गाभ्यासस्यैव 'आप्ज्ञप्यृधामीत्' इतीत्त्वविषयसनन्तसम्बन्धिनो लोप इति भावः। सिद्धान्त्येकदेश्याह–**तस्मादिति**॥

१ 'मेतदङ्गान्यत्' पा० । 'कैय्यट' पा० । ३ 'सप्तमस्य' पा० ।

चतुर्थे पादे प्रथममाह्निकम् ॥ चतुर्थः पादश्च समाप्तः ॥*॥

॥ सप्तमोऽध्यायः समाप्तः ॥

प्र.] चतुर्थे पादे प्रथममाह्निकम् ॥*

❀ पादश्चतुर्थोऽध्यायश्च[1] सप्तमः समाप्तः । ❀

उ.] इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते सप्तमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

पादोऽद्ध्यायश्च समाप्तः ॥ ७।४।१ ॥

१ 'पादोऽध्यायश्च समाप्तः' पा० । २ 'सप्तमस्य चतुर्थे' इति पाठान्तरम् ।

* * * *

इति पण्डितराजश्रीस्नेहिरामशास्त्रिणां पौत्रेण, न्यायाचार्य—
पण्डितवरश्रीशिवनारायणशास्त्रिणां पुत्रेण श्रीगुरुप्रसादशास्त्रिणा
सङ्कलिता टिप्पणी ।